सङ्गमाः कोपनाश्चैव कुरुनागाश्चमारिषाः ।
ध्वजाद्युत्सवसङ्केता संश्रयास्सर्वनिर्णयाः ॥ ५४॥
आयसाः कोकिलाश्श्रेयाः परमर्मापहास्तथा ।
तथैव विन्ध्यमालीनाः कुलिन्दा वल्कलैस्सह॥ ५५॥
पल्लवा मालवाश्चैव तथैव परिमल्लकाः ।
कपिजाः कुक्कुटाश्चैव मण्डकाः करुणास्तथा ॥ ५६॥
मूषपास्स्थलपालाश्च सपिकास्स्फूर्तिरञ्जकाः ।
अल्पेषास्स्थविराश्चैव भूषपास्तेनपास्तथा ॥ ५७॥
मीक्षकाश्च पताकाश्च तङ्कणाः परतङ्कणाः ।
उत्तराश्चापरे म्लेच्छाः जना भरतसत्तम ॥ ५८॥
व्यसनाश्च सकाम्भोजा दारुणा सिद्धजातयः ।
सरद्रुहाः कुञ्जराश्च यवनाः पावनैस्सह ॥ ५९॥
तथैव रामाश्चीनाश्च तथैव दशमालिकाः ।
क्षत्रियोपनिवेश्याश्च वैश्यशूद्रकुलानि च ॥ ६०॥
शूद्राः क्षिलाश्च दरदाः काश्मीराः पशुभिस्सह ।
कालकाश्च तुषाराश्च पल्लवा गिरिगह्वराः ॥ ६१॥
आत्रेयास्सभरद्वाजास् तथैव च सुयोषितः ।
औपगाश्च कलिङ्गाश्च त्रिगर्ता वंशजातयः ॥ ६२॥
कारस्कराश्च वङ्गाश्च आन्ध्राश्च द्रमिलास्तथा ।

चोलाश्च केरलाश्चैव तथा पाण्ड्यास्ससिंहलाः ॥ ६३॥
नाजरा भागवर्तांश्च तथैव करञ्जनाः ।
उद्देशमात्रेण मया देशास्सङ्कीर्तिता विभो ॥ ६४॥
एषां बलं गुणं चात्र त्रिवर्गस्य महाफलम् ।
दुह्याद्धेनुः काममिव भूमिस्सम्यगनुष्ठिता ॥ ६५॥
तस्या गृध्नन्ति राजानश् शूरा धर्मार्थकोविदाः ।
ते त्यजन्त्याहवे प्राणान् रसगृध्नास्तरस्विनः ॥ ६६॥
देवमानुषकार्याणां कामं भूमिः परायणम् ।
अन्योन्यं तेऽवलुम्पन्ति सारमेया इवामिषम् ॥ ६७॥
राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् ।
न जातु तृप्तिः कामानां विद्यतेऽद्य हि कस्यचित् ॥ ६८॥
तस्मात् परिग्रहाद्भूमेर् यतन्ते भुवि पाण्डवाः ।
साम्ना दानेन भेदेन दण्डेनैव च पार्थिव ॥ ६९॥
पिता माता च पुत्राश्च खादन्ति नरपुङ्गव ।
भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शिनाम् ॥ ७०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ६१ ॥ जम्बूखण्डविनिर्माणपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ७०॥श्लोकाः]

---

## ॥ दशमोऽध्यायः ॥

चतुर्युगवर्णनम् ॥

धृतराष्ट्रः—

भारतस्यास्य वर्षस्य ततो हैमवतस्य च ।
प्रमाणमायुषस्सूत लब्ध्वा चापि शुभाशुभम् ॥ १

अनागतमतिक्रान्तं वर्तमानं च सञ्जय ।
आचक्ष्व मे विस्तरतो हरिवर्षं तथैव च ॥ २

सञ्जयः—

चत्वारि भारते वर्षे युगानि भरतर्षभ ।
[1]कृतं त्रेता द्वापरं च पुष्यं च कुरुवर्धन ॥ ३

पूर्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो ।
संक्षेपाद्द्वापरस्याथ ततस्पुष्यं प्रवर्तते ॥ ४

चत्वारि तु सहस्राणि वर्षाणां कुरुनन्दन ।
आयुस्संख्य' कृतयुगे संख्याता राजसत्तम ॥ ५

तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप ।
द्वे सहस्रे द्वापरे तु भुवि तिष्ठन्ति साम्प्रतम् ॥ ६

न प्रमाणं स्थितिर्ह्यस्ति पुष्येऽस्मिन् भरतर्षभ ।

1. क—अर्धाष्टकं नास्ति

गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ॥ ७

महाबला महासत्त्वाः प्रज्ञागुणसमन्विताः ।
अजायन्त कृते राजन् भावयन् भूतभावनाः ॥ ८

महोत्साहा महात्मानो धार्मिकास्सत्यवादिनः ।
जातास्तु वै कृतयुगे धनिनः प्रियदर्शनाः ॥ ९

आयुष्मन्तो महावीर्या धनुर्धरवरा युधि ।
जायन्ते क्षत्रियाश्शूरास् त्रेतायां च सहस्रशः ॥ १०

सर्ववर्णा महाराज जायन्ते द्वापरे युगे ।
महोत्साहा महावीर्याः परस्पर[1]हितैषिणः ॥ ११

तेजसाल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप ।
लुब्धाश्चानृतिनश्चैव पुष्ये जायन्ति भारत ॥ १२

ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च ।
पुष्ये भवति मर्त्यानां रागो लोभश्च भारत ॥ १३

सङ्क्षेपो वर्तते राजन् द्वापरेऽस्मिन् नराधिप ।
गुणोत्तरं हैमवतं हरिवर्षं ततः परम् ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ६१ ॥ जम्बूखण्डविनिर्माणपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये १४ श्लोकाः ]

(जम्बूखण्डविनिर्माणपर्व समाप्तम्)

---

1. ख-ग-घ-ङ-म—वधैषिण

## ॥ एकादशोऽध्यायः ॥

(भूमिपर्व)

शाकद्वीपवर्णनम् ॥

धृतराष्ट्रः—

जम्बूद्वीपस्त्वया प्रोक्तो यथावदिह सञ्जय ।
विष्कम्भस्य मम ब्रूहि परिमाणं च तत्त्वतः ॥ १

समुद्रस्य प्रमाणं च सम्यगच्छिद्रदर्शनम् ।
प्लक्षद्वीपं च मे ब्रूहि कुशद्वीपं च सञ्जय ॥ २

शाल्मलं चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च ।
शाकद्वीपं च मे ब्रूहि राहोस्सोमार्कयोस्तथा ॥ ३

सञ्जयः—

राजन् सुबहवो द्वीपा यैरिदं सन्ततं जगत् ।
तेषां तत्त्वं प्रवक्ष्यामि चन्द्रादित्यौ ग्रहास्तथा ॥ ४

अष्टादश सहस्राणि योजनानां विशां पते ।
षट् शतानि च पूर्णानि विष्कम्भो जम्बुसंज्ञितः ॥ ५

लवणस्य समुद्रस्य विष्कम्भो द्विगुणस्स्मृतः ।
नानाद्रुमलताकीर्णो मणिविद्रुमचित्रितः ॥ ६

नैकधातुविचित्रैश्च पर्वतैरुपशोभितः ।

सिद्धचारणसङ्कीर्णस् सागरः परिमण्डलः ॥ ७

प्लक्षद्वीपं च वक्ष्यामि यथावदिह भारत ।
शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ॥ ८

जम्बूद्वीपप्रमाणेन द्विगुणस्स नराधिप ।
विष्कम्भेण महाराज [1]सागरोऽपि द्विभागशः ॥ ९

[2]शाल्मलिश्च कुशक्रौञ्चौ द्विगुणो ह्युत्तरोत्तरम् ।
यथासंख्यं परिवृतस् सुरासर्पिः पयोधिभिः ॥ १०

शाकद्वीपं तु वक्ष्यामि यथावदिह भारत ।
[3]शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ॥ ११

क्षीरोदेन नृपश्रेष्ठ यश्च सम्परिवारितः ।
तत्र पुण्या जनपदा न तत्र म्रियते जनः ॥ १२

कुत एव हि दुर्भिक्षं क्षमातेजोयुता हि ते ॥ १२॥

शाकद्वीपस्य सङ्क्षेपो यथावद्भरतर्षभ ।
उक्त एव महाराज किमन्यद्वर्णयामि ते ॥ १३॥

धृतराष्ट्रः—

शाकद्वीपस्य सङ्क्षेपो यथावदिह सञ्जय ।
उक्तस्त्वया महाप्राज्ञ विस्तरं ब्रूहि तत्त्वतः ॥ १४॥

---

1. ग-ब-ङ-म—इक्षूदस्सागरस्तथा
2. अ-क-ख—अर्धद्वयं नास्ति
3. अ-क—इदमर्धं नास्ति

सञ्जयः—

अतीव गुणवत् सर्वं तत्र पुण्यं जनाधिप ।
[1]विस्तृताः पर्वता राजन् सप्तात्र मणिभूषिताः ॥ १५॥
रत्नाकरास्तथा नद्यस् तेषां नामानि मे शृणु ॥ १६
[2]देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते ।
प्रागायतो महाराज [3]जलदो नाम पर्वतः ॥ १७
[4]ततो मेघाः प्रवर्तन्ते प्रभवन्ति च सर्वशः ॥ १७॥
ततः परेण कौरव्य जलधारो महागिरिः ।
ततो नित्यमुपादत्ते वासवः परमं जलम् ॥ १८॥
यतो वर्षं प्रभवति वर्षकाले जनेश्वर ।
उच्चैर्गिरी रैवतको यत्र नित्यं प्रतिष्ठितः ॥ १९॥
रेवती दिवि नक्षत्रं पितामहकृतो विधिः ॥ २०
उत्तरेण तु राजेन्द्र श्यामो नाम महागिरिः ।
यतश्श्यामत्वमापन्ना प्रजा जनपदेश्वर ॥ २१

धृतराष्ट्रः—

सुमहान् संशयो मेऽद्य त्वयो[5]क्ते सूतनन्दन ।
प्रजाः कथं महाप्राज्ञ सम्प्राप्ताश्श्यामतामिह ॥ २२

1. ध—अर्धद्वयं नास्ति
2. अ-क—इदमर्धं नास्ति
3. अ-क—ऋषभो
4. अ-क—इदमर्धं नास्ति
5. ख-घ-म-ङ—क्तः

सञ्जयः—

सर्वेष्वेव महाराज द्वीपेषु कुरुनन्दन ।
गौरः कृष्णश्च वर्णोऽत्र तयोर्वर्णान्तरो नृप ॥ २३

श्यामो यस्मात् प्रवृद्धो वै तेन वक्ष्यामि भारत ॥ २३॥

ततः परं कौरवेन्द्र दुर्गश्शैलो महोदयः ।
केसरी केसरयुतो यतो वायुः प्रवाति वै ॥ २४॥

तेषां योजनविष्कम्भो द्विगुणः प्रविभागशः ।
वर्षाणि तेषु कौरव्य सप्रोक्तानि महर्षिभिः ॥ २५॥

महामेरुर्महा[1]भागो मलयः कुसुमोत्करः ।
जलधारो महाराज सुकुमार इति स्मृतः ॥ २६॥

रैवतस्य तु कौमारश् श्यामस्य मणिकाञ्चनः ।
केसरस्याथ [2]मोधारिः परेण तु महाद्रुमः ॥ २७॥

परिवार्य तु कौरव्य दैर्घ्यं ह्रस्वत्वमेव च ।
[3]क्रौञ्चद्वीपस्य सङ्ख्यातस् तस्य मध्ये महाद्रुमः ॥ २८॥

शाको नाम महाराज तस्य [4]वृत्तमिह श्रृणु ॥ २९

---

1. ख-ग—भोगो ह्यचलः कुसुमोत्तरे ; घ-म—भागो ह्यचलः कुसुमोत्करः
ङ—भागो ह्यचलत्कुसुमोत्करः
2. ग—मोदारः ; ख—स्याधमो धर्मो दारिः (?)
घ-म—स्यासमो दारि ; ङ—स्यासमो दारी
3. ख—शाक
4. ख-ग-घ-ङ-म—पूजा महात्मा

तत्र पुण्या जनपदाः पूज्यते तत्र शङ्करः ।
तत्र गच्छन्ति सिद्धाश्च देवताश्चारणास्तथा ॥ ३०
धार्मिकाश्च प्रजा राजंश् चत्वारोऽतीव भारत ।
वर्णास्स्वकर्मनिरता न च स्तेनोऽत्र दृश्यते ॥ ३१
दीर्घायुषो महाराज जरामृत्युविवर्जिताः ।
प्रजास्तत्र विवर्धन्ते वर्षास्विव समुद्रगाः ॥ ३२
नद्यः पुण्यजलास्तत्र गङ्गा च बहुधा गता ।
सुकुमारी कुमारी च सीता संवेणुका तथा ॥ ३३
महानदी च कौरव्य तथा मणिजला नदी ।
इक्षुवर्धनिका चैव तथा भरतसत्तम ॥ ३४
तत्र प्रवृत्ताः पुण्योदा नद्यः कुरुकुलोत्तम ।
सहस्राणां शतान्येव ततो वर्षति वासवः ॥ ३५
न तासां नामधेयानि परिमाणं तथैव च ।
शक्यन्ते परिसंख्यातुं पुण्यास्ता हि सरिद्वराः ॥ ३६
तत्र पुण्या जनपदाश् चत्वारो लोकसम्मताः ।
मकाश्च मशकाश्चैव मानसा मन्दकास्तथा ॥ ३७
मका ब्राह्मणभूयिष्ठास् स्वकर्मनिरताश्च ते ।
मशकेषु च राजन्या धार्मिकास्सर्वकामदाः ॥ ३८
मानसेषु महाराज वैश्या धर्मोपजीविनः ।

सर्वकामसमायुक्तास् शूरा धर्मार्थकोविदाः ॥ ३९

शूद्राश्च मन्दके नित्यं पुरुषा धर्मशीलिनः ॥ ३९॥

न तत्र राजा राजेन्द्र न दण्डो न च दण्डिकाः ।

स्वधर्मेणैव राजेन्द्र ते रक्षन्ति परस्परम् ॥ ४०॥

एतावदेव शक्यं तु तत्र द्वीपे प्रभाषितुम् ।

एतदेव च वक्तव्यं शाकद्वीपे महौजसि ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ६२ ॥ भूमिपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

---

## ॥ द्वादशोऽध्यायः ॥

क्रौञ्चादिद्वीपवर्णनम् ॥

---

सञ्जयः—

उत्तरेषु च कौरव्य द्वीपेषु श्रूयते कथा ।

यथा श्रुतं महाराज ब्रुवतस्तान् निबोध मे ॥ १

[1]घृततोयस्समुद्रो वै दधिमण्डोदनः परः ।

---

1. ख-ग-घ-ङ—इक्षूदश्च सुरोदश्च सर्पिक्षीरोदधिस्तथा ।
दधिमण्डोदकाश्चास्य शुद्धोदधिरथोमहान् ॥
[पाठान्तरम्]

[1]सुरोदस्सागरश्चैव तथाऽन्यो जलसागरः ॥ २
परस्परेण द्विगुणास् सर्वे द्वीपा नराधिप ।
पर्वताश्च महाराज समुद्रैः परिवारिताः ॥ ३

गौरस्तु मध्यमे द्वीपे गिरिर्मणिशिलो महान् ।
पर्वतः पश्चिमः कृष्णो नारायणनिभो नृप ॥ ४

तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः ।
प्रजापतिरुपासीनः प्रजानां विदधत् सुखम् ॥ ५

कुशद्वीपे कुशस्तम्बो मध्ये जनपदैस्सह ।
[2]सम्पूज्यते शाल्मली च द्वीपे शाल्मलिके नृप ॥ ६

क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः ।
सम्पूज्यते महाराज चातुर्वर्ण्येन नित्यदा ॥ ७

गोमन्दः पर्वतो राजन् सुमहान् सर्वधातुमान् ।
वसते भगवान् यत्र श्रिया कमललोचनः ॥ ८

मोक्षिभिस्संस्तुतो नित्यं प्रभुर्नारायणो हरिः ॥ ८॥

शाकद्वीपे तु राजेन्द्र पर्वतो विद्रुमैश्चितः ।
सुनामा नाम दुर्धर्षो द्वितीयो हेमपर्वतः ॥ ९॥

द्युतिमान्नाम कौरव्य तृतीयः कुमुदो गिरिः ।

---

1. अ-क—अर्धपद्यकं नास्ति
2. ग-घ-ङ-म—सम्पूज्यते हि प्लक्षश्च स्वद्वीपख्यातिकृद्यथा [पाठान्तरम्]

चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ॥ १०॥
षष्ठो हरिगिरिर्नाम षडेते रत्नपर्वताः ॥ ११
एषामन्तरविष्कम्भो द्विगुणस्सर्वभागशः ।
औद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ॥ १२
तृतीयं वै रथाकारं चतुर्थं लम्बनं स्मृतम् ।
पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकरम् ॥ १३
सप्तमं कपिलं वर्षं सप्तैते वर्षपूजिताः ॥ १३॥
एतेषु देवगन्धर्वाः प्रजाश्च जगतीश्वर ।
विचरन्ति रमन्ते च न तेषु म्रियते जनः ॥ १४॥
न तेषु दस्यवस्सन्ति म्लेच्छजात्योऽपि वा नृप ।
गौरप्रायो जनस्सर्वस् सुकुमारश्च पार्थिव ॥ १५॥
अवशिष्टेषु सर्वेषु वक्ष्यामि मनुजेश्वर ।
यथाश्रुतं महाराज तदप्येकमनाश्शृणु ॥ १६॥
क्रौञ्चद्वीपे महाराज क्रौञ्चो नाम महागिरिः ॥ १७
क्रौञ्चात् परो वामनको वामनादन्धकारकः ।
अन्धकारात् परो राजन् मैनाकः पर्वतोत्तमः ॥ १८
मैनाकात् परतो राजन् गोविन्दो गिरिरुत्तमः ।
गोविन्दात् तु परो राजन् निविडो नाम पर्वतः ॥ १९
परस्तु द्विगुणस्तेषां विष्कम्भो वंशवर्धनः ।

देशांस्तत्र प्रवक्ष्यामि तन्मे निगदतश्शृणु ॥ २०

क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः ।
मनोनुगात् परश्चोष्णो देशः कुरुकुलोद्वह ॥ २१

उष्णात् परः प्रावरकः प्रावरादन्धकारकः ।
अन्धकारकदेशात् तु मुनिदेशोऽपरस्स्मृतः ॥ २२

मुनिदेशात् परश्चैव प्रोच्यते दुन्दुभिस्वनः ।
सिद्धचारणसङ्कीर्णो गौरप्रायो जनाधिप ॥ २३

एते देशा महाराज देवगन्धर्वसेविताः ।
पुष्करे पुष्करो नाम पर्वतो मणिरत्नवान् ॥ २४

तत्र नित्यं निवसति स्वयं देवः प्रजापतिः ।
तं पर्युपासते नित्यं देवास्सर्वे महर्षयः ॥ २५

वाग्भिर्मनोनुकूलाभिः पूजयन्तो जनाधिप ।
जम्बूद्वीपात् प्रवर्तन्ते रत्नानि विविधान्युत ॥ २६

द्वीपेषु तेषु सर्वेषु प्रजानां कुरुसत्तम ।
विप्राणां ब्रह्मचर्येण सत्येन च दमेन च ॥ २७

आरोग्यायुःप्रमाणेभ्यो द्विगुणं द्विगुणं ततः ।
एको जनपदो राजन् द्वीपेष्वेतेषु भारत ॥ २८

उक्ता जनपदा येषु धर्मश्चैकः प्रदृश्यते ॥ २८॥

ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः ।

द्वीपानेतान् महाराज रक्षंस्तिष्ठति नित्यशः ॥ २९॥

[1]स राजा स शिवो राजन् प्रेक्षितायाः प्रजापतिः ।
गोपायति नरश्रेष्ठ प्रजास्सजडपण्डिताः ॥ ३०॥

भोजनं चात्र कौरव्य प्रजास्स्वयमुपस्थितम् ।
एवमेव महाराज भुज्यते ताद्धि नित्यदा ॥ ३१॥

ततः परं समा नाम दृश्यते लोकसंस्थितिः ।
चतुरश्रा महाराज त्रयस्त्रिंशत् तु मण्डलम् ॥ ३२॥

तत्र तिष्ठन्ति कौरव्य चत्वारो लोकविश्रुताः ।
दिग्गजा भरतश्रेष्ठ वामनैरावतादयः ॥ ३३॥

सुप्रतीकस्तथा राजन् प्रभिन्नकरटामुखः ।
तस्याहं परिमाणं तु न संख्यातुमिहोत्सहे ॥ ३४॥

असंख्यातस्स नित्यं हि तिर्यगूर्ध्वमधस्तथा ।
तत्रैव वायवो वान्ति दिग्भ्यस्सर्वाभ्य एव हि ॥ ३५॥

असक्तान्महाराज तान्निगृह्णन्ति ते गजाः ।
पुष्करैः पद्मसङ्काशैर् वर्षवद्भिर्महाप्रभैः ॥ ३६॥

ते शनैः पुनरेवाशु वातान् मुञ्चन्ति नित्यशः ।
श्वसद्भिर्मुच्यमानास्तु दिग्गजैरिह मारुताः ॥ ३७॥
आगच्छन्ति महाराज ततस्तिष्ठन्ति वै प्रजाः ॥ ३८

1. अ-क—इदमर्धं नास्ति

धृतराष्ट्रः—

परमो विस्तरोऽत्यर्थं त्वया सञ्जय कीर्तितः ।
दर्शितं द्वीपसंस्थानम् उत्तरं ब्रूहि सञ्जय ॥ ३९

सञ्जयः—

उक्ता द्वीपा महाराज ग्रहान् मे शृणु तत्त्वतः ।
स्वर्भानुः पुरुषव्याघ्र यावदेव स्वभावतः ॥ ४०

परिमण्डलो महाराज स्वर्भानुश्श्रूयते ग्रहः ।
योजनानां सहस्राणि विष्कम्भो द्वादशस्य वै ॥ ४१

परिणाहेन षट्त्रिंशद् विपुलेन तथाऽनघ ।
षष्टिमाहुश्शतान्यस्य पुरा पौराणिकास्तथा ॥ ४२

चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृतः ।
विष्कम्भेण कुरुश्रेष्ठ त्रयस्त्रिंशत् तु मण्डलम् ॥ ४३

एकोनषष्टिवैपुल्यात् शीतरश्मेर्महात्मनः ॥ ४३॥

सूर्यस्त्वष्टसहस्राणि द्वे चान्ये कुरुनन्दन ।
विष्कम्भेण महाराज मण्डलं त्रिशतं स्मृतम् ॥ ४४॥

अष्टपञ्चाशतं राजन् विपुलत्वेन चानघ ।
श्रूयते परमोदारः पतङ्गस्स विभावसुः ॥ ४५॥

एतत् प्रमाणमर्कस्य निर्दिष्टमिह भारत ।
स राहुश्छादयत्येतौ यथाकालं महत्तया ॥ ४६॥

चन्द्रादित्यौ महाराज संक्षेपोऽयमुदाहृतः ॥ ४७

इत्येतत् ते महाराज पृच्छतश्शास्त्रचक्षुषा ।
सर्वमुक्तं मया तत्त्वं तस्माच्छममवाप्नुहि ॥ ४८

यथादृष्टं मया प्रोक्तं सनिर्याणमिदं जगत् ।
तस्मादाश्वस कौरव्य पुत्रं दुर्योधनं प्रति ॥ ४९

श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व मनोनुगम् ।
श्रीमान् भवति राजन्यस् सिद्धार्थस्साधुसम्मतः ॥ ५०
आयुर्बलं च वीर्यं च तेजश्चास्य विवर्धते ॥ ५०॥

यश्शृणोति महाराज पर्वणीदं यतव्रतः ।
प्रीयन्ते पितरस्तस्य तथैव प्रपितामहाः ॥ ५१॥

इदं तु भारतं वर्षं यत्र वर्तामहे वयम् ।
[1]पूर्वं प्रवर्तते पुण्यं तत् सर्वं श्रुतवानसि ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि भूमिपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ६२ ॥ भूमिपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ५२॥ श्लोकाः]

( भूमिपर्व समाप्तम् )

---

1. ख-ग—यतः

## ॥ त्रयोदशोऽध्यायः ॥



(भगवद्गीतापर्व)

सञ्जयेन धृतराष्ट्रं प्रति भीष्महननकथनम् ॥

वैशम्पायनः—

अथ गावल्गणिर्विद्वान् संयुगादेत्य भारत ।
प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यवित् ॥ १

ध्यायते धृतराष्ट्राय सहसोपेत्य दुःखितः ।
आचष्ट निहतं भीष्मं भारतानां पितामहम् ॥ २

सञ्जयः—

सञ्जयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो भीष्मश्शान्तनवो भारतानां पितामहः ॥ ३

ककुदं सर्वयोधानां धाम सर्वधनुष्मताम् ।
शरतल्पगतस्सोऽद्य शेते कुरुपितामहः ॥ ४

यस्य वीर्यं समाश्रित्य द्यूतं पुत्रस्तवाकरोत् ।
स शेते निहतो राजन् संख्ये भीष्मश्शिखण्डिना ॥ ५

यस्सर्वान् पृथिवीपालान् समवेतान् महामृधे ।
जिगायैकरथेनैव काशिपुर्यां महारथः ॥ ६

जामदग्न्यं रणे रामम् अयुध्यद्वसुसम्भवः ।

न हतो जामदग्न्येन निहतोऽद्य शिखण्डिना ॥ ७

महेन्द्रसदृशश्शौर्ये धैर्येण हिमवानिव ।
समुद्र इव गाम्भीर्ये सहिष्णुत्वे धरासमः ॥ ८

शरदंष्ट्रो धनुर्वक्त्रः खड्गजिह्वो दुरासदः ।
नरसिंहः पिता तेऽद्य पाञ्चाल्येन निपातितः ॥ ९

पाण्डवानां महत् सैन्यं यं दृष्ट्वोद्यन्तमाहवे ।
प्रावेपत भयोद्विग्नं सिंहं दृष्ट्वेव गोगणः ॥ १०

परिरक्ष्य च सेनां तु दशरात्रमनीकहा ।
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ ११

यस्स शक्र इवाक्षोभ्यो वर्षन् बाणान् सहस्रशः ।
जघान युधि योधानाम् अर्बुदं दशभिर्दिनैः ॥ १२

स शेते निहतो भूमौ वातरुग्ण इव द्रुमः ।
तव दुर्मन्त्रिते राजन् यथा नार्हस्स भारत ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये १३ श्लोकाः]

## ॥ चतुर्दशोऽध्यायः ॥

धृतराष्ट्रेण भीष्महननश्रवणात्परिशोचनपूर्वकं सञ्जयं प्रति विस्तरेण भीष्मादियुद्धवर्णनचोदना ॥

धृतराष्ट्रः—

कथं कुरूणामृषभो हतो भीष्मश्शिखण्डिना ।
कथं रथात् स न्यपतत् पिता मे वासवोपमः ॥ १

कथमासंश्च योधा मे हीना भीष्मेण सञ्जय ।
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा ॥ २

तस्मिन् हते महेष्वासे महाप्राज्ञे महाबले ।
महासत्त्वे नरव्याघ्रे किमिवासन् जनास्तदा ॥ ३

आर्तिं परामाविशति यथा वदसि मे हतम् ।
कुरूणामृषभं वीरम् अकम्प्यं पुरुषर्षभम् ॥ ४

के तं यान्तमनुप्रेयुः के तस्यासन् पुरोगमाः ।
केऽतिष्ठन् के न्यवर्तन्त केऽभ्यवर्तन्त सञ्जय ॥ ५

के शूरा राजशार्दूलम् अच्युतं पुरुषर्षभम् ।
रथानीकं गाहमानं सहसा पृष्ठतोऽन्वयुः ॥ ६

यस्तमोऽर्क इवापोह्य परसैन्यममित्रहा ।
सहस्ररश्मिप्रतिमः परेषां भयमादधत् ॥ ७

अकरोद्दुष्करं कर्म रणे पाण्डवशासनात् ।
ग्रसमानमनीकानि य एनं पर्यवारयन् ॥ ८
निकृन्तन्तमनीकानि शरदंष्ट्रं मनस्विनम् ।
चापव्यात्ताननं घोरम् असिजिह्वं दुरासदम् ॥ ९
अत्यन्तं पुरुषव्याघ्रं महासत्त्वं पराजितम् ।
पातयामास कौन्तेयः कथं तमजितं युधि ॥ १०
उग्रधन्वानमुग्रेषुं वर्तमानं रथोत्तमे ।
परेषामुत्तमाङ्गानि विचिन्वन्तमथेषुभिः ॥ ११
पाण्डवानां महत् सैन्यं यं दृष्ट्वात्यन्तमाहवे ।
कालाग्निमिव दुर्धर्षं समवेष्टत नित्यशः ॥ १२
परिरक्ष्य च सेनां मे दशरात्रमनीकहा ।
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ १३
यस्स शक्र इवाक्षय्यं वर्षन् शरमयं महत् ।
जघान युधि योधानाम् अर्बुदं दशभिर्दिनैः ॥ १४
स शेते निष्टनन् भूमौ वातरुग्ण इव द्रुमः ।
मम दुर्मन्त्रितेनासौ यथा नार्हस्सभारतः ॥ १५
कथं शान्तनवं दृष्ट्वा पाण्डवानामनीकिनी ।
प्रहर्तुमशकत् तत्र भीष्मं भीमपराक्रमम् ॥ १६
कथं भीष्मेण सङ्ग्रामं अकुर्वन् पाण्डुनन्दनः ।

कथं च नाजयद्भीष्मो द्रोणे जीवति सञ्जय ॥ १७
कृपे चानिहिते तत्र भारद्वाजात्मजे तदा ।
भीष्मः प्रहरतां श्रेष्ठः कथं स निधनं गतः ॥ १८
कथं चापि महातेजाः पाञ्चाल्येन शिखण्डिना ।
भीष्मो विनिहतो युद्धे देवैरपि सुदुस्सहः ॥ १९
यस्स्पर्धति रणे नित्यं जामदग्न्यं महाबलम् ।
अजितो जामदग्न्येन शक्रतुल्यपराक्रमम् ॥ २०
तं हतं समरे भीष्मं महान्तमतथोचितम् ।
सञ्जयाचक्ष्व मे वीर शमं चाद्य न विद्महे ॥ २१
मामकाः के महेष्वासा न जहुस्सञ्जयाच्युतम् ।
दुर्योधनसमादिष्टाः के शूराः पर्यवारयन् ॥ २२
यच्छिखण्डिमुखास्सर्वे पाण्डवा भीष्ममभ्ययुः ।
कच्चिन्न कुरवो भीतास् तत्यजुस्सञ्जयाच्युतम् ॥ २३
[1]मौर्वीघोषस्तनयित्नुः पृषत्कपृषतो महान् ।
धनुर्ह्रादमहाशब्दो महामेघ इवोन्नतः ॥ २४
यदभ्यवर्षत् कौन्तेयान् सहपाञ्चालसृञ्जयान् ।
निघ्नन् पररथान् वीरो दानवानिव वज्रभृत् ॥ २५
इष्वस्त्रसागरं घोरं बाहुग्राहं दुरासदम् ।

1. अ-क—नासीदमर्धम्

कार्मुकोर्मिणमक्षय्यं ध्वजद्वीपं रथप्लवम् ॥ २६
गदासिमकरावासं हयवेगं गजाचलम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिस्स्वनम् ॥ २७
हयान् गजान् पदातींश्च रथांश्च तरसा बहून् ।
निमज्जयन्तं समरे परवीरान् प्रहारिणः ॥ २८
विद्ह्यमानं कोपेन तेजसा च परन्तपम् ।
के पुरस्तादगच्छन्त रक्षन्तो भीष्ममन्तिके ॥ २९
के रक्षन्नुत्तरं चक्रं वीरा वीरस्य युध्यतः ।
वामे चक्रे वर्तमानाः केऽघ्नन् सञ्जय सृञ्जयान् ॥ ३०
वेलेव मकरावासं के वीराः पर्यवारयन् ।
भीष्मो यदकरोत् कर्म समरे सञ्जयारिहा ॥ ३१
दुर्योधनहितार्थाय के तस्य पुरतोऽभवन् ।
केऽरक्षन् दक्षिणं चक्रं भीष्मस्यामिततेजसः ॥ ३२
पृष्ठतः केऽपरे वीरा उपारक्षन् यतव्रतम् ।
अग्रतोऽभ्यमनीकेषु केऽभ्यरक्षन् दुरासदम् ॥ ३३
पार्श्वतः के ह्यवर्तन्त गच्छन्तो दुर्गमां गतिम् ।
समूहे के परान् वीरान् प्रत्ययुध्यन्त सञ्जय ॥ ३४
रक्ष्यमाणः कथं वीरैर् गोप्यमानश्च तेन ते ।
दुर्जयानामनीकानि विजयेत् तरसा युधि ॥ ३५

सर्वलोकेश्वरस्यैव परमस्य प्रजापतेः ।
[1]कथं प्रहर्तुमपि ते शेकुस्सञ्जय पाण्डवाः ॥ ३६

यस्मिन् द्वीपे समाश्वस्य युध्यन्ति कुरवः परैः ।
तं निमग्नं नरव्याघ्रं भीष्मं सञ्जय शंससि ॥ ३७

यस्य वीर्यं समाश्रित्य मम पुत्रस्सुमन्दधीः ।
न पाण्डवानगणयत् कथं स निहतः परैः ॥ ३८

यः पुरा विबुधैस्सेन्द्रैस् साहाय्ये युद्धदुर्मदः ।
काङ्क्षितो दानवान् घ्नद्भिः पिता मम महाव्रतः ॥ ३९

यस्मिन् जाते महावीर्ये शन्तनुर्लोकविश्रुतः ।
शोकं दैन्यं च दुःखं च प्राजहात् परमात्मवित् ॥ ४०

प्रोक्तं परायणं तज्ज्ञं स्वधर्मनिरतं शुचिम् ।
वेदवेदाङ्गतत्त्वज्ञं कथं शंससि मे हतम् ॥ ४१

सर्वास्त्रविनयोपेतं शान्तं दान्तं मनस्विनम् ।
हतं शान्तनवं श्रुत्वा मन्ये शेषं बलं हतम् ॥ ४२

धर्मादधर्मो बलवान् सम्प्राप्त इति मे मतिः ।
यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥ ४३

जामदग्न्यः पुरा रामस् सर्वास्त्रविदनुत्तमः ।

---

1. अ—कथं प्रहर्तुंर्भीष्मस्य तिष्ठतो युधिशालवान् ।
स्यातुं ससैन्यास्तस्याग्रेशेकुस्सञ्जय पाण्डवाः ॥ [पाठान्तरम्]

अम्बार्थमुद्यतस्सङ्ख्ये भीष्मेण युधि निर्जितः ॥ ४४
तमिन्द्रसमकर्माणं ककुदं सर्वधन्विनाम् ।
हतं शंससि मे भीष्मं किं नु दुःखमतः परम् ॥ ४५
असकृत् क्षत्रियव्रातास् सङ्ख्ये येन विनिर्जिताः ।
जामदग्न्येन रामेण परवीरनिघातिना ॥ ४६
न हतो यो महाबुद्धिस् स हतोऽद्य शिखण्डिना ॥ ४६॥
तस्मान्नूनं महावीर्याद् भार्गवाद्युद्धदुर्मदात् ।
तेजोवीर्यबलोपेतश् शिखण्डी द्रुपदात्मजः ॥ ४७॥
यश्शूरं कृतिनं युद्धे सर्वशस्त्रभृतां वरम् ।
परमास्त्रविदं वीरं जघान भरतर्षभम् ॥ ४८॥
के वीरास्तममित्रघ्नम् अन्वयुश्शस्त्रसंसदि ।
शंस मे तद्यथा चासीद् युद्धं भीष्मस्य पाण्डवैः ॥ ४९॥
[1]योषेव हतवीरा मे सेना पुत्रस्य सञ्जय ।
अगोपमिव चोद्भ्रान्तं गोकुलं तद्बलं मम ॥ ५०॥
पौरुषं सर्वलोकेषु परं यस्य महाहवे ।
पराजिते च वस्तस्मिन् कथमासीन्मनस्तदा ॥ ५१॥
जीवितेऽप्यद्य सामर्थ्यं किमिवास्मासु सञ्जय ।
घातयित्वा महावीर्यं पितरं लोकधार्मिकम् ॥ ५२॥

1. अ-क—नासीदमर्षम्

अगाधे सलिले मग्ना नौर्भ्रष्टा दूरचारिणः ।
[1]भीष्मे हते भृशं तद्वन् मन्ये शोचन्ति पुत्रकाः ॥ ५३॥

अश्मसारमयं नूनं हृदयं मम सञ्जय ।
[2]यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ॥ ५४॥

यस्मिन्नस्त्रं च मेधा च नीतिश्च भरतर्षभे ।
अप्रमेयाणि दुर्धर्षे कथं स निहतो युधि ॥ ५५॥

न चास्त्रेण न शौर्येण तपसा मेधया न च ।
न धृत्या न पुनस्त्यागैर् मृत्योः कश्चिद्विमुच्यते ॥ ५६॥

कालो नूनं महावीर्यस् सर्वलोकदुरत्ययः ।
यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय ॥ ५७॥

[3]पुत्रशोकाभिसंतप्तो महद्दुःखमचिन्तयन् ।
आशंसे शर्म पुत्राणां भीष्माच्छन्तनुनन्दनात् ॥ ५८॥

यदादित्यमिवापश्यत् पतितं भुवि सञ्जय ।
दुर्योधनश्शान्तनवं किं तदा प्रत्यपद्यत ॥ ५९॥

नाहं स्वेषां परेषां वा बुद्ध्या सञ्जय चिन्तयन् ।
शेषं किञ्चित् प्रपश्यामि प्रत्यनीके महीक्षिताम् ॥ ६०॥

दारुणः क्षत्रधर्मोऽयम् ऋषिभिस्सम्प्रदर्शितः ।

1. अ-क—तेनाहीना मम चमूर्भ्रमते नूनमद्य वै । [अधिकः पाठः]
2. अ-क—अर्धसप्तकं नास्ति		3. व—अर्धत्रयं नास्ति

यत्र शान्तनवं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥ ६१॥

वयं वा राज्यमिच्छामो घातयित्वा यतव्रतम् ।
क्षत्रधर्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः ॥ ६२॥

एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय ।
पराक्रमः परं शक्त्या स च तस्मिन् प्रतिष्ठितः ॥ ६३॥

अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितम् ।
कथं शान्तनवं तातं पाण्डुपुत्रा ह्यवारयन् ॥ ६४॥

कथं युक्तान्यनीकानि कथं युद्धं महात्मभिः ।
कथं वा निहतो भीष्मः पिता सञ्जय मे परैः ॥ ६५॥

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
दुःशासनश्च कितवो हते भीष्मे किमब्रुवन् ॥ ६६॥

[1]परमास्त्रविदं शूरं भीष्मं शान्तनवं युधि ।
के वीरास्तममित्रघ्नम् अन्वयुश्शस्त्रसंसदि ॥ ६७॥

शंस मे तद्यथा चासीद् युद्धं भीष्मस्य पाण्डवैः ॥ ६८

यां शरीरैरुपस्तीर्णां वरवारणवाजिनाम् ।
शरशक्तिगदाखड्गप्रासतोमरसङ्कुलाम् ॥ ६९

प्राविशन् कितवा मन्दास् तां सभां युद्धदुर्गमाम् ॥ ६९॥

प्राणद्यूते प्रतिभये केऽदीव्यन्त नरर्षभाः ।

1. अ-क-ग-ब—अर्धेऽयं नास्ति

केऽजयन् के जितास्तत्र कृतलक्षा निपातिताः ॥ ७०॥
अन्ये भीष्माच्छान्तनवात् तन्ममाचक्ष्व सञ्जय ॥ ७१
न हि मे शान्तिरस्तीह श्रुत्वा देवव्रतं हतम् ।
तं वीरं भीमकर्माणं भीष्ममाहवशोभिनम् ॥ ७२
आर्तिं मे महतीं व्यूढां हृदये पुत्रकारिताम् ।
त्वं सिञ्चन् सर्पिषेवाग्निम् उद्दीपयसि सञ्जय ॥ ७३
महान्तं भारमुद्यम्य विश्रुतं सार्वलौकिकम् ।
दृष्ट्वा विनिहतं भीष्मं मन्ये शोचन्ति पुत्रकाः ॥ ७४
तथा प्रस्तानि दुःखानि दुर्योधनकृतान्यहम् ।
तस्मान्मे सर्वमाचक्ष्व यद्वृत्तं तत्र सञ्जय ॥ ७५
सङ्ग्रामे पृथिवीशानां मन्दस्याबुद्धिसम्भवम् ।
अपनीतं सुनीतं वा तन्ममाचक्ष्व पृच्छतः ॥ ७६
यत् कृतं तत्र सङ्ग्रामे भीष्मेण जयमिच्छता ।
तेजोयुक्तं कृतास्त्रेण ब्रूहि तच्चाप्यशेषतः ॥ ७७
यथा तच्चाभवद्युद्धं कुरुपाण्डवसेनयोः ।
क्रमेण येन यस्मिंश्च काले यच्च यथा च तत् ॥ ७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अस्मिन्नध्याये ७८ श्लोकाः ]

## ॥ पञ्चदशोऽध्यायः ॥

दुर्योधनेन दुःशासनं प्रति भीष्मरक्षणाज्ञापनम् ॥ १ ॥ कुरुपाण्डवसेनावर्णनम् ॥ २ ॥

सञ्जयः—

त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।
न हि दुर्योधने दोषम् इममाधातुमर्हसि ॥ १

य आत्मनो दुश्चरिताद् अशुभं प्राप्नुयान्नरः ।
एनसा न स दैवं हि कालं वा गन्तुमर्हति ॥ २

महाराज मनुष्येषु निन्द्यं यस्सर्वमाचरेत् ।
स वध्यस्सर्वलोकस्य निन्दितानि समाचरन् ॥ ३

निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूतस्सहामात्यैः क्षान्तश्च सुचिरं वने ॥ ४

हयानां च गजानां च रथानां चामितौजसाम् ।
प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च ॥ ५

शृणु तत् पृथिवीपाल मा स्म शोके मनः कृथाः ।
दृष्टमेतत् पुरा भावि नूनमेतन्नराधिप ॥ ६

नमस्कृत्वा प्रवक्ष्यामि पाराशर्याय धीमते ।
यस्य प्रसादात् प्राप्तं मे दिव्यं ज्ञानमनुत्तमम् ॥ ७

दृष्टिश्चातीन्द्रिया राजन् दूराच्छ्रवणमेव च ।
परचित्तस्य विज्ञानम् अतीतानागतस्य च ॥ ८

यथोपपत्तिविज्ञानम् आकाशे च गतिं विना ।
शस्त्रैरवध्यो युद्धे च वरदानान्महात्मनः ॥ ९

शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम् ।
भारतानां महद्युद्धं यथा तद्रोमहर्षणम् ॥ १०

स्वेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः ।
दुर्योधनो महाराज दुःशासनमथाब्रवीत् ॥ ११

दुर्योधनः—

दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय ॥ १२

अयं मां समनुप्राप्तो वर्षपूगाभिचिन्तितः ।
पाण्डवानां ससैन्यानां कुरूणां च समागमः ॥ १३

नातः कार्यतरं मन्ये रणे भीष्मस्य रक्षणात् ।
हन्याद्गुप्तो ह्यसौ पार्थान् सोमकांश्च ससृञ्जयान् ॥ १४

अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम् ।
श्रूयते स्त्री ह्यसौ पूर्वं तस्माद्वर्ज्यो रणे मम ॥ १५

तस्माद्भीष्मो रक्षितव्यो विशेषेणेति मे मतिः ।
शिखण्डिनो वधे यत्तास् सर्वे तिष्ठन्तु मामकाः ॥ १६

तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः ।
सर्वशस्त्रेषु कुशलास् ते रक्षन्तु पितामहम् ॥ १७

अरक्ष्यमाणं हि वृको हन्यात् सिंहं महाबलम् ।
मा सिंहं जम्बुकेनेव घातयेम शिखण्डिना । १८

वामे चक्रे युधामन्युर् उत्तमौजाश्च दक्षिणे ।
गोप्तारौ फाल्गुनस्यास्तां फल्गुनोऽपि शिखण्डिनः ॥ १९

संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्जितः ।
यथा न हन्याद्गाङ्गेयं दुःशासन तथा कुरु ॥ २०

सञ्जयः—

ततो रजन्यां व्युष्टायां शब्दस्समभवन्महान् ।
क्रोशतां भूमिपालानां युज्यतां युज्यतामिति ॥ २१

शङ्खदुन्दुभिनिर्घोषैस् सिंहनादरवैरपि ।
हयहेषितशब्दैश्च रथनेमिस्वनैस्तथा ॥ २२

गजानां बृंहितैश्चैव योधानां चापि गर्जताम् ।
क्ष्वेलितास्फोटितोत्क्रुष्टैस् तुमुलस्सर्वतोऽभवत्॥ २३

उदतिष्ठन्महाराज सर्वं युक्तमशेषतः ।
[1]सूर्योदये महत् सैन्यं कुरुपाण्डवसेनयोः ॥ २४

तव राजेन्द्र पुत्राणां पाण्डवानां तथैव च ।

1. ख—रथानीकान्यदृश्यन्त नगराणीव भूरिशः । [अधिकः पाठः]

दुष्प्रधृष्याणि चास्त्राणि सचापकवचानि च ॥ २५

ततः प्रकाशे सैन्यानि समदृश्यन्त भारत ।
त्वदीयानां परेषां च शस्त्रवन्ति महान्ति च ॥ २६

तत्र नागा रथाश्चैव जाम्बूनदपरिष्कृताः ।
भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ॥ २७

रथानीकान्यदृश्यन्त नगराणीव भूरिशः ।
अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् ॥ २८

धनुर्भिर्ऋष्टिभिः खड्गैर् गदाभिश्शक्तितोमरैः ।
योधाः प्रहरणैश्शुभ्रैस् तेष्वनीकेष्ववस्थिताः ॥ २९

गजाः पदातिरथिनस् तुरगाश्च विशां पते ।
व्यतिष्ठन् दारुणाकाराश् शतशोऽथ सहस्रशः ॥ ३०

ध्वजा बहुविधाकारा प्रादृश्यन्त समुच्छ्रिताः ।
स्वेषां चैव परेषां च द्युतिमन्तस्सहस्रशः ॥ ३१

मणिकाञ्चनचित्राङ्गा ज्वलिता इव पावकाः ।
अर्चिष्मन्तो व्यरोचन्त गजारोहास्सहस्रशः ॥ ३२

महेन्द्रकेतवश्शुभ्रा महेन्द्रसदनेष्विव ।
सन्नद्धास्तेषु ते वीरा ददृशुर्युद्धकाङ्क्षिणः ॥ ३३

उद्यतैरायुधैश्चित्रैर् दीप्यमानास्समन्ततः ।
बद्धगोधाङ्गुलित्राणास् तदा बद्धकलापिनः ॥ ३४

ऋषभा इव गर्जन्तो नृपास्सेनामुखे बभुः ॥ ३४॥

शकुनिस्सौबलश्शल्यस् सैन्धवोऽपि जयद्रथः ।
विन्दानुविन्दावावन्त्यौ काम्भोजश्च सुदक्षिणः ॥ ३५॥

श्रुतायुश्चाथ कालिङ्गो जयत्सेनश्च पार्थिवः ।
बृहद्बलश्च कौशल्यः कृतवर्मा च सात्त्वतः ॥ ३६॥

दशैते पुरुषव्याघ्राश् शूराः परिघबाहवः ।
अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ॥ ३७॥

एते चान्ये च बहवो दुर्योधनवशानुगाः ।
राजानो राजपुत्राश्च नीतिमन्तो महारथाः ॥ ३८॥

सन्नद्धास्समदृश्यन्त स्वेष्वनीकेष्ववस्थिताः ।
[1]बद्धकृष्णाजिनास्सर्वे ध्वजिनो मुञ्जधारिणः ॥ ३९॥

सृष्टा दुर्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः ।
समृद्धा दश वाहिन्यः परिगृह्य व्यवस्थिताः ॥ ४०॥

[2]एकादशी धार्तराष्ट्री कौरवाणां महाचमूः ।
अग्रतस्सर्वसैन्यानां यत्र शान्तनवोऽग्रणीः ॥ ४१॥

श्वेतोष्णीषं श्वेतहयं श्वेतवर्माणमच्युतम् ।
अपश्यन्त महाराज भीष्मं चन्द्रमिवोदितम् ॥ ४२॥

---

1. अ-क—नास्तीदमर्धम्
2. अ-क—अक्षौहिण्या चमूचासीदेकादशा सुतस्य ते । [पाठान्तरम्]

हेमतालध्वजं भीष्मं राजते स्यन्दने स्थितम् ।
श्वेताभ्र इव तीक्ष्णांशुं ददृशुः कुरुपाण्डवाः ॥ ४३॥

[1]दृष्ट्वा चमूमुखे भीष्मं समकम्पन्त पाण्डवाः ।
सृञ्जयाश्च महेष्वासा धृष्टद्युम्नपुरोगमाः ॥ ४४॥

जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा ।
धृष्टद्युम्नमुखास्सर्वे समुद्विविजिरे मुहुः ॥ ४५॥

एकादशैताश्श्रीजुष्टा वाहिन्यस्तव पार्थिव ।
पाण्डवानां तथा सप्त महापुरुषमानिनाम् ॥ ४६॥

उद्वृत्तमकरावर्तौ महाग्राहसमाकुलौ ।
युगान्ते [2]समवेतौ द्वौ सागराविव संयुतौ ॥ ४७॥

नैव नस्तादृशो राजन् दृष्टपूर्वो न च श्रुतः ।
अनीकानां समेतानां कौरवाणां तथाविधिः ॥ ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः]

---

1. अ-क—नास्तीदमर्धम्
2. ख-ब-ङ-म—समुपेतौ + चेष्टितौ

## ॥ षोडशोऽध्यायः ॥

युद्धाय कुरुसेनानिर्याणम् ॥

सञ्जयः—

यथा च भगवान् व्यासः कृष्णद्वैपायनोऽब्रवीत् ।
तथैव सहितास्सर्वे समाजग्मुर्महाग्रहाः ॥ १

मघाविषयगस्सोमस् तद्दिनं प्रत्यपद्यत ।
दीप्यमानाश्च सम्पेतुर् दिवि सप्त महाग्रहाः ॥ २

द्विधाभूत इवादित्य उदये प्रत्यदृश्यत ।
ज्वलन्त्या शिखया राजन् भानुमानुदितो दिवि ॥ ३

ववाशिरे च दीप्तायां दिशि गोमायुवायसाः ।
काङ्क्षमाणाश्शरीराणि मांसशोणितभोजनाः ॥ ४

अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।
भरद्वाजात्मजश्चैव प्रातरुत्थाय दंसितौ ॥ ५

जयोऽस्तु पाण्डुपुत्राणाम् इत्यूचतुररिन्दमौ ।
युयुधाते तवार्थाय यथा स समयः कृतः ॥ ६

सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
समानीय महीपाला इदं वचनमब्रवीत् ॥ ७

भीष्मः—

इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् ।

गच्छध्वं तेन शक्रस्य ब्रह्मणश्च सलोकताम् ॥ ८
एष वश्शाश्वतः पन्थाः पूर्वैः पूर्वतरं गताः ।
सम्भावयत चात्मानम् अव्यग्रमनसो युधि ॥ ९
नाभागोऽथ ययातिश्च मान्धाता नहुषो नृगः ।
[1]संसिद्धाः परमं स्थानं गताः कर्मभिरीदृशैः ॥ १०
अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे ।
युद्धे तु निधनं याति सोऽस्य धर्मस्सनातनः ॥ ११

सञ्जयः—

एवमुक्ता महीपाला भीष्मेण भरतर्षभ ।
निर्ययुस्तान्यनीकानि शोभयन्तो रथोत्तमाः ॥ १२
स तु वैकर्तनः कर्णस् सामात्यस्सह बन्धुभिः ।
न्यासितस्समरे शस्त्रं भीष्मेण भरतर्षभ ॥ १३
व्यपेतकर्णाः पुत्रास्ते राजानश्चैव तावकाः ।
निर्ययुर्सिंहनादेन नादयन्तो दिशो दश ॥ १४
श्वेतछत्रैः पताकाभिर् ध्वजवारणवाजिभिः ।
तान्यनीकान्यशोभन्त रथैश्च सपदातिभिः ॥ १५
भेरीपणवशङ्खैश्च दुन्दुभीनां च निःस्वनैः ।
रथनेमिनिनादैश्च बभूवाळोलिता मही ॥ १६

---

1. अ-क-ग-अर्जुनस्सगरो वैन्यो ये चान्ये क्षत्रियोत्तमाः ।[अधिकः पाठः]

काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः ।
भ्राजमाना व्यरोचन्त साग्नयः पर्वता इव ॥ १७

तालेन महता भीष्मो पञ्चतालेन केतुना ।
विमलादित्यसङ्काशस् तस्थौ कुरुचमूमुखे ॥ १८

ये त्वदीया महात्मानो राजानो भरतर्षभ ।
यथादेशमवर्तन्त राज्ञश्शान्तनवस्य ते ॥ १९

[1]स तु दुर्योधनस्सैन्ये सहितस्सर्वमागधैः ।
ययौ मातङ्गराजेन राजार्हेण पताकिना ॥ २०

[2]पद्मवर्णस्त्वनीकानां सर्वेषामग्रतस्स्थितः ।
अश्वत्थामा ययौ यत्तस् सिंहलाङ्गूलकेतुना ॥ २१

श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ।
शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः ॥ २२

एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः ।
स्यन्दनैर्वीरकर्माणो भीष्मस्यासन् पुरोगमाः ॥ २३

तेषामपि महोत्सेधाश् शोभयन्तो रथोत्तमान् ।
भ्राजमाना व्यदृश्यन्त जाम्बूनदमया ध्वजाः ॥ २४

जाम्बूनदमयी वेदिः कमण्डलुविभूषिता ।

---

1. ञ-ग-व-ङ-म—यस्तु गोपायनश्शैब्यः सहितः सर्वै
2. अ-क-ग—स्फुरच्छ्वेतातपत्रेण ध्रियमाणश्च मूर्धनि ।
वीज्यमानस्सुचारुभ्यां चामराभ्यां च पार्श्वयोः ॥[अधिकःपाठः].

केतुराचार्यमुख्यस्य द्रोणस्य धनुषा सह ॥ २५
अनेकशतसाहस्रम् अनीकमनुकर्षतः ।
महान् दुर्योधनस्यासीन् नागो मणिमयो ध्वजः ॥ २६
तस्य पौरवकालिङ्गाः काम्भोजाश्च सुदक्षिणाः ।
क्षेमधन्वा च शल्यश्च तस्थुः प्रमुखतो रथाः ॥ २७
स्यन्दनेन महार्हेण केतुना वृषभेण च ।
प्रकर्षन्निव सेनाग्रं मागधस्य कृपो ययौ ॥ २८
तदङ्गपतिना गुप्तं कृपेण च मनस्विना ।
शारदाभ्रप्रतीकाशं प्राच्यानामभवद्बलम् ॥ २९
अनीकप्रमुखे तिष्ठन् वराहेण महायशाः ।
शुशुभे केतुमुख्येन राजतेन जयद्रथः ॥ ३०
शतं रथसहस्राणां तस्यासन् वशवर्तिनः ।
अष्टौ दन्तिसहस्राणि सादिनामयुतानि षट् ॥ ३१
तत्सिन्धुपतिना राजन् पालितं ध्वजिनीमुखम् ।
अनन्तरथनागाश्वम् अशोभत महद्बलम् ॥ ३२
षष्ट्या रथसहस्राणां नागानामयुतेन च ।
पतिस्सर्वकलिङ्गानां ययौ केतुमता सह ॥ ३३
तस्य पर्वतसङ्काशा व्यरोचन्त महागजाः ।
यन्त्रतोमरतूणीरैः पताकाभिरलङ्कृताः ॥ ३४

शुशुभे केतुमुख्येन पावकेन कलिङ्गराट् ।
श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ॥ ३५

[1]केतुमानपि मातङ्गं विचित्रपरमाङ्कुशम् ।
आस्थितस्समरे राजन् मेघस्थ इव भानुमान् ॥ ३६

तेजसा दीप्यमानस्तु वारणोत्तममास्थितः ।
भगदत्तो ययौ राजा यथा वज्रधरस्तथा ॥ ३७

गजस्कन्धगतावास्तां भगदत्तेन सम्मितौ ।
विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ॥ ३८

[2]स रथानीकवान् व्यूहो हस्त्यङ्गोत्तमशीर्षवान् ।
वाजिपक्षः पदात्युग्रः प्रहसन् सर्वतोमुखः ॥ ३९

द्रोणेन विहितो राजन् राज्ञा शान्तनवेन च ।
तथैवाचार्यपुत्रेण बाह्लीकेन कृपेण च[3] ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

---

1. अ-क-ग—शोभमानस्स नृपतिश् शुशुभे चारुविक्रमः । [अधिकःपाठः]
2. अ-क-ग-ङ—अन्ये च बहवो भूपाश् शतशोऽथ सहस्रशः ।
प्रययुः पुरतः कृत्वा भीष्मं कुरुकुलोद्वहम् । [अधिकःपाठः]
3. अ-क-ग—कुरुक्षेत्रं प्रति तदा युद्धाय भरतर्षभ ॥ [अधिकःपाठः]

## ॥ सप्तदशोऽध्यायः ॥

कुरुसेनावर्णनम् ॥

सञ्जयः—

ततो मुहूर्तं तुमुलश् शब्दो हृदयकम्पनः ।
अश्रूयत महाराज योधानां प्रयुयुत्सताम् ॥ १
शङ्खदुन्दुभिनिर्घोषैर् वारणानां च बृंहितैः ।
नेमिघोषै रथानां च दीर्यतीव वसुन्धरा ॥ २
हयानां हेषमाणानां योधानां चैव गर्जताम् ।
क्षणेन खं ततो भूमिश् शब्देनापूरितं तदा ॥ ३
पुत्राणां तव दुर्धर्ष पाण्डवानां तथैव च ।
समकम्पन्त सैन्यानि परस्परसमागमे ॥ ४
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ॥ ५
ध्वजा बहुविधाकारास् तावकानां नराधिप ।
काञ्चनाङ्गदिनो रेजुर् ज्वलिता इव पावकाः ॥ ६
स्वेषां चैव परेषां च समदृश्यन्त भारत ।
महेन्द्रकेतवश्शुभ्रा महेन्द्रसदनेष्विव ॥ ७
काञ्चनैः कवचैर्वीरा ज्वलनार्कसमप्रभैः ।

सन्नद्धास्समदृश्यन्त ग्रहाः प्रज्वलिता इव ॥ ८
कुरुयोधवरा राजन् विचित्रायुधकार्मुकाः ।
[1]उज्ज्वलैरायुधैश्चित्रैस् तलबद्धाः पताकिनः ॥ ९
[2]ऋषभाक्षा महेष्वासाश् चमूमुखगता मुहुः ।
पृष्ठगोपास्तु भीष्मस्य पुत्रास्तव नराधिप ॥ १०
दुश्शासनो दुर्विषहो दुर्मुखो दुष्षहस्तथा ।
विविंशतिश्चित्रसेनो विकर्णश्च महाबलः ॥ ११
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवाश्शलः ।
रथा विंशतिसाहस्रास् तथैषामनुयायिनः ॥ १२
अभीषहाश्शूरसेनाश् शिबयोऽथ वसातयः ।
साल्वा मत्स्यास्तथाम्बष्ठास् त्रिगर्ताः केकयैस्सह ॥ १३
[3]सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यपार्वताः ।
द्वादशैते जनपदास् सर्वे शूरास्तनुत्यजः ॥ १४
सरथा रथवंशेन तेऽभ्यरक्षन् पितामहम् ।
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ॥ १५
मागधेयेन नृपतिस् तथानीकेन चाभ्ययात् ॥ १५॥
रथानां चक्ररक्षाश्च पादरक्षाश्च दन्तिनाम् ।

1. अ-क—नास्तीदमर्धम्
2. अ-क—काञ्चनाङ्गदिनो राजन् ज्वलिता इव पर्वताः । [पाठान्तरम्]
3. अ-क—अर्धमयं नास्ति

अभूवुर् वाहिनीमध्ये शतानामयुतानि षट् ॥ १६॥
पादाताश्च ततोऽगच्छन् धनुश्चर्मासिपाणयः ।
अनेकशतसाहस्राः असङ्ख्याः प्रासयोधिनः ॥ १७॥
अक्षौहिण्यो दशैका च तव पुत्रस्य भारत ।
अदृश्यत महाराज गङ्गेव यमुनान्तरे ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये १८॥ श्लोकाः ]

---

## ॥ अष्टादशोऽध्यायः ॥

युद्धाय पाण्डवसेनानिर्याणम् ॥

---

धृतराष्ट्रः—

अक्षौहिणीं दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः ।
कथमल्पेन सैन्येन प्रतिव्यूहत पाण्डवः ॥ १
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
कथं स भीष्मं कौन्तेयः प्रतिव्यूहत पाण्डवः ॥ २

सञ्जयः—

धार्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः ।

अभ्यभाषत धर्मात्मा धर्मराजो धनञ्जयम् ॥ ३

युधिष्ठिरः—

महर्षेर्वचनात् तात वेदयन्ति बृहस्पतेः ।
[1]संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ॥ ४

सूचीमुखमनीकं स्याद् अल्पानां बहुभिस्सह ।
अस्माकं च तथा सैन्यम् अल्पीयस्सुतरां परैः ॥ ५

एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव ॥ ५॥

सञ्जयः—

तच्छ्रुत्वा धर्मराजस्य प्रत्यभाषत फल्गुनः ॥ ६

अर्जुनः—

एष व्यूहामि ते व्यूहं राजन् परमदुर्जयम् ।
अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ ७

यस्स वात इवोद्धूतस् समरे दुस्सहः परैः ।
धृष्टद्युम्नोऽग्रतो यातु परसैन्यानि भीषयन् ॥ ८

तेजांसि पार्थिवेन्द्राणां स मृद्नन् पुरुषर्षभान् ।
अग्रेण यास्यति स नो युद्धमार्गविचक्षणः ॥ ९

सेनाप्रणेता योऽस्माकं देवानामिव पावकिः ।
यं दृष्ट्वा पार्थिवास्सर्वे दुर्योधनपुरोगमाः ॥ १०

---

1. अ-क-ग—तद्व्यूहवृन्दांल्लोकेषु देवगन्धर्वमानुषाः । [अधिकः पाठः]

विवर्तिष्यन्ति संत्रस्तास् सिंहत्रस्ता मृगा इव ॥ १०॥
एतं सर्वे तु यास्याम प्रकाममकुतोभयाः ।
भीमसेनेन सहितं विष्णुनेव शतक्रतुम् ॥ ११॥
न हि सोऽस्ति पुमाँल्लोके यस्सङ्क्रुद्धं वृकोदरम् ।
दृष्ट्वा ह्यत्युग्रकर्माणं विषहेत नरर्षभम् ॥ १२॥
भीमसेनो गदां बिभ्रद् वज्रसारमयीं दृढाम् ।
चरन् वेगेन महता समुद्रमपि शोषयेत् ॥ १३॥
केकया धृष्टकेतुश्च चेकितानश्च वीर्यवान् ।
एते गच्छन्तु सामात्याः प्रेक्षतस्ते जनाधिप ॥ १४॥
धृतराष्ट्रस्य दायादाः प्रेक्षकास्ते जना इव । १५

सञ्जयः—

[1]ब्रुवाणं तु तथा पार्थे सर्वसैन्यानि भारत ।
अपूजयंस्तदा वाग्भिर् अनुकूलाभिराहवे ॥ १६
एवमुक्त्वा महाबाहुस् तथा चक्रे धनञ्जयः ।
व्यूह्य तानि बलान्याशु प्रययौ फल्गुनस्तथा ॥ १७
सम्प्रयातान् कुरून् दृष्ट्वा पाण्डवानां महाचमूः ।
गङ्गेव पूर्णा स्तिमिता स्पन्दमाना व्यदृश्यत ॥ १८

1. अ-क-ग—श्रुत्वा युधिष्ठिरो वाक्यमर्जुनस्य महात्मनः ।
बभूव मुदितो राजा ह्यर्जुनं सोऽभ्यनन्दत ॥[अधिकः पाठः]

भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च वीर्यवान् ।
नकुलस्सहदेवश्च युयुधानश्च सात्यकिः ॥ १९

बिभ्रन् गदां भीमसेनस् सर्वसारमयीं दृढाम् ।
समुद्यम्य ततः पश्चात् प्रायादक्षौहिणीवृतः ॥ २०
भ्रातृभिस्सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः ॥ २०॥

चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती ।
द्रौपदेयास्ससौभद्राः पृष्ठगोपास्तरस्विनः ॥ २१॥

धृष्टद्युम्नस्तु पाञ्चाल्यस् तेषां गोप्ता महारथः ।
सहितः पृतनाशूरै रथमुख्यैः प्रभद्रकैः ॥ २२॥

शिखण्डी च ततः पश्चाद् अर्जुनेनाभिरक्षितः ।
यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ ॥ २३॥

पृष्ठगोपोऽर्जुनस्यासीद् युयुधानो महाबलः ।
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ॥ २४॥

राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः ।
बृहद्भिः कुञ्जरैर्मत्तैश् चलद्भिरचलैरिव ॥ २५॥

अक्षौहिण्या च पाञ्चाल्यो यज्ञसेनो महामनाः ।
भ्रातृभिस्सह पुत्रैश्च सोऽभ्यरक्षद्युधिष्ठिरम् ॥ २६॥

विराटस्सह पुत्रैश्च पाण्डवार्थे पराक्रमी ।
तेषामादित्यचन्द्राभाः कनकोत्तमभूषणाः ॥ २७॥

नानाचिह्नधरा राजन् रथेष्वासन् महाध्वजाः ॥ २८

[1]समुत्सार्य ततः पश्चाद् धृष्टद्युम्नो महारथः ।
भ्रातृभिस्सहपुत्रैश्च सोऽभ्यरक्षद्युधिष्ठिरम् ॥ २९

त्वदीयानां परेषां च रथेषु विपुलान् ध्वजान् ।
अभिभूयार्जुनस्यैको ध्वजस्तस्थौ महाकपिः ॥ ३०

पदातयस्ततोऽगच्छन् असिशक्त्यृष्टिपाणयः ।
अनेकशतसाहस्रा भीमसेनस्य रक्षिणः ॥ ३१

वारणा दशसाहस्राः प्रभिन्नकरटामुखाः ।
शूरा हेममयैर्जालैर् दीप्यमाना इवाचलाः ॥ ३२

[2]सघण्टा हेमकक्ष्याभिः पताकाभिरलङ्कृताः ।
क्षरन्त इव जीमूता मदान्धाः पद्मगन्धिनः ॥ ३३
राजानमन्वयुः पश्चाज् जीमूता इव वार्षिकाः ॥ ३३॥

भीमसेनो गदां भीमां प्रकर्षन् परिघोपमाम् ।
प्राकर्षत महत् सैन्यं दुराधर्षो महामनाः ॥ ३४॥

तमर्कमिव दुष्प्रेक्ष्यं तपन्तं रश्मिमालिनम् ।
न शेकुस्सर्वतो योधाः प्रतिवीक्षितुमन्तिके ॥ ३५॥

वज्रो नाम महाव्यूहो निर्भयस्सर्वतोमुखः ।
चापविद्युद्ध्वजो घोरो गुप्तो गाण्डीवधन्वना ॥ ३६॥

---

1. अ-क—अर्धद्वयं नास्ति		2. अ-क-ख—नास्तीदमर्धम्

अभ्यतिष्ठन् प्रतिव्यूह्य पाण्डवानां तु वाहिनीम् ।
अजेया मानुषे लोके पाण्डवैरभिरक्षिताः ॥ ३७॥

संध्यां तिष्ठत्सु सैन्येषु सूर्यस्योदयनं प्रति ।
प्रववौ पृष्ठतो वायुर् अनभ्रे स्तनयित्नुमान् ॥ ३८॥

विष्वग्वाताश्च विववुर् नीचैश्शर्करवर्षिणः ।
रजश्चोद्धूयत महत् तमसाच्छादयन् जगत् ॥ ३९॥

पपात महती चोल्का प्राङ्मुखी भरतर्षभ ।
उद्यन्तं सूर्यमाहत्य व्यशीर्यत महास्वना ॥ ४०॥

अथ सज्जीयमानेषु सैन्येषु भरतर्षभ ।
निष्प्रभोऽभ्युदितस्सूर्यस् सघोषा भूश्चचाल ह ॥ ४१॥

व्यशीर्यत सनादा भूस् तदानीं भरतर्षभ ।
निर्घाता बहवो राजन् दिक्षु सर्वासु चाभवन् ॥ ४२॥

प्रादुरासीद्रजस्तीव्रं न प्राज्ञायत किञ्चन ॥ ४३

ध्वजानां धूयमानानां सहसा मातरिश्वना ।
किङ्किणीजालबद्धानां काञ्चनस्रग्विणां तथा ॥ ४४

महतां सपताकानाम् आदित्यसमतेजसाम् ।
सर्वं झणझणीभूतम् आसीत् तालवनेष्विव ॥ ४५

एवं ते पुरुषव्याघ्राः पाण्डवा युद्धनन्दिनः ।
व्यवस्थिताः प्रतिव्यूह्य तव पुत्रस्य वाहिनीम् ॥ ४६

ग्रसन्त इव मज्जानो योधानां भरतर्षभ ।
दृष्ट्वाग्रतो भीमसेनं गदापाणिमवस्थितम् ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये ४७ श्लोकाः]

---

## ॥ एकोनविंशोऽध्यायः ॥

---

कुरुसेनागमनप्रकारवर्णनम् ॥

---

धृतराष्ट्रः—

सूर्योदये सञ्जय के नु पूर्वं
युयुत्सवो हृष्यमाणा इवासन् ।
मामका वा भीष्मनीतास्समीके
पाण्डवा वा भीमनीतास्तदानीम् ॥ १

केषां जघन्यौ सोमसूर्यौ सवायू
केषां सेनां श्वापदा व्याभषन्त ।
केषां यूनां मुखवर्णाः प्रसन्नास्
सर्वं ह्येतद्ब्रूहि तत्त्वं यथावत् ॥ २

सञ्जयः—

उभे सेने तुल्यमेवोपयाते
उभे व्यूहे युक्तरूपे नरेन्द्र ।
उभे चित्रे वनराजिप्रकाशे
[1]तथैवोभे नागरथाश्वपूर्णे ॥ ३

उभे सेने बृहत्यौ तुल्यरूपे
तथैवोभे भारत दुर्विषह्ये ।
तथैवोभे स्वर्गजयोपसृष्टे
तथा व्यूढे सत्पुरुषार्यजुष्टे ॥ ४

पश्चान्मुखाः कुरवो धार्तराष्ट्राः
पश्चात् पार्थाः प्राङ्मुखा योत्स्यमानाः ।
दैत्येन्द्रसेनेव च कौरवाणां
देवेन्द्रसेनेव च पाण्डवानाम् ॥ ५

शुक्रो वायुः पृष्ठतः पाण्डवानां
धार्तराष्ट्रान् श्वापदा व्याभषन्त ।
तेषां गजेन्द्रा मदगन्धातितीव्रा
न सेहिरे तव पुत्रस्य नागाः ॥ ६

दुर्योधनो दन्तिनं पद्मवर्णं
सौवर्णकक्ष्यं जातबलं प्रभिन्नम् ।

1. अ-क—अर्धद्वयं नास्ति

समास्थितो मध्यगतः कुरूणां
संस्तूयमानो वन्दिभिर्मागधैश्च ॥ ७
चन्द्रप्रभं श्वेतमस्यातपत्रं
सौवर्णस्रग्भ्राजते चोत्तमाङ्गे ।
तं सर्वतश्शकुनिः पार्वतीयैस्
सार्धं गान्धारैः पाति गान्धारराजः ॥ ८
भीष्मोऽग्रतस्सर्वसैन्यस्य वृद्धश्
श्वेतच्छत्रश्श्वेतदण्डस्सखड्गः ।
श्वेतोष्णीषः पाण्डुरेण ध्वजेन
श्वेतैरश्वैश्श्वेतशैलप्रकाशः ॥ ९
सैन्यं सर्वं धृतराष्ट्र त्वदीयं
रथाश्वनागं सुदृढं चचाल ।
ये चाम्बष्ठाः क्षत्रिया ये च सिद्धास्
तथा सौवीराः पञ्चनदाश्च शूराः ॥ १०
शोणैर्हयै रुक्मरथो महात्मा
द्रोणो धनुष्पाणिरदीनसत्त्वः ।
आप्तो गुरुः प्रथितस्सर्वराज्ञां
पश्चाच्चमूमिन्द्र इवावभाति ॥ ११
वार्धक्षत्रिस्सर्वसैन्यस्य मध्ये
भूरिश्रवाः पुरुमित्रो जयश्च ।

सात्वा मात्स्याः केकयाश्चापि सर्वे
गजानीकैर्भ्रातरो योत्स्यमानाः ॥ १२

शारद्वतश्चोत्तरार्धं महात्मा
महेष्वासो गौतमश्चित्रयोधी ।
शकैः किरातैर्यवनैः पह्लवैश्च
सार्धं चमूमुत्तरतोऽभिपाति ॥ १३

महारथैरन्धकवृष्णिभोजैस्
सौराष्ट्रकैर्नैकतरात्तशस्त्रैः ।
बृहद्बलं कृतवर्माभिगुप्तं
बलं त्वदीयं दक्षिणेनाभियाति ॥ १४

संशप्तकानामयुतं रथानां
मृत्युर्जयो वाऽर्जुनस्येति सृष्टाः ।
[1]समेत्य तस्थुः पुरतोऽर्जुनस्य
प्रचोदितास्तव पुत्रेण सङ्ख्ये ॥ १५

साग्रं शतसहस्रं तु नागानां तव भारत ।
[2]नागे नागे रथशतं शतञ्चाश्वा रथे रथे ॥ १६

अन्वश्वं दश धानुष्का धानुष्के सप्त चर्मिणः ।

---

1. ख-ग-घ-ङ-म—ततोऽर्जुनं तव राजन् कृतास्त्राः
प्रपातारस्ते त्रिगर्ता बभूवुः । [पाठान्तरम्]

2. अ-क—अर्धद्वयं नास्ति

रथे रथे समभवत् तदा तत्र गजे गजे ॥ १७

आसन् द्विगुणितं चाश्वा ह्यश्वे ह्यश्वे पदातयः ।

तथा चतुर्गुणं योधास् सधनुष्कास्सचर्मिणः ॥ १८

एवं व्यूहान्यनीकानि भीष्मेण तव भारत ।

अव्यूहं मानुषं व्यूहं दैवं गान्धर्वमासुरम् ॥ १९

दिवसे दिवसे प्राप्ते भीष्मश्शान्तनवोऽग्रणीः ।

[1]महारथौघविपुलस् समुद्र इव घोषवान् ॥ २०

कृतवान् धार्तराष्ट्राणां व्यूहः पश्चान्मुखो युधि ॥ २०॥

अनन्तरूपा ध्वजिनी नरेन्द्र

भीमा त्वदीया न तु पाण्डवानाम् ।

तामेव मन्ये बृहतीमधृष्यां

यस्या [2]नेता केशवश्चार्जुनश्च ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां

भीष्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये २१॥ श्लोकाः]

---

1. अ-क—नासीदमर्धम्   2- ख-ङ-म—नेतारौ

## ॥ विंशोऽध्यायः ॥



परसेनादर्शनचकितं युधिष्ठिरं प्रत्यर्जुनेन सयुक्तिनिरूपणं समाश्वासनम् ॥



सञ्जयः—

बृहतीं धार्तराष्ट्रस्य सेनां दृष्ट्वा समुद्यताम् ।
विषादमगमद्राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १

व्यूहं भीष्मेण चाभेद्यं कल्पितं वीक्ष्य पाण्डवः ।
युधिष्ठिरस्तदा राजा विषण्णोऽर्जुनमब्रवीत् ॥ २

युधिष्ठिरः—

धनञ्जय कथं शक्यम् अस्माभिर्योद्धुमाहवे ।
धार्तराष्ट्रैर्महाबाहो येषां योद्धा पितामहः ॥ ३

अक्षोभ्योऽयमभेद्यश्च भीष्मेणामित्रकर्शिना ।
कल्पितश्शास्त्रदृष्टेन विधिना भूरिवर्चसा ॥ ४

ते वयं संशयं प्राप्तास् ससैन्याश्शत्रुकर्शन ।
कथमस्मान्महाव्यूहाद् उद्यातं नो भविष्यति ॥ ५

सञ्जयः—

अथार्जुनोऽब्रवीत् पार्थं युधिष्ठिरममित्रहा ।
विषण्णमभिसम्प्रेक्ष्य त्रस्तां च स्वामनीकिनीम् ॥ ६

अर्जुनः—

प्रज्ञयाभ्यधिकाञ् शूरान् गुणयुक्तान् बहूनपि ।
जयन्त्यल्पतरा येन तन्निबोध विशां पते ॥ ७

तत् तु ते कारणं राजन् प्रवक्ष्याम्यनसूयया ।
नारदस्तमृषिर्वेद भीष्मद्रोणौ च पाण्डव ॥ ८

एतमेवार्थमाश्रित्य युद्धे देवासुरेऽब्रवीत् ।
पितामहः किल पुरा महेन्द्रादीन् दिवौकसः ॥ ९

न तथा बलवीर्याभ्यां विजयन्ते जिगीषवः ।
यथा सत्यानृशंसाभ्यां धर्मेणैवोद्यमेन च ॥ १०

[1]त्यक्त्वाऽधर्मं तथा सर्वे धर्मं चोत्तममाश्रिताः ।
युध्यध्वमनहंकारा यतो धर्मस्ततो जयः ॥ ११

[2]एवं राजन् विजानीहि ध्रुवोऽस्माकं रणे जयः ।
यथा ते नारदः प्राह यतः कृष्णस्ततो जयः ॥ १२

[3]गुणभूतो हि नः कृष्णः पृष्ठमन्वेति मानद ।
ध्रुवं तु विजयश्चास्य सन्निधिश्चापरो गुणः ॥ १३

अनन्ततेजा गोविन्दः शत्रुपूगेषु नित्यशः ।
सनातनोऽयं पुरुषो यतः कृष्णस्ततो जयः ॥ १४

1. अ-क—नास्तीदमर्धम्
2. अ—अर्धषट्कं नास्ति
3. ख-ब-ड-म—नास्तीदमर्धम्

पुरा ह्येष हरिर्भूत्वा वैकुण्ठोऽकुण्ठशासनः ।
सुरासुरानवस्फूर्जन्नब्रवीत् को जयेदिति ॥ १५

अनु कृष्णं जयेमेति यैरुक्तं तत्र तैर्जितम् ।
तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिस्सुरैः ॥ १६

तस्मात् ते न व्यथां काञ्चिद् इह पश्यामि भारत ।
यस्य ते जयमाशास्ते विश्वभुक् त्रिदशेश्वरः ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ६३ ॥ भगवद्गीतापर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ एकविंशोऽध्यायः ॥

---

युधिष्ठिरादीनां युद्धाय निर्गमः ॥ १ ॥ सञ्जयेनोभयसेनयोरभ्युदयवर्णनम् ॥ २ ॥

---

सञ्जयः—

ततो युधिष्ठिरो राजा स्वां सेनां समचोदयत् ।
प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ ॥ १

यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाः ।
स्वर्गं परममिच्छन्तस् सङ्ग्रामाय कृतोद्यमाः ॥ २

मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना ।
धृष्टद्युम्नस्तथात्युग्रो भीमसेनेन पालितः ॥ ३
अनीकं दक्षिणं राजन् युयुधानेन पालितम् ।
श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता ॥ ४

महेन्द्रयानप्रतिमं रथं तु
सोपस्करं हाटकरत्नचित्रम् ।
युधिष्ठिरः काञ्चनचित्रभाण्डं
समास्थितो नागबलस्य मध्ये ॥ ५
समुच्छ्रितं दान्तशलाकमस्य
सुपाण्डुरं छत्रमतीव भाति ।
[1]प्रदक्षिणं चैवमुदाहरन्तो
महर्षयस्तुष्टुवुस्तं नरेन्द्रम् ॥ ६
पुरोहिताश्शत्रुवधं ब्रुवन्तो
जप्यैश्च मन्त्रैश्च तथौषधीभिः ।
[2]तदाशिषं चक्रुरनेकधैव
युधि स्थितस्यापि युधिष्ठिरस्य ॥ ७

---

1. अ-क-ग—तस्याग्रमूर्धन्यपि धार्यमाणं
विभाति चाकाश इवेन्दुमण्डलम् ।
सुशोभनैश्चामरैर्वीज्यमानं
किरीटिनं कुण्डलिनं सुवस्त्रम् ॥ [अधिकःपाठः]

2. ध-ङ-म—युधिष्ठिरं परिवव्रुस्समेताः
सर्वे यथा स्वस्त्ययनं ब्रुवन्तः । [पाठान्तरम्]

ततस्स वस्त्राणि तथैव गाश्च
फलानि पुष्पाण्यथ चैव निष्कान् ।
कुरूत्तमो ब्राह्मणानां महात्मा
ददन् ययौ शक्र इवामरेभ्यः ॥ ८

सहस्रसूर्यश्शतकिङ्किणीकः
परार्ध्यजाम्बूनदहेमचित्रः ।
रथोऽर्जुनस्याग्निरिव प्रदीप्तो
विभ्राजते श्वेतहयस्सुचक्रः ॥ ९

तमास्थितः केशवसङ्गृहीतः
कपिध्वजो गाण्डिवबाणपाणिः ।
धनुर्धरो यस्य समः पृथिव्यां
न विद्यते नो भविता कथञ्चित् ॥ १०

उद्वर्तयिष्यंस्तव पुत्रसेनाम्
अतीव रौद्रं हि बिभर्ति रूपम् ।
अनायुधो यस्सुभुजो भुजाभ्यां
नराश्च नागानिह भस्म कुर्यात् ॥ ११

स भीमसेनस्सहितो यमाभ्यां
वृकोदरो वीररथस्य गोप्ता ।
तं तत्र सिंहर्षभतुल्यवीर्यं
लोके महेन्द्रप्रतिमानकल्पम् ॥ १२

समीक्ष्य सेनाग्रगतं त्वदीयाः
प्रविव्यथुः पङ्कगता यथा गौः ।
वृकोदरं वारणराजदर्पं
योधास्त्वदीया भयविग्नसत्त्वाः ॥ १३

विषण्णरूपाः कुरुसैन्यमुख्याः
बभूविरे शुष्ककण्ठा विरूपाः ॥ १३॥

अनीकमध्ये तिष्ठन्तं राजपुत्रं दुरासदम् ।
अब्रवीद्भरतश्रेष्ठं गुडाकेशं जनार्दनः ॥ १४॥

श्रीभगवान्—

य एष गोप्ता प्रतपन् बलस्थो
यो नस्सेनां सिंह इवेक्षते च ।
स एष भीष्मः कुरुवंशकेतुर्
येनाहृतास्त्रिशतं वाजिमेधाः ॥ १५॥

एतान्यनीकानि महानुभावं
गूहन्ति मेघा इव रश्मिमन्तम् ।
एतानि हत्वा पुरुषप्रवीर
काङ्क्षस्व युद्धं पुरुषर्षभेण ॥ १६॥

धृतराष्ट्रः—

केषां प्रहृष्टास्तत्राग्रे योधा योद्धुं व्यवस्थिताः ।
उदग्रमनसः केऽत्र के वा दीना विचेतसः ॥ १७॥

के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पने ।
मामकाः पाण्डवाश्चैव तन्ममाचक्ष्व सञ्जय ॥ १८॥

कस्य सेनासमुदये गन्धो माल्यसमुद्भवः ।
वायुः प्रदक्षिणश्चैव योधानामभिगर्जताम् ॥ १९॥

सञ्जयः—

उभयोस्सेनयोस्तत्र योधा जहृषिरे तदा ।
[1]स्रजामुदारगन्धानाम् उभयत्र समुद्भवः ॥ २०॥

संहतानामनीकानां व्यूढानां भरतर्षभ ।
संसर्पतामुदीर्णानां विमर्दस्सुमहानभूत् ॥ २१॥

वादित्रशब्दस्तुमुलश् शङ्खशब्दविमिश्रितः ।
कुञ्जराणां च नदतां सैन्यानां सम्प्रहृष्यताम् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २२॥ श्लोका]

---

1. अ-क-च—स्रग्दोमु; ख-ग—स्रजामुदाम

## ॥ द्वाविंशोऽध्यायः ॥

युधिष्ठिरेण रथादवरुह्य भीष्मद्रोणाद्यभिवादनपूर्वकं तेभ्यो जयाशीर्ग्रहणम् ॥१॥ युधिष्ठिरे पुनर्भ्रातृभिस्सह रथारूढे सन्नाहभेरीवादनम् ॥२॥

सञ्जयः—

ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारिणम् ।
पुनरेव महानादं व्यसृजन्त महारथाः ॥ १
पाण्डवास्सोमकाश्चैव ये चैषामनुयायिनः ।
दध्मुः प्रमुदिताश्शङ्खान् वीरास्सागरसम्भवान् ॥ २
तत्र भेर्यश्च पणवाः कङ्करा गोविषाणकाः ।
[1]सहसैवाभ्यहन्यन्त ततश्शब्दो महानभूत् ॥ ३
अथ देवास्सगन्धर्वाः पितरस्समहेश्वराः ।
सिद्धचारणसङ्घाश्च समीयुस्ते दिदृक्षया ॥ ४
ऋषयश्च महाभागाः पुरस्कृत्य शतक्रतुम् ।
समीयुस्तत्र सहिता द्रष्टुं तद्वैशसं महत् ॥ ५
ते सेने स्तिमितेवास्ताम् ईक्षमाणे परस्परम् ।
गङ्गायमुनयोर्वेगौ यथैवैत्य परस्परम् ॥ ६
एवं प्रवृत्ते ते सेने निश्शब्दे जनसंसदि ।

1. ब—अर्धद्वयं नास्ति

चित्रे पट इवालेख्ये दर्शनीयतरे शुभे ॥ ७

ततो युधिष्ठिरो वीक्ष्य युद्धाय स समुद्यतः ।
ते सेने सागरप्रख्ये मुहुः प्रज्वलिते नृप ॥ ८

विमुच्य कवचं वीरो निक्षिप्य च वरायुधम् ।
अवरुह्य रथात् तूर्णं पद्भ्यामेव कृताञ्जलिः ॥ ९

पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः ।
वाग्यतः प्रययौ धीरः प्राङ्मुखो रिपुवाहिनीम् ॥ १०

तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो वृकोदरः ।
अवतीर्य रथात् तूर्णं भ्रातृभिस्सहितो वशी ॥ ११

भीतं युधिष्ठिरं मत्वा भीमसेनः प्रतापवान् ।
वासुदेवश्च भगवान् पृष्ठतोऽनुजगाम ह ॥ १२

सात्यकिश्चार्जुनश्चैव ह्यभिमन्युश्च वीर्यवान् ।
युधामन्युप्रभृतयो राजानस्तं समुत्सुकाः ॥ १३

अर्जुनः—

किं ते व्यवसितं राजन् यदस्मानपहाय वै ।
पद्भ्यामेव प्रयातोऽसि प्रमुखे रिपुवाहिनीम् ॥ १४

भीमः—

क्व गमिष्यसि राजेन्द्र निक्षिप्य कवचायुधम् ।
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पाण्डव ॥ १५

नकुलः—

[1]एवं गते त्वयि श्रेष्ठ मम भ्रातरि पार्थिव ।
भीस्समन्वेति हृदयं ब्रूहि गन्ताऽभयं क नु ॥ १६

सहदेवः—

अस्मिन् नृपसमूहे वै वर्तमाने महाहवे ।
योद्धव्ये क नु गन्तासि शत्रूनभिमुखे स्थितान् ॥ १७

सञ्जयः—

एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दनः ।
नोवाच वाग्यतः किञ्चिद् गच्छत्येव युधिष्ठिरः ॥ १८

तानुवाच महाप्राज्ञो वासुदेवो महामनाः ।
अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव ॥ १९

एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च ।
अनुमान्य गुरून् वृद्धान् योत्स्यते पार्थिवोऽरिभिः ॥ २०

श्रूयते हि पुराकल्पे गुरूननुमान्य यः ।
युद्धायावतरत्येव तस्य नास्ति जयो रणे ॥ २१

यस्तु युद्धे समुत्पन्ने गुरून् दृष्ट्वाऽथ दंशितान् ।

1. क—ते त्वया वै गमिष्यन्ति त्यक्तासुन्दुर्बला युधि ।
राजा भीम महाबाहो वार्यतामस मानद ॥ [पाठान्तरम्]

नकुलः—

कैवं गमिष्यसि श्रेष्ठ त्यक्त्वास्मान्दुर्बलोयथा ।
राजापि त्वं महाबाहो वाग्यतो मन्युमानिव ॥ [पाठान्तरम्]

सहदेवः—

अनुमान्य यथाशास्त्रं तैस्तु युद्धे महत्तरैः ॥ २२
ध्रुवं तस्य जयो युद्धे भवेदिति मतिर्मम ॥ २२॥

एवं ब्रुवति कृष्णे तु निश्शब्दास्सर्वसैनिकाः ।
नेत्रैरनिमिषैस्सर्वैः प्रेक्षन्ते स्म युधिष्ठिरम् ॥ २३॥

हाहाकारो महानासीद् धार्तराष्ट्रचमूं प्रति ।
दृष्ट्वा युधिष्ठिरं दूराद् धार्तराष्ट्रस्य सैनिकाः ॥ २४॥

मिथस्सङ्कथयांचक्रुर् [1]एषोऽस्ति कुलपांसनः ।
व्यक्तं भीत इवाभ्येति राजासौ भीष्ममन्तिकात् ॥ २५॥
युधिष्ठिरस्ससोदर्यश् शरणार्थमुपागतः ॥ २६

धनञ्जये कथं नाथे पाण्डवे च वृकोदरे ।
नकुले सहदेवे च धृष्टद्युम्ने च सात्यकौ ॥ २७

न नूनं क्षत्रियकुले जातस्सम्प्रथिते भुवि ।
यदस्य हृदयं भीतम् अल्पसत्त्वस्य संयुगे ॥ २८

ततस्तु नृपतेस्सेना [2]ह्वीकीकृत्वा युधिष्ठिरम् ।
निःशब्दा समभूद्राजन् दृष्ट्वा प्राप्तं च पाण्डवम् ॥ २९

किं नु वक्ष्यति राजाऽसौ धर्मपुत्रो युधिष्ठिरः ।
किं नु वक्ष्यति भीष्मोऽसौ भारतानां धुरन्धरः॥ ३०
किं भीमस्समरश्लाघी किं नु कृष्णार्जुनाविति ।

1. ङ-म—नैषोऽस्ति 2. ख-ग-घ-ङ-म—धिक्कृत्य तु

विवक्षितं किमस्येति संशयस्सुमहानभूत् ॥ ३१

उभयोस्सेनयो राजन युधिष्ठिरकृते तदा ॥ ३१॥

स विगाह्य चमूं शत्रोश् शरशक्तिसमाकुलाम् ।
भीष्ममेवाभ्ययात् तूर्णं भ्रातृभिः परिवारितः ॥ ३२॥

तमुवाच ततो धीमान् पादौ सम्पीड्य पाण्डवः ।
भीष्मं शान्तनवं राजा युद्धाय समुपस्थितम् ॥ ३३॥

युधिष्ठिरः—

आमन्त्रये त्वां दुर्धर्ष त्वया योत्स्याम्यहं सह ।
अनुजानीहि मां राजन् आशिषश्च प्रयोजय ॥ ३४॥

जयेयं च रिपून् सर्वान् अनुज्ञातस्त्वयाऽनघ ।
युध्यन्तं मां रणे वीर त्वमनुज्ञातुमर्हसि ॥ ३५॥

भीष्मः—

यद्येवं नाभिगच्छेस्त्वं युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज पराभावाय पाण्डव ॥ ३६॥

प्रीतोऽहं पुत्र युध्यस्व जयमाप्नुहि पाण्डव ।
यत् तेऽभिलषितं चान्यत् तदवाप्नुहि संयुगे ॥ ३७॥

व्रियतां च वरः पार्थ किमस्मत्तोऽभिकाङ्क्षसि ।
एवं गते महाराज युद्धादन्यत् किमिच्छसि ॥ ३८॥

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
एतत् सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ३९॥

अतस्त्वां क्लीबवद्वाक्यं ब्रवीमि कुरुनन्दन ।
हृतोऽस्म्यर्थेन कौरव्य युद्धादन्यत् किमिच्छसि ॥ ४०॥

युधिष्ठिरः—

मन्त्रयस्व महाप्राज्ञ हितैषी मम नित्यशः ।
युध्यस्व कौरवस्यार्थे ममैष सततं वरः ॥ ४१॥

भीष्मः—

मन्त्रयिष्याम्यहं राजन् यच्च ते हितमुत्तमम् ।
कामं योत्स्ये परस्यार्थे ब्रूहि यत् ते विवक्षितम् ॥ ४२॥

युधिष्ठिरः—

कथं जयेयं सङ्ग्रामे भवन्तमपराजितम् ।
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि ॥ ४३॥

भीष्मः—

न तं पश्यामि कौन्तेय यो मां युध्यन्तमाहवे ।
विजयेत पुमान् कश्चित् साक्षादपि शतक्रतुः ॥ ४४॥

युधिष्ठिरः—

हन्त पृच्छामि तस्मात् त्वां पितामह नमोऽस्तु ते ।
जयोपायं हि मे ब्रूहि आत्मनस्समरे परैः । ४५॥

भीष्मः—

न शत्रुं तात पश्यामि समरे यो जयेत माम् ।
अयुध्यमानं संहत्य सौहृदेन परिप्लुतम् ॥ ४६॥

न्यस्तशस्त्रं निरुद्योगं हन्युर्मां शत्रवो युधि ।
निक्षिप्तशस्त्रे पतिते विमुक्तकवचे तथा ॥ ४८॥

द्रवमाणे च भीते च तवास्मीति च यो वदेत् ।
[1]स्त्रियं स्त्रीनामधेयं च विकलं चाप्यपुत्रकम् ॥ ४९॥

[2]अप्रशस्ते च हीने च न युद्धं रोचयाम्यहम् ।
इदश्च गदितं पार्थ परमं व्रतमाहवे ॥ ५०॥

न तावन्मृत्युकालो मे पुनरागमनं कुरु ॥ ५१

सञ्जयः—

ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दन ।
शिरसा प्रतिगृह्याथ भूयस्तमभिवाद्य च ॥ ५२
प्रायात् पुनर्महाराज आचार्यस्य रथं प्रति ।
पश्यतां सर्वसैन्यानां मध्ये तं भ्रातृभिस्सह ॥ ५३
स द्रोणमभिवाद्याथ कृत्वा चापि प्रदक्षिणम् ।
उवाच वाचा दुर्धर्ष आत्मनिश्श्रेयसं वचः ॥ ५४

युधिष्ठिरः—

आमन्त्रये त्वा भगवन् योत्स्ये विगतकल्मषः ।
जयेयं च रिपून् सर्वान् अनुज्ञातस्त्वया द्विज ॥ ५५

द्रोणः—

यदि मां नाभिगच्छेस्त्वं युद्धाय कृतनिश्चयः ।

1. ग-घ-ङ-म—स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके ।
2. ख-ग—अप्रसूतेव भीते च; घ-ङ-म—अप्रसूते च हीने च

शपेयं त्वा महाराज पराभावाय नित्यशः ॥ ५६

तद्युधिष्ठिर तुष्टोऽस्मि पूजितश्च त्वयाऽनघ ।
अनुजानामि युध्यस्व विजयं समवाप्नुहि ॥ ५७

करवाणि च कं कामं ब्रूहि यत् ते विवक्षितम् ।
एवं गते महाराज युद्धादन्यत् किमिच्छसि ॥ ५८

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ५९

ब्रवीम्यहं क्लीबभावात् [1]त्वदर्थे कुरुनन्दन ।
योत्स्येऽहं कौरवस्यार्थे त्वया सार्धं विशां पते ॥ ६०

युधिष्ठिरः—

जयमाशास्स्व मे ब्रह्मन् मन्त्रयस्व च यद्धितम् ।
युध्यस्व कौरवस्यार्थे वर एष वृतो मया ॥ ६१

द्रोणः—

ध्रुवस्ते विजयो राजन् यस्य मन्त्री हरिस्तव ।
अहं त्वामनुजानामि रणे शत्रून् विजेष्यसि ॥ ६२

यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ।
युध्यस्व गच्छ कौन्तेय पृच्छ वा किं ब्रवीमि ते ॥ ६३

युधिष्ठिरः—

पृच्छामि त्वा द्विजश्रेष्ठ शृणु यन्मेऽभिकाङ्क्षितम् ।

---

1. ब-ङ-म—अर्थार्थे

कथं जयेयं समरे भवन्तमपराजितम्[1] ॥ ६४

द्रोणः—

न तेऽस्ति विजयस्तावद् [2]यावद्वै मारयाम्यहम् ।
ममाशु निधने राजन् यतस्व सह सोदरैः ॥ ६५

युधिष्ठिरः—

हन्त कस्मान्मम ब्रूहि वधोपायं त्वमात्मनः ।
आचार्य प्रणिपत्याहं पृच्छामि त्वां नमोऽस्तु ते ॥ ६६

द्रोणः—

न शत्रुं तात पश्यामि यो मां हन्याद्रणे स्थितम् ।
युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ॥ ६७

यो मां प्रायगतं हन्यान् न्यस्तशस्त्रं तथा विभो ।
स वै हन्यान्महाराज सत्यमेतद्ब्रवीमि ते ॥ ६८

शस्त्रं चाहं रणे जह्यां श्रुत्वा सुमहदप्रियम् ।
श्रद्धेयवाक्यात् पुरुषाद् इति सत्यं ब्रवीमि ते ॥ ६९

सञ्जयः—

एतच्छ्रुत्वा महाराज भारद्वाजस्य पश्यतः ।
अनुमान्य तमाचार्यं प्रायाच्छारद्वतं प्रति ॥ ७०

सोऽभिवाद्य कृपं राजा कृत्वा चैव प्रदक्षिणम् ।

---

1. अ-क-ग—को हि शक्तः पुमाञ्जेतुं भवन्तमपराजितम् ।[अधिकः पाठः]
2. ख-म—यावद्युध्यामहं रणे घ-ङ—यावद्युध्यां महारणे

उवाच दुर्धर्षतमं वाक्यं वाक्यविशारदः ॥ ७१

युधिष्ठिरः—

अनुमानये त्वां योत्स्यामि गुरो विगतकल्मषः ।
जयेयं च रिपून् सर्वान् अनुज्ञातस्त्वयाऽनघ ॥ ७२

कृपः—

यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज पराभावाय सर्वशः ॥ ७३

किं ते करोमि वै कामं ब्रूहि पाण्डवनन्दन ।
एवं गते महाराज युद्धादन्यत् किमिच्छसि ॥ ७४

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ७५

तेषामर्थे महाराज योद्धव्यमिति मे मतिः ।
अतस्त्वां क्लीबवद्ब्रूयां युद्धादन्यत् किमिच्छसि ॥ ७६

युधिष्ठिरः—

हन्त पृच्छामि ते तस्माद् आचार्य शृणु मे वचः ॥ ७६॥

सञ्जयः—

इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः ।
गौतमस्तं प्रत्युवाच विज्ञायास्य विवक्षितम् ॥ ७७॥

गौतमः—

अवध्योऽहं महीपाल युद्धस्व जयमाप्नुहि ॥ ७८

प्रीतस्तेऽभिगमेनाहं जयं तव नराधिप ।

आशासिष्ये सदोत्थाय सत्यमेतद्ब्रवीमि ते ॥ ७९

सञ्जयः—

एतच्छ्रुत्वा महाराज गौतमस्य वचस्तदा ।
अनुमान्य कृपं राजा प्रययौ यत्र मद्रराट् ॥ ८०

स शल्यमभिवाद्याथ कृत्वा चापि प्रदक्षिणम् ।
उवाच राजा दुर्धर्षम् आत्मनिश्श्रेयसं वचः ॥ ८१

युधिष्ठिरः—

अनुमानये त्वां योत्स्यामि परान् विगतकल्मषः ।
जयेयं च महाराजन् अनुज्ञातस्त्वया रिपून् ॥ ८२

शल्यः—

यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज पराभावाय वै रणे ॥ ८३

तुष्टोऽस्मि पूजितश्चास्मि यत् काङ्क्षसि तदस्तु ते ।
अनुजानामि चैव त्वां युध्यस्व जयमाप्नुहि ॥ ८४

ब्रूहि चैवापरं वीर केनार्थी किं ददामि ते ।
[1]एवं गते महाराज युद्धादन्यत् किमिच्छसि ॥ ८५

युधिष्ठिरः—

मन्त्रयस्व महाराज नित्यं मे हितमुत्तमम् ।

---

1. अ-क—इदमर्धं नास्ति

कामं युद्ध्यस्व रिपवे वरमेतद्वृणोम्यहम् ॥ ८६

शल्यः—

मन्त्रयिष्ये महाराज नित्यं त्वद्धितमुत्तमम् ।
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ॥ ८७

इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ।
तेषामर्थे महाराज योद्धव्यमिति मे मतिः ॥ ८८

अतस्त्वां क्लीबवद्ब्रूमि युद्धादन्यत् किमिच्छसि ॥ ८८॥

युधिष्ठिरः—

एवमेव वचस्सत्यम् उद्योगे यस्त्वया कृतः ।
सूतपुत्रस्य राजेन्द्र कार्यस्तेजोवधस्त्वया ॥ ८९॥

त्वां हि योक्ष्यति सूतत्वे सूतपुत्रस्य मातुल ।
दुर्योधनो रणे शूरम् इति मे नैष्ठिकी मतिः ॥ ९०॥

शल्यः—

सम्पत्स्यते च ते कामः कुन्तीपुत्र यथेप्सितम् ।
गच्छ युध्यस्व राजेन्द्र करिष्ये यद्धितं तव ॥ ९१॥

सञ्जयः—

अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरम् ।
निर्जगाम महासैन्याद् भ्रातृभिः परिवारितः ॥ ९२॥

वासुदेवस्तु राधेयम् अभिगम्य जगाद वै ॥ ९३

श्रीभगवान्—
श्रुतं मे कर्ण भीष्मस्य द्वेषात् किल न योत्स्यसि ।
[1]तस्माद्विरम राधेय यावद्भीष्मो न हन्यते ॥ ९४

[2]हते तु भीष्मे राधेय पुनरेष्यासि संयुगम् ।
पाण्डुपुत्रस्य साहाय्यं यदि पश्यसि चेत् क्षमम् ॥ ९५

कर्णः—
न विप्रियं करिष्यामि धार्तराष्ट्रस्य केशव ।
त्यक्तप्राणं हि मां विद्धि दुर्योधनहितैषिणम् ॥ ९६

सञ्जयः—
तच्छ्रुत्वा वचनं कृष्णस् संन्यवर्तत भारत ।
[3]युधिष्ठिरपुरोगैश्च पाण्डवैस्सह सङ्गतः ॥ ९७
अथ सैन्यस्य मध्ये तु प्राक्रोशत् पाण्डवाग्रजः ॥ ९७॥

युधिष्ठिरः—
योऽस्मान् वृणोति तमहं वरये साह्यकारणात् ।
[4]स रक्षाकारणादस्माद् आशु यातु मदन्तिकम् ॥ ९८॥

सञ्जयः—
तच्छ्रुत्वा धर्मराजस्य वाक्यमद्भुतकर्मणः ।

---

1. अ-क—इदमर्धं नास्ति
2. अ-क-ग—तस्माद्वरय राजेन्द्र पाण्डुपुत्रं युधिष्ठिरम् ।
तेषां त्वमग्रणीश्श्रेष्ठ पाण्डवानां भविष्यसि ।
ज्येष्ठस्त्वमनुजास्ते वै पूजितस्त्वं भविष्यसि । [अधिकःपाठः]
3. ख—इदमर्धं नास्ति
4. ख-ग-घ-ङ-म—दशार्धानि न सन्ति

सर्वे योधा रणे तस्मिंस् तूष्णीमासन् नराधिपाः ॥ ९९॥
युयुत्सुरपि तच्छ्रुत्वा धर्मराजस्य धीमतः ।
वाक्यं तद्वाक्यकुशलो रहस्येनमुपागमत् ॥ १००॥
प्रणिपत्याथ धर्मज्ञं धर्मराजं युधिष्ठिरम् ।
भ्रातृभिस्सहितं वीरम् इदं वचनमब्रवीत् ॥ १०१॥

युयुत्सुः—

युयुत्सुरपि धर्मात्मा वेश्यापुत्रस्तवात्मजः ।
अहं योत्स्यामि मिषतस् तव राजन् युधिष्ठिर ॥ १०२॥
धृतराष्ट्रात्मजैस्सर्वैस् सङ्ख्ये दुर्योधनादिभिः ।
[1]युष्मदर्थे महाराज यदि मां वृणुषेऽनघ ॥ १०३॥

युधिष्ठिरः—

एह्येहि सर्वे योत्स्यामस् तव भ्रातॄनपण्डितान् ॥ १०४
युयुत्सो वासुदेवश्च त्वमहं भ्रातरश्च मे ।
न भविष्यन्ति ते बाला धार्तराष्ट्रा न संशयः ॥ १०५
[2]वृणोमि त्वां महाबाहो युध्यस्व मम कारणात् ॥ १०५॥
त्वयि पिण्डश्च तन्तुश्च धृतराष्ट्रस्य दृश्यते ।
ततो जलक्रिया चैव त्वया कार्या तथैव च ॥ १०६॥
[3]त्वत्पक्षीयाश्च राजानस् तेषां चैव पदानुगाः ।

---

1. ख-ग-घ-ङ-म—अथ तं समभिप्रेप्सुं युयुत्सुरिदमब्रवीत् ।
प्रीतात्मा धर्मराजानं कुन्तीपुत्रं युधिष्ठिरम् ।
अहं योत्स्यामि भवतः संयुगे धृतराष्ट्रजान् ॥
[अधिकः पाठः]

2. अ-क—अर्धत्रयं नास्ति

3. ख-ग-घ-ङ-म—द्वादशार्धानि न सन्ति

संयुगे नाशमेष्यन्ति दुर्मदान्धा हि शीघ्रतः ॥ १०७॥

त्वं तात कुशली धीमन् भविष्यसि न संशयः ।
श्रोष्यते रोदनं स्त्रीणां त्वदीयानां नृपात्मज ॥ १०८॥

नन्दयिष्यसि मां तात युद्धं कृत्वा सुदुष्करम् ।
मदर्थे शत्रुभिस्तात धार्तराष्ट्रैस्सुदुर्मदैः ॥ १०९॥

सदा भवान् मत्प्रियश्च भवतीति हि मे मतिः ।
एतदर्थं युयुत्सो त्वं नन्दितोऽसि मयाऽनघ ॥ ११०॥

अतस्त्वां संयुगे तात वृणोमि प्रियमात्मनः ।
शत्रुभिस्त्वं महेष्वास युध्यस्व मम कारणात् ॥ १११॥

युद्धे मृता भविष्यन्ति धार्तराष्ट्रा न संशयः ।
मृत्युर्हि दृश्यते तेषाम् अधर्माद्धि नृपात्मज ॥ ११२॥

भजस्वास्मान् राजपुत्र भजमानान् महाद्युते ।
न भविष्यति दुर्बुद्धिर् धार्तराष्ट्रोऽत्यमर्षणः ॥ ११३॥

सञ्जयः—

ततो युयुत्सुः कौरव्य परित्यज्य सुतं तव ।
स सत्यमिति मन्वानो युधिष्ठिरवचस्तदा ॥ ११४॥

जगाम पाण्डुपुत्राणां सेनां विश्राव्य दुन्दुभिम् ॥ ११५

अवसद्धार्तराष्ट्रस्य कुत्सयन् कर्म दुष्कृतम् ।

[1]सेनामध्ये हि तैस्साकं युद्धाय कृतनिश्चयः ॥ ११६

ततो युधिष्ठिरो राजा सम्प्रहृष्टस्सहानुजः ।
जग्राह कवचं भूयो काञ्चनं शतचन्द्रवत् ॥ ११७

[2]भीमोऽपि कवचं राजन् नावबन्ध रणोत्सुकः ।
अर्जुनस्सह कृष्णेन कवचं धृतवानभूत् ॥ ११८

नकुलस्सहदेवश्च दधतुः कवचे दृढे ।
धृष्टद्युम्नपुरोगाश्च सेनामाधृत्य सर्वतः ॥ ११९

नृपास्सर्वे महीपाल योद्धुकामास्सुदंशिताः ।
रणायाभिमुखा वीरास् तस्थुस्सङ्ग्राममूर्धनि ॥ १२०

दंशितास्सर्व एवैते पाण्डवा भरतर्षभ ।
रथानारुरुहुस्सर्वे भूय एव नृपात्मजाः ॥ १२१

यथापूर्वं यथान्याय्यं प्रत्यव्यूहन्त ते पुनः ।
तदा जहृषिरे सर्वे नानावर्णा जनास्तदा ॥ १२२

कुञ्जरैः कुञ्जरारोहा वाजिभिश्चाश्वसादिनः ।
पत्तयश्च विनर्दन्तो बभूवुस्सम्प्रहर्षिताः ॥ १२३

अवादयन् नरास्तत्र वादित्राणि समन्ततः ।
दुन्दुभीन् गोमुखान् भेरीः काहलान् पुष्करानपि ॥ १२४

---

1. ख-व-ङ-म—इदमर्धं नास्ति
2. ख-ग-व-ङ-म—चतुर्दशार्धानि न सन्ति

[1]सिंहनादांश्च विविधान् विनेदुः पुरुषर्षभाः ॥ १२४॥
रथस्थान् पुरुषव्याघ्रान् पाण्डवान् प्रेक्ष्य पार्थिवाः ।
धृष्टद्युम्नादयस्सर्वे पुनर्जहृषिरे मुदा ॥ १२५॥
गौरवं पाण्डुपुत्राणां सत्यं धर्मज्ञतामपि ।
दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् ॥ १२६॥
सौहृदं च कृपां चापि प्राप्ते काले महात्मनाम् ।
दयां च ज्ञातिषु परां कथयांचक्रिरे नृपाः ॥ १२७॥
साधुसाध्विति सर्वत्र निश्चेरुस्स्तुतिसंयुताः ।
वाचः पुण्याः कीर्तिमतां मनोहृदय[2]हर्षणाः ॥ १२८॥
म्लेच्छाश्चार्याश्च ये तत्र ददृशुश्शुश्रुवुस्तदा ।
वृत्तान्तं पाण्डुपुत्राणां रुरुदुर्बाष्पगद्गदाः ॥ १२९॥
ततो जघ्नुर्महाभेरीश् पटहान् गोमुखांस्तथा ।
शङ्खांश्च गोक्षीरनिभान् दध्मुर्हृष्टा मनस्विनः ॥ १३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये १३०॥ श्लोकाः ]

---

1. ख-ग-घ-ङ-म—प्रत्यपद्यन्त च पुनस्ते रथान्पुरुषर्षभाः ।
ततो राजन्यथाव्यूहं प्रत्यव्यूह्यन्त ते पुनः ॥
अवादयन्दुन्दुभींश्च शतशश्चैव पुष्करान् ॥
[अधिकः पाठः]

2. ख-घ-म—हर्षिणः

॥ श्रीः ॥

# ॥ श्रीमद्भगवद्गीता ॥

## ॥ त्रयोविंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १ ॥

*धृतराष्ट्रः—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १

सञ्जयः—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २

पश्यैतां पाण्डुपुत्राणाम् आचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५

---

* ङ-म—कोशयोः गीता न लिखिता प्रसिद्धत्वात्

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६

अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८

अन्ये च बहवश्शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणास् सर्वे युद्धविशारदाः ॥ ९

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १०

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व एव हि ॥ ११

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैश् शङ्खं दध्मौ प्रतापवान् ॥ १२

ततश्शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३

ततश्श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।

पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६
काश्यश्च परमेष्वासश् शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुश् शङ्खान् दध्मुः पृथक् पृथक् ॥ १८
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो [1]व्यनुनादयन् ॥ १९
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २०
हृषीकेशं तदा वाक्यम् इदमाह महीपते ॥ २०॥

अर्जुनः—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ।
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ॥ २१॥
कैर्मया सह योद्धव्यम् अस्मिन् रणसमुद्यमे ॥ २२
योत्स्यमानानवे[2]क्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर् युद्धे प्रियचिकीर्षवः ॥ २३

---

1. अ-क-ख-ग—ऽप्यनुनादयत्     2. अ-क-ख—क्ष्ये

सञ्जयः—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४

भीष्मद्रोणप्रमुखतस् सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥ २६

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयस् सर्वान् बन्धूनवस्थितान् ॥ २७

कृपया परयाऽविष्टो विषीदन्निदमब्रवीत् ॥ २७॥

अर्जुनः—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८॥

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९

गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३०

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२
येषामर्थे काङ्क्षितं नो राज्यं भोगास्सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३
आचार्याः पितरः पुत्रास् तथैव च पितामहाः ।
मातुलाश्श्वशुराः पौत्रास् स्यालास्सम्बन्धिनस्तथा ॥ ३४
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५
निहत्य धार्तराष्ट्रान् नः का प्रीतिस्स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनस्स्याम माधव ॥ ३७
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९
कुलक्षये प्रणश्यन्ति कुलधर्मास्सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नम् अधर्मोऽभिभवत्युत ॥ ४०
अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४

अहो बत महत् पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५

यदि मामप्रतीकारम् अशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस् तन्मे क्षेमतरं भवेत् ॥ ४६

सञ्जयः—

एवमुक्त्वार्जुनस्सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ६३ ॥ भगद्गीतापर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ भगवद्गीतायां प्रथमोऽध्यायः ॥

[अस्मिन्नध्याये ४७ श्लोकाः]

---

## ॥ चतुर्विंशोऽध्यायः ॥

भगवद्गीताध्यायः ॥ २ ॥

सञ्जयः—

तं तथा कृपयाविष्टम् अश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यम् उवाच मधुसूदनः ॥ १

श्रीभगवान्—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यम् अकीर्तिकरमर्जुन ॥ २

क्लैब्यं मा स्म गमः पार्थ नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३

अर्जुनः—

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्
तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसम्मूढचेताः ।
यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७

न हि प्रपश्यामि ममापनुद्याद्
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८

सञ्जयः—
एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दम् उक्त्वा तूष्णीं बभूव ह ॥ ९

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १०

श्रीभगवान्—
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामस् सर्वे वयमतः परम् ॥ १२
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर् धीरस्तत्र न मुह्यति ॥ १३
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास् तांस्तितिक्षस्व भारत ॥ १४
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस् त्वनयोस्तत्त्वदर्शिभिः ॥ १६
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥ १७
अन्तवन्त इमे देहा नित्यस्योक्ताऽशरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९

न जायते म्रियते वा [1]कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।

1. अ-क-ख—विपश्चित्

अजो नित्यश्शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २०

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३

अच्छेद्योऽयमदाह्योऽयम् अक्लेद्योऽशोष्य एव च ।
नित्यस्सर्वगतस्थाणुर् अचलोऽयं सनातनः ॥ २४

अव्यक्तोऽयमचिन्त्योऽयम् अविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथाऽपि त्वं महाबाहो नै[1]वं शोचितुमर्हसि ॥ २६

जातस्य हि ध्रुवो मृत्युर् ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७

1. व-नं

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८

आश्चर्यवत् पश्यति कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यश्शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३०

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२

अथ चेत् त्वं धर्म्यमिमं सङ्ग्रामं न करिष्यसि ।
ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर् मरणादतिरिच्यते ॥ ३४

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।

निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८
एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४०
व्यवसायात्मिका बुद्धिर् एकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१
यामिमां पुष्पितां वाचं प्रव[1]दन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२
कामात्मानस्स्वर्गपरा जन्मकर्मफल[2]प्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिस् समाधौ न विधीयते ॥ ४४
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।

1. अ-क—दन्ति मनीषिणः	2. अ-क-व—प्रदाः

निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५
यावानर्थ उदपाने सर्वतस्सम्प्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर् मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते ॥ ४८
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५०
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गन्छन्त्यनामयम् ॥ ५१
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस् तदा योगमवाप्स्यसि ॥ ५३

अर्जुनः—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।

स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४

श्रीभगवान्—

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टस् स्थितप्रज्ञस्तदोच्यते ॥ ५५

दुःखेष्वनुद्विग्नमनास् सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधस् स्थितधीर्मुनिरुच्यते ॥ ५६

यस्सर्वत्रानभिस्नेहस् तत् तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस् तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६०

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१

ध्यायतो विषयान् पुंसस् सङ्गस्तेषूपजायते ।
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥ ६२

क्रोधाद्भवति सम्मोहस् सम्मोहात् स्मृतिविभ्रमः ।

स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ॥ ६५

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतश्शान्तिर् अशान्तस्य कुतस्सुखम् ॥ ६६

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस् तस्य प्रज्ञा प्रतिष्ठिता ॥ ३८

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७०

विहाय कामान् यस्सर्वान् पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारस् स शान्तिमधिगच्छति ॥ ७१

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ भगवद्गीतायां द्वितीयोऽध्यायः ॥

[ अस्मिन्नध्याये ७२ श्लोकाः ]

## ॥ पञ्चविंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ३ ॥

अर्जुनः—

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २

श्रीभगवान्—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारस्स उच्यते ॥ ६

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगम् असक्तस्स विशिष्यते ॥ ७

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९

सहयज्ञाः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वम् एष वोऽस्त्विष्टकामधुक् ॥ १०

देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तश् श्रेयः परमवाप्स्यथ ॥ ११

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।

यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६
यस्त्वात्मरतिरेव स्याद् आत्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस् तस्य कार्यं न विद्यते ॥ १७
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८
तस्मादसक्तस्सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९
कर्मणैव हि संसिद्धिम् आस्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥ २०
यद्यदाचरति श्रेष्ठस् तत् तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः । २३

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्याम् उपहन्यामिमाः प्रजाः ॥ २४
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश् चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५
न बुद्धिभेदं जनयेद् अज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥ २६
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ २७
तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः ।
गुणाऽगुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८
प्रकृतेर्गुणसम्मूढास् सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३०
ये मे मतमिदं नित्यम् अनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।

प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५

अर्जुनः—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६

श्रीभगवान्—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७

धूमेनाव्रियते वह्निर् यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भस् तथा तेनेदमावृतम् ॥ ३८

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९

इन्द्रियाणि मनो बुद्धिर् अस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४०

तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१

इन्द्रियाणि पराण्याहुर् इन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर् यो बुद्धेः परतस्तु सः ॥ ४२

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ भगवद्गीतायां तृतीयोऽध्यायः ॥

[ अस्मिन्नध्याये ४३ श्लोकाः ]

---

## ॥ षड्विंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ४ ॥

श्रीभगवान्—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १

एवं परम्पराप्राप्तम् इमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३

अर्जुनः—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४

श्रीभगवान्—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८
जन्म कर्म च मे दिव्यम् एवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १०
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।

क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत् ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७

कर्मण्यकर्म यः पश्येद् अकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ २०

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समस्सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३

ब्रह्मार्पणं ब्रह्म हविर् ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ॥ २४

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयस्संशितव्रताः ॥ २८

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३०

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।

नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान् विद्धि तान् सर्वान् एवं ज्ञात्वा विमोक्ष्यसे ॥ ३२

श्रेयान् द्रव्यमयाद्यज्ञाज् ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४

यज्ज्ञात्वा न पुनर्मोहम् एवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५

अपि चेदसि पापेभ्यस् सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६

यथैधांसि समिद्धोऽग्निर् भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८

श्रद्धावाँल्लभते ज्ञानं तत्परस्संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाधिगच्छति ॥ ३९

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४०

योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगम् आतिष्ठोत्तिष्ठ भारत ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ भगवद्गीतायां चतुर्थोऽध्यायः ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

## ॥ सप्तविंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ५ ॥

अर्जुनः—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १

श्रीभगवान्—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २

ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितस्सम्यग् उभयोर्विन्दते फलम् ॥ ४
यत् साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १०
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।

नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४

नादत्ते कस्य चित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६

तद्बुद्धयस्तदात्मानस् तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ॥ १८

इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९

न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २०

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२

शक्नोतीहैव यस्सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तस्स सुखी नरः ॥ २३

योऽन्तःसुखोऽन्तरारामस् तथाऽन्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४

लभन्ते ब्रह्मनिर्वाणम् ऋषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानस् सर्वभूतहिते रताः ॥ २५

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६

स्पर्शान् कृत्वा बहिर्बाह्यांश् चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७

यतेन्द्रियमनोबुद्धिर् मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ॥ २८

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

॥ भगवद्गीतायां पञ्चमोऽध्यायः ॥

[अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ अष्टाविंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ६ ॥

श्रीभगवान्—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १

यं संन्यासमिति प्राहुर् योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्यते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुर् आत्मैव रिपुरात्मनः ॥ ५

बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९
योगी युञ्जीत सततम् आत्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १०
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये ॥ १२
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३
प्रशान्तात्मा विगतभीर् ब्रह्मचारिव्रते स्थितः ।
मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४
युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।

युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७
यदा विनियतं चित्तम् आत्मन्येवावतिष्ठते ।
निस्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २०
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३
सङ्कल्पप्रभवान् कामांस् त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४
शनैश्शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
[1]आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।

1. अ-क—इदमर्धं नास्ति

ततस्ततो नियम्यैतद् आत्मन्येव वशं नयेत् ॥ २६

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शम् अत्यन्तं सुखमश्नुते ॥ २८

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३०

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२

अर्जुनः—

योऽयं योगस्त्वया प्रोक्तस् साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४

श्रीभगवान्—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६

अर्जुनः—

अयतिश्श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७

कच्चिन्नोभयविभ्रष्टश् छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९

श्रीभगवान्—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ॥ ४०

प्राप्य पुण्यकृतां लोकान् उषित्वा शाश्वतीस्समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयस् संसिद्धौ कुरुनन्दन ॥ ४३
[1]पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस् ततो याति परां गतिम् ॥ ४५
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ भगवद्गीतायां षष्ठोऽध्यायः ॥
[अस्मिन्नध्याये ४७ श्लोकाः]

---

1. अ-क—इदमर्धं नास्ति

## ॥ एकोनत्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ७ ॥

श्रीभगवान्—

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १

ज्ञानं तेऽहं सविज्ञानम् इदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्यमवशिष्यते ॥ २

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवस्सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १०

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२

त्रिभिर्गुणमयैर्भावैर् एभिस्सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५

चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।

प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः ॥ १७
उदारास्सर्वे एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥ १९
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियतास्स्वया ॥ २०
यो यो यां यां तनुं भक्तश् श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१
स तया श्रद्धया युक्तस् तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२
अन्तवत् तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४
नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५
वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि सम्मोहं सर्गे यान्ति परंतप ॥ २७

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नम् अध्यात्मं कर्म चाखिलम् ॥ २९

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ भगवद्गीतायां सप्तमोऽध्यायः ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

## ॥ त्रिंशोऽध्यायः ॥



॥ भगवद्गीताध्यायः ॥ ८ ॥

---

अर्जुनः—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तम् अधिदैवं किमुच्यते ॥ १

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।

प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २

श्रीभगवान्—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर् मामेवैष्यस्यसंशयः ॥ ७

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपम्
आदित्यवर्णं तमसः परस्तात् ॥ ९

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १०

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणम् आस्थितो योगधारणाम् ॥ १२

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानस् संसिद्धिं परमां गताः ॥ १५

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६

सहस्रयुगपर्यन्तम् अहर्यद्ब्रह्मणो विदुः ।

रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७

अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८

भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९

परस्तस्मात् तु भावोऽन्यो व्यक्तोऽव्यक्तात् सनातनः ।
यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २०

अव्यक्तोऽक्षर इत्युक्तम् तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१

पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तस्स्थानि भूतानि येन सर्वमिदं ततम् ॥ २२

यत्र काले त्वनावृत्तिम् आवृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३

अग्निर्ज्योतिरहश्शुक्लष् षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४

धूमो रात्रिस्तथा कृष्णष् षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर् योगी प्राप्य निवर्तते ॥ २५

शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ।
एकया यात्यनावृत्तिम् अन्ययाऽऽवर्तते पुनः ॥ २६

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७

वेदेषु यज्ञेषु तपस्सु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम् ।
अत्येति तत् सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ६३ ॥ भगवद्गीतापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ भगवद्गीतायां अष्टमोऽध्यायः ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ एकत्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ९ ॥

---

श्रीभगवान्—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।

अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५
यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नम् अवशं प्रकृतेर्वशात् ॥ ८
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनम् असक्तं तेषु कर्मसु ॥ ९
मयाऽध्यक्षेण प्रकृतिस् सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १०
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५

अहं क्रतुरहं यज्ञस् स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यम् अहमग्निरहं हुतम् ॥ १६

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ १७

गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ।
प्रभवः प्रळयस्स्थानं निधानं बीजमव्ययम् ॥ १८

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकम्
अश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २०

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतम् अश्नामि प्रयतात्मनः । २६

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ २७

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९

अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस् सम्यग्व्यवसितो हि सः ॥ ३०

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास् तेऽपि यान्ति परां गतिम् ॥ ३२

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकम् इमं प्राप्य भजस्व माम् ॥ ३३

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवम् आत्मानं मत्परायणः ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ भगवद्गीतायां नवमोऽध्यायः ॥

[ अस्मिन्नध्याये ३४ श्लोकाः ]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १० ॥

श्रीभगवान्—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत् तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १

न मे विदुस्सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमश्शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४

अहिंसा समता तुष्टिस् तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५

महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसाजाता येषां लोक इमाः प्रजाः ॥ ६

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।

इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १०

तेषामेवानुकम्पार्थम् अहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११

अर्जुनः—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यम् आदिदेवमजं विभुम् ॥ १२

आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासस् स्वयं चैव ब्रवीषि मे ॥ १३

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४

स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकान् इमांस्त्वं व्याप्य तिष्ठसि ॥ १६

कथं विद्यामहं योगिस् त्वां सदा परिचिन्तयन् ।

केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७

विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८

श्रीभगवान्—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २०

आदित्यानामहं विष्णुर् ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुश्शिखरिणामहम् ॥ २३

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दस् सरसामस्मि सागरः ॥ २४

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५

अश्वत्थस्सर्ववृक्षाणां देवर्षीणां च नारदः ।

गन्धर्वाणां चित्ररथस् सिद्धानां कपिलो मुनिः ॥ २६
उच्चैश्श्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पस् सर्पाणामस्मि वासुकिः ॥ २८

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमस्संयमतामहम् ॥ २९

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३०

पवनः पवतामस्मि रामश्शस्त्रभृतामहम् ॥
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२

अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३

मृत्युस्सर्वहरश्चाहम् उद्भवश्च भविष्यताम् ।
कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहम् ऋतूनां कुसुमाकरः ॥ ३५

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४०

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नम् एकांशेन स्थितो जगत् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि विंशोऽध्यायः ॥ २० ॥

॥ भगवद्गीतायां दशमोऽध्यायः ॥

[ अस्मिन्नध्याये ४२ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ ११ ॥

अर्जुनः—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २
एवमेतद्यथात्थ त्वम् आत्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपम् ऐश्वरं पुरुषोत्तम ॥ ३
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४

श्रीभगवान्—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५
पश्यादित्यान् वसून् रुद्रान् अश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६
इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७

न तु मां [1]शक्यसे द्रष्टुम् अनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८

सञ्जयः—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९

अनेकवक्त्रनयनम् अनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १०

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवम् अनन्तं विश्वतोमुखम् ॥ ११

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भास्सदृशी सा स्याद् भासस्तस्य महात्मनः ॥ १२

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३

ततस्स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४

अर्जुनः—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।

---

1. ख-ग—शक्ष्यसे

ब्रह्माणमीशं कमलासनस्थम्
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतोदीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययश्शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८
अनादिमध्यान्तमनन्तवीर्यम्
अनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९
द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।

दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २०
अमी हि त्वा सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घास्
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२
रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।

दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५
अमी च त्वां धृतराष्ट्रस्य पुत्रास्
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणस्सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकराळानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७
यथा नदीनां बहवोऽम्बुवेगास्
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८
यथा प्रदीप्तज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्
तवापि वक्त्राणि समृद्धवेगाः ॥ २९
लेलिह्यसे ग्रसमानस्समन्ता-
ल्लोकान् [1]समग्रान् वदनैर्ज्वलद्भिः ।

1. ग—समस्तान्

तेजोभिरापूर्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३०

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१

श्रीभगवान्—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युद्ध्यस्व जेतासि रणे सपत्नान् ॥ ३४

सञ्जयः—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५

अर्जुनः—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत् तत्परं यत् ॥ ३७

त्वमादिदेवः पुरुषः पुराणस्
त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।

नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४०
सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वाऽपि ॥ ४१
यच्चापहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥ ४२
पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३
तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।

पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५

किरीटिनं गदिनं चक्रहस्तम्
इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६

श्रीभगवान्—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७

न वेद यज्ञाध्ययनैर्न दानैर्
न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपश्शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९

सञ्जयः—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनस्सौम्यवपुर्महात्मा ॥ ५०

अर्जुनः—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तस् सचेताः प्रकृतिं गतः ॥ ५१

श्रीभगवान्—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४

मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।
निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ भगवद्गीतायां एकादशोऽध्यायः ॥
[अस्मिन्नध्याये ५५ श्लोकाः]

## ॥ चतुस्त्रिंशोऽध्यायः ॥

भगवद्गीताध्यायः ॥ १२ ॥

अर्जुनः—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १

श्रीभगवान्—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास् ते मे युक्ततमा मताः ॥ २

ये त्वक्षरमनिर्देश्यम् अव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४

क्लेशोऽधिकतरस्तेषाम् अव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १०

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११

श्रेयो हि ज्ञानमभ्यासाज् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस् त्यागाच्छान्तिरनन्तरम् ॥ १२

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारस् समदुःखसुखः क्षमी ॥ १३

संतुष्टस्सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर् यो मे भक्तस्स मे प्रियः ॥ १४

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर् मुक्तो यस्स च मे प्रियः ॥ १५

अनपेक्षश्शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥ १६

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यस्स मे प्रियः ॥ १७

समश्शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥ १८

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केन चित् ।
अनिकेतस्स्थिरमतिर् भक्तिमान् मे प्रियो नरः ॥ १९

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

॥ भगवद्गीतायां द्वादशोऽध्यायः ॥

[ अस्मिन्नध्याये २० श्लोकाः ]

## ॥ पञ्चत्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १३ ॥

अर्जुनः—

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १

श्रीभगवान्—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३

तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत् समासेन मे शृणु ॥ ४

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६

इच्छा द्वेषस्सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७

अमानित्वमदम्भित्वम् अहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८
इन्द्रियार्थेषु वैराग्यम् अनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वम् इष्टानिष्टोपपत्तिषु ॥ १०
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तम् अज्ञानं यदतोऽन्यथा ॥ १२
ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३
सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५
बहिरन्तश्च भूतानाम् अचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १६
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७

ज्योतिषामपि तज्ज्योतिस् तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ २०
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२
उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २३
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २५
अन्ये त्वेवमजानन्तश् श्रुत्वाऽन्येभ्य उपासते ।
[1]तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २६
यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।

1. अ-क—इदमर्धं नास्ति

क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २७

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २९

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानम् अकर्तारं स पश्यति ॥ ३०

यदा भूतपृथग्भावम् एकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१

अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२

[1]यथा सर्वगतं सौक्ष्म्याद् आकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३३

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४

क्षेत्रक्षेत्रज्ञयोरेवम् अन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ भगवद्गीतायां त्रयोदशोऽध्यायः ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

1. अ—इदमर्धं नास्ति

## ॥ षट्त्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १४ ॥

श्रीभगवान्—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥ १

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवस्सर्वभूतानां ततो भवति भारत ॥ ३

सर्वयोनिषु कौन्तेय मूर्तयस्सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिर् अहं बीजप्रदः पिता ॥ ४

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।

प्रमादालस्यनिद्राभिस् तन्निबध्नाति भारत ॥ ८
सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥ १०
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥ ११
लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकान् अमलान् प्रतिपद्यते ॥ १४
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५
कर्मणस्सुकृतस्याहुस् सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखम् अज्ञानं तमसः फलम् ॥ १६
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर् विमुक्तोऽमृतमश्नुते ॥ २०

अर्जुनः—

कैर्लिङ्गैस्त्रीन् गुणानेतान् अतीतो भवति प्रभो ।
किमाचारः कथं चैतांस् त्रीन् गुणानतिवर्तते ॥ २१

श्रीभगवान्—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३

समदुःखसुखस्वस्थस् समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस् तुल्यनिन्दात्मसंस्तुतिः ॥ २४

मानावमानयोस्तुल्यस् तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २५

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।

स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६

ब्रह्मणो हि प्रतिष्ठाऽहम् अमृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ भगवद्गीतायां चतुर्दशोऽध्यायः ॥
[अस्मिन्नध्याये २७ श्लोकाः]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १५ ॥

---

श्रीभगवान्—

ऊर्ध्वमूलमधःशाखम् अश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा ।

अश्वत्थमेनं सुविरूढमूलम्
असङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३
ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४
निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्तास्सुखदुःखसंज्ञैर्
गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६
ममैवांशो जीवलोके जीवभूतस्सनातनः ।
मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८
श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९
उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।

विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १०
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥ १२
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीस्सर्वास् सोमो भूत्वा रसात्मकः ॥ १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४
सर्वस्य चाहं हृदि सन्निविष्टो
मत्तस्स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेह चाहम् ॥ १५
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७
यस्मात् क्षरमतीतोऽहम् अक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९

इति गुह्यतमं शास्त्रम् इदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ६३ ॥ भगवद्गीतापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ भगवद्गीतायां पञ्चदशोऽध्यायः ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

भगवद्गीताध्यायः ॥ १६ ॥

---

श्रीभगवान्—
अभयं सत्त्वसंशुद्धिर् ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १

अहिंसा सत्यमक्रोधस् त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ २

तेजः क्षमा धृतिश्शौचम् अद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीम् अभिजातस्य भारत ॥ ३

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।

अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचस्सम्पदं दैवीम् अभिजातोऽसि पाण्डव ॥ ५
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १०
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थम् अन्यायेनार्थसञ्चयान् ॥ १२
इदमद्य मया लब्धम् इमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३

असौ मया हतश्शत्रुर् हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६

आत्मसम्भाविताःस्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥ १९

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २०

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस् तस्मादेतत् त्रयं त्यजेत् ॥ २१

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनश्श्रेयस् ततो याति परां गतिम् ॥ २२

यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।

न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ४३ ॥ भगवद्गीतापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ भगवद्गीतायां षोडशोऽध्यायः ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १७ ॥

---

अर्जुनः—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १

श्रीभगवान्—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥ ३

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।

प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५
कर्शयन्तश्शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तश्शरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७
आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्यास्स्निग्धास्स्थिरा हृद्या आहारास्सात्त्विकप्रियाः ॥ ८
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९
यातयामं गतरसं पूतिपर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १०
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनस् समाधाय स सात्त्विकः ॥ ११
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५

मनःप्रसादस्सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैस् सात्त्विकं परिचक्षते ॥ १७

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८

मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २०

यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं [1]तद्दानं राजसं स्मृतम् । २१

अदेशकाले यद्दानम् अपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२

1. ख-घ—तद्राजसमुदाहृतम्

ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्तास् सततं ब्रह्मवादिनाम् ॥ २४

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६

यज्ञे तपसि दाने च स्थितिस्सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

॥ ६३ ॥ भगवद्गीतापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ भगवद्गीतायां सप्तदशोऽध्यायः ॥

[ अस्मिन्नध्याये २८ श्लोकाः ]

## ॥ चत्वारिंशोऽध्यायः ॥

॥ भगवद्गीताध्यायः ॥ १८ ॥

अर्जुनः—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १

श्रीभगवान्—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तितः ॥ ४

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात् तस्य परित्यागस् तामसः परिकीर्तितः ॥ ७

दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८
कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥ ९
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्यते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १०
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२
पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५
तत्रैवं सति कर्तारम् आत्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।

हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ १९

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २०

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१

यत् तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ॥ २२

नियतं सङ्गरहितम् अरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म [1]यत् तत् सात्त्विकमुच्यते ॥ २३

यत् तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४

अनुबन्धं क्षयं हिंसाम् अनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५

---

1. ग—अयं पादोऽनन्तरश्च न स्तः ।

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६

रागी कर्मफलप्रेप्सुर् लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७

अयुक्तः प्राकृतस्स्तब्धश् शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्त्विकी ॥ ३०

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी ॥ ३१

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी ॥ ३२

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी ॥ ३३

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिस्सा पार्थ राजसी ॥ ३४

यया स्वप्नं भयं शोकं विषादं मदमेव च ।

न विमुञ्चति दुर्मेधा धृतिस्सा पार्थ तामसी ॥ ३५
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६
यत् तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तम् आत्मबुद्धिप्रसादजम् ॥ ३७
विषयेन्द्रियसंयोगाद् यत् तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥ ३९
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात् त्रिभिर्गुणैः ॥ ४०
ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१
शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३
कृषिगोरक्ष्यवाणिज्यं वैश्यं कर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् । ४४

स्वे स्वे कर्मण्यभिरतस् संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ॥ ४५

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८

असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥ ५३

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।

समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमपाश्रित्य मच्चित्तस्सततं भव ॥ ५७
मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८
यद्यहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९
स्वभावजेन कौन्तेय निबद्धस्स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६०
ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३

सर्वगुह्यतमं भूयश्शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७

य [1]इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्माद् अन्यः प्रियतरो भुवि ॥ ६९

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहम् इष्टस्स्यामिति मे मतिः ॥ ७०

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तश्शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ७२

---

1. अ-क-ख-ग—इदं

अर्जुनः—

नष्टो मोहस्स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३

सञ्जयः—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषम् [1]अद्भुतं रोमहर्षणम् ॥ ७४

व्यासप्रसादाच्छ्रुतवान् एतद्गुह्यतमं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतस्स्वयम् ॥ ७५

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महाराज हृष्यामि च पुनः पुनः ॥ ७७

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ६३ ॥ भगवद्गीतापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ भगवद्गीतायामष्टादशोऽध्यायः ॥
[ अस्मिन्नध्याये ७८ श्लोकाः ]
[ भगवद्गीतापर्व समाप्तम् ]

---

1. घ-म—महं

## ॥ एकचत्वारिंशोऽध्यायः ॥

( भीष्मवध पर्व )

कुरुपाण्डवसेनयोर्युद्धारम्भः ॥

धृतराष्ट्रः—

एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
के पूर्वं प्राहरंस्तत्र पाण्डवाः कौरवास्तदा ॥ १

सञ्जयः—

भ्रातुर्वचनमाज्ञाय पुत्रो दुश्शासनस्तव ।
भीष्मं प्रमुखतः कृत्वा प्रययौ सेनया सह ॥ २

तथैव पाण्डवास्सर्वे भीमसेनपुरोगमाः ।
भीष्मेण युद्धमिच्छन्तस् सर्वे च संहिता ययुः ॥ ३

क्ष्वेळाः किलकिलाशब्दाः क्रकरा गोविषाणकाः ।
भेरीमृदङ्गमुरवा हयकुञ्जरनिःस्वनाः ॥ ४

उभयोस्सेनयो [1]र्ह्यासन् निस्वना नदतां नृणाम् ।
[2]वधं प्रतिनदन्तश्च तदाऽऽसीत् तुमुलं महत् ॥ ५

1. ख-ग-घ-ङ-म—रासंस्ततस्तेषां समुद्भवाः

2. ङ—इदमर्धं नास्ति

महान्त्यनीकानि महासमुच्छ्रये
समागमे पाण्डवधार्तराष्ट्रयोः ।
चकम्पिरे शङ्खमृदङ्गनिःस्वनैः
प्रकम्पितानीव वनानि वायुना ॥ ६

नरेन्द्रनागाश्वरथाकुलानां
समागतानामशिवे मुहूर्ते ।
बभूव घोषस्तुमुलश्चमूनां
वातोद्धतानामिव सागराणाम् ॥ ७

तस्मिन् समुत्थिते शब्दे तुमुले रोमहर्षणे ।
भीमसेनो महाबाहुः प्राणदद्गोवृषो यथा ॥ ८

शङ्खदुन्दुभिनिर्घोषं वारणानां च बृंहितम् ।
[1]सिंहनादं च सैन्यानां [2]आवृणोद्भीमनिस्वनः ॥ ९

हयानां हेषमाणानाम् अनीकेषु सहस्रशः ।
सर्वानभ्यभवच्छब्दान् भीमसेनस्य निस्वनः ॥ १०

तं श्रुत्वा निनदं तस्य सैन्यास्तव वितत्रसुः ।
जीमूतस्येव निनदं शक्राशनिसमस्वनम् ॥ ११

वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ।

1. ब—अर्धचतुष्टयं नास्ति
2. ख-ग-ङ-म—भीमसेनरथं प्रति

शब्देन भीमसेनस्य सिंहस्येवेतरे मृगाः ॥ १२

दर्शयन् घोरमात्मानं नवाभ्र इव नानदन् ।
विभीषयंस्तव सुतान् तव सेनां समाद्रवत् ॥ १३

तमायान्तं महेष्वासं सोदर्याः पर्यवारयन् ।
छादयन्तश्शरव्रातैर् मेघा इव दिवाकरम् ॥ १४

दुर्योधनश्च पुत्रस्ते दुर्मुखो [1]दुष्प्रहस्तथा ।
दुःशासनश्चातिरथस् तथा दुर्मर्षणो नृपः ॥ १५

विविंशतिश्चित्रसेनो वृषसेनो महारथः ।
पुरुमित्रो जयो भोजस् सौमदत्तिश्च भूमिप ॥ १६

[2]महाचापानि धुन्वन्तो मेघा इव सविद्युतः ।
आददानाश्च नाराचान् शितानाशीविषोपमान् ॥ १७
[3]अग्रतः पाण्डुसेनाया ह्यतिष्ठन् पृथिवीक्षितः ॥ १७॥

अथ तान् द्रौपदीपुत्रस् सौभद्रश्च महारथः ।
नकुलस्सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ १८॥

धार्तराष्ट्रान् प्रतिययुर् अर्दयन्तश्शितैश्शरैः ।
वज्रैरिव महावेगैश् शिखराणि धराभृताम् ॥ १९॥

---

1. ख-ग-ङ-म—दुष्षहः कृपः
2. अ-क-ख-ग—नास्तीदमर्धम्
3. ख-च-ङ-म—इदमर्धं नास्ति

तस्मिन् प्रथमसङ्ग्रामे भीमज्यातलनिःस्वनैः ।
तावकानां परेषां च नासीत् कश्चित् पराङ्मुखः ॥ २०॥

लाघवं द्रोणशिष्याणाम् अपश्यं भरतर्षभ ।
निमित्तवेधिनां राजन् शरानुत्सृजतां भृशम् ॥ २१॥

नोपशाम्यति निर्घोषो धनुषां कूजतां तथा ।
विनिश्चेरुश्शरा दीप्ता ज्योतींषीव नभस्थलात् ॥ २२॥

सर्वेत्वन्ये महीपालाः प्रेक्षका इव भारत ।
ददृशुर्दर्शनीयाक्षा भीमं ज्ञातिसमागमम् ॥ २३॥

ततस्ते जातसंरम्भाः परस्परकृतैषिणः ।
अन्योन्यस्पर्धया राजन् व्यायच्छन्त महारथाः ॥ २४॥

कुरुपाण्डवसेने ते हस्त्यश्वरथसङ्कुले ।
शुशुभाते रणेऽतीव पटे चित्रार्पिते यथा ॥ २५॥

ततस्ते पार्थिवास्सर्वे प्रगृहीतशरासनाः ।
सहसैन्यास्समापेतुः पुत्रस्य तव शासनात् ॥ २६॥

युधिष्ठिरेण चादिष्टाः पार्थिवास्ते सहस्रशः ।
विनदन्तस्समापेतुस् तव पुत्रस्य वाहिनीम् ॥ २७॥

उभयोस्सेनयो राजन् परस्परसमागमे ।
अन्तर्धीयत चादित्यस् सैन्येन रजसा वृतः ॥ २८॥

प्रयुध्यतां प्रभग्नानां पुनरावर्ततामपि ।
तत्र स्वेषां परेषां वा विशेषो नोपपद्यते ॥ २९॥

तस्मिंस्तु तुमुले युद्धे वर्तमाने भयावहे ।
अति सर्वाण्यनीकानि पिता तेऽत्यभिरोचत[1] ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः]

## ॥ द्विचत्वारिंशोऽध्यायः ॥

कुरुपाण्डवसेनयोर्द्वन्द्वयुद्धवर्णनम् ॥

सञ्जयः—

पूर्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशां पते ।
प्रावर्तत महाघोरं राज्ञां देहावकर्तनम् ॥ १

कुरूणां पाण्डवानां च सङ्ग्रामे विजिगीषताम् ।
सिंहानामिव संह्रादो दिवमुर्वीं च नादयन् ॥ २

आसीत् किलकिलाशब्दस् तलशङ्खरवैस्सह ।
जज्ञिरे सिंहनादाश्च शूराणां प्रतिगर्जताम् ॥ ३

1. अ-क-ग-ङ—तदा रणोत्सुकान्येव व्यरोचन्त परस्परम् ।
[अधिकः पाठः]

[1]तलत्राभिहताश्चैव ज्याशब्दा भरतर्षभ ।
पत्तीनां पादशब्दाश्च वाजिनां च महास्वनाः ॥ ४
तोत्राङ्कुशनिपाताश्च आयुधानां च निःस्वनाः ।
घण्टाशब्दाश्च नागानाम् अन्योन्यमभिधावताम् ॥ ५
तस्मिन् समुत्थिते शब्दे तुमुले रोमहर्षणे ।
तथैव रथनिर्घोषः पर्जन्यनिनदोपमः ॥ ६
ते मनः क्रूरमाधाय समभित्यक्तजीविताः ।
पाण्डवाश्चाभ्यवर्तन्त कुरवश्चोच्छ्रितध्वजाः ॥ ७
स्वयं शान्तनवो राजन्नभ्यधावद्धनञ्जयम् ।
प्रगृह्य कार्मुकं घोरं कालदण्डोपमं रणे ॥ ८
अर्जुनोऽपि धनुर्गृह्य गाण्डीवं लोकविश्रुतम् ।
अभ्यधावत तेजस्वी गाङ्गेयं रणमूर्धनि ॥ ९
तावुभौ कुरुशार्दूलौ परस्परजयैषिणौ ।
गाङ्गेयस्तु रणे पार्थं विद्ध्वा नाकम्पयद्बली ॥ १०
तथैव पाण्डवो राजन् भीष्मं नाकम्पयद्युधि ।
सात्यकिस्तु महेष्वासः कृतवर्माणमभ्ययात् ॥ ११
तयोस्तुतुमुलं युद्धम् अभवद्रोमहर्षणम् ॥ ११॥
सात्यकिः कृतवर्माणं कृतवर्मा च सात्यकिम् ।

1. अ-क—नासीदमर्धम्

आनर्च्छतुश्शरैस्तीक्ष्णैस् तक्षमाणौ परस्परम् ॥ १२॥
तौ शरार्पितसर्वाङ्गौ शुशुभाते महाबलौ ।
वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ ॥ १३॥
अभिमन्युर्महेष्वासो बृहद्बलमयोधयत् ॥ १४
ततः कौसलको राजा सौभद्रस्य विशां पते ।
ध्वजं चिच्छेद समरे सारथिं च न्यपातयत् ॥ १५
सौभद्रस्तु ततः क्रुद्धः पतिते रथसारथौ ।
[1]बृहद्बलं महाराज विव्याध निशितैश्शरैः ॥ १६
अथापराभ्यां भल्लाभ्यां शिताभ्यामरिमर्दनः ।
ध्वजमेकेन चिच्छेद बिभेदैकेन सारथिम् ॥ १७
अन्योन्यं च शरैस्तीक्ष्णैः क्रुद्धौ राजंस्ततक्षतुः ॥ १७॥
मानिनं समरे दृप्तं कृतवैरं महारथम् ।
भीमसेनस्तव सुतं दुर्योधनमयोधयत् ॥ १८॥
तावुभौ नरशार्दूलौ कुरुमुख्यौ महारथौ ।
अन्योन्यं शरवर्षाभ्यां ववर्षाते रणाजिरे ॥ १९॥
तौ वीक्ष्य तु महात्मानौ कृतिनौ चित्रयोधिनौ ।
विस्मयस्सर्वभूतानां समपद्यत भारत ॥ २०॥
दुश्शासनस्तु नकुलं प्रत्युद्याय महारथः ।

1. च—अर्धद्वयं नास्ति

अविध्यन्निशितैर्बाणैर् बहुभिर्मर्मभेदिभिः ॥ २१॥

तस्य माद्रीसुतः केतुं सशरं च शरासनम् ।
चिच्छेद विशिखैस्तीक्ष्णैः प्रहसन्निव भारत ॥ २२॥

अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥ २३

पुत्रस्तु तव दुर्धर्षो नकुलस्य महाहवे ।
बाणैर्युगं च चिच्छेद ध्वजं चास्य न्यपातयत् ॥ २४

दुर्मुखस्सहदेवं तु प्रत्युद्याय महारथम् ।
विव्याध शरवर्षेण यतमानं महाहवे ॥ २५

सहदेवस्ततो वीरो दुर्मुखस्य महामृधे ।
शरेण भृशतीक्ष्णेन पातयामास सारथिम् ॥ २६

तावन्योन्यं समासाद्य समरे युद्धदुर्मदौ ।
ततक्षाते शरैर्घोरैः कृतप्रतिकृतैषिणौ ॥ २७

युधिष्ठिरस्स्वयं राजा मद्रराजमयोधयत् ।
तस्य मद्रपतिश्चापि धनुश्चिच्छेद मारिष ॥ २८

तदपास्य धनुश्छिन्नं कुन्तीपुत्रो युधिष्ठिरः ।
अन्यत् कार्मुकमादाय वेगवद्बलवत्तरम् ॥ २९

ततो मद्रेश्वरं राजा शरैस्सन्नतपर्वभिः ।
छादयामास सङ्क्रुद्धस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३०

धृष्टद्युम्नस्ततो द्रोणम् अभ्यधावत भारत ।
तस्य द्रोणस्सुसङ्क्रुद्धः परासुकरणं दृढम् ॥ ३१
त्रिधा चिच्छेद समरे यतमानस्य कार्मुकम् ।
शरं चैव महाघोरं कालदण्डमिवापरम् ॥ ३२
प्रेषयामास समरे सोऽस्य काये न्यमज्जत ॥ ३२॥
अथान्यद्धनुरादाय सायकांश्च चतुर्दश ।
द्रोणं द्रुपदपुत्रस्तु प्रेषयामास संयुगे ॥ ३३॥
तावन्योन्यं सुसङ्क्रुद्धौ चक्रतुस्सुभृशं रणम् ॥ ३४
मागधस्सौमदत्तिं तु रभसं रभसो युधि ।
प्रत्युद्ययौ महाराज तिष्ठतिष्ठेति चाब्रवीत् ॥ ३५
दक्षिणं सौमदत्तेस्तु निर्बिभेद रणे भुजम् ।
सौमदत्ति[1]श्शरं तस्य जत्रुदेशे समर्पयत् ॥ ३६
तयोस्समभवद्युद्धं घोररूपं विशां पते ।
दृप्तयोस्समरे तूर्णं वृत्रवासवयोरिव ॥ ३७
[2]बाह्लीकं तु रणे क्रुद्धं धृष्टकेतुस्समभ्ययात् ॥ ३७॥
बाह्लीकस्तु रणे राजन् धृष्टकेतुममर्षणम् ।
शरैर्दशभिरानर्च्छत् सिंहनादं ननाद च ॥ ३८॥

1. ख-ग-ङ-म—स्सहदेवं जत्रुदेशेषुणार्पयत्
2. ङ—नासीदमर्थम्

धृष्टकेतुस्सुसङ्क्रुद्धो बाह्लीकं नवभिश्शरैः ।
विव्याध समरे तूर्णं मत्तो मत्तमिव द्विपम् ॥ ३९॥
तौ तत्र समरे दृप्तौ चेरतुश्च मुहुर्मुहुः ।
समीयतुस्सुसङ्क्रुद्धावङ्गारकबुधाविव ॥ ४०॥
राक्षसं क्रूरकर्माणं क्रूरकर्मा घटोत्कचः ।
अलम्बुसं प्रत्युदियाद् बलं शक्र इवाहवे ॥ ४१॥
[1]घटोत्कचस्ततस्तूर्णं राक्षसेन्द्रं महाहवे ।
नवत्या सायकैस्तीक्ष्णैर् अर्दयामास भारत ॥ ४२॥
अलम्बुसस्तु समरे भैमसेनिं महाबलम् ।
बहुधा वारयामास सायकैर्नतपर्वभिः ॥ ४३॥
व्यभ्राजेतां ततस्तौ तु संयुगे शरविक्षतौ ।
यथा देवासुरे युद्धे बलशक्रौ महारथौ ॥ ४४॥
शिखण्डी समरे राजन् द्रौणिमभ्यर्दयद्बली । ४५
अश्वत्थामा ततः क्रुद्धश् शिखण्डिनमुपस्थितम् ॥
नाराचेन सुतीक्ष्णेन भृशं विद्ध्वा ह्यकम्पयत् ॥ ४६
[2]शिखण्ड्यपि ततो राजन् द्रोणपुत्रमताडयत् ॥ ४६॥
सायकेन सुतीक्ष्णेन पीतेन निशितेन च ।

1. अ-क—नास्तीदमर्धम्
2. घ—अर्धचतुष्टयं नास्ति

समाजघ्नतुरन्योन्यं शरैर्बहुविधैर्नृप ॥ ४७॥
भगदत्तं रणे शूरं विराटो वाहिनीपतिः ।
अभ्ययात् त्वरितो राजंस् ततो युद्धमवर्तत ॥ ४८॥

विराटो भगदत्तं च शरवर्षेण भारत ।
अभ्यवर्षत् सुसङ्क्रुद्धो मेघो वृष्ट्या इवाचलम् ॥ ४९॥
भगदत्तस्ततः क्षिप्रं विराटं वाहिनीपतिम् ।
छादयामास नाराचैर् मेघस्सूर्यमिवोदितम् ॥ ५०॥

बृहत् क्षत्रं तु कैकेयं कृपश्शारद्वतो ययौ ।
तं कृपश्शरवर्षेण च्छादयामास भारत ॥ ५१॥
गौतमं चापि कैकेयः शरवृष्ट्याऽभ्यपूरयत् ॥ ५२
तावन्योन्यं हयान् हत्वा धनुषी विनिकृत्य च ।
विरथावसियुद्धाय समीयतुररिन्दमौ ॥ ५३
तयोस्समभवद्युद्धं घोररूपं सुदारुणम् ॥ ५३॥

द्रुपदस्तु ततो राजन् सैन्धवं वै जयद्रथम् ।
अभ्ययात् समरे हृष्टो हृष्टरूपं परन्तपः ॥ ५४॥
ततस्सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः ।
ताडयामास समरे स च तं प्रत्यविध्यत ॥ ५५॥

तयोस्समभवद्युद्धं घोररूपं सुदारुणम् ।
ईक्षितृप्रीतिजननं द्विपशार्दूलयोरिव ॥ ५६॥

विकर्णस्तु सुतस्तूर्णं युधामन्युं महाबलम् ।
अभ्ययाज्जवनैरश्वैस् ततो युद्धमवर्तत ॥ ५७॥
विकर्णस्तु युधामन्युं विद्ध्वा नाकम्पयच्छरैः ।
युधामन्युर्विकर्णं च तदद्भुतमिवाभवत् ॥ ५८॥
सुशर्माणं नृपव्याघ्रश् चेकितानो महाबलः ।
अभ्यर्दयत् सुसङ्क्रुद्धः पाण्डवार्थे पराक्रमी ॥ ५९॥
सुशर्मा तु महाराज चेकितानं महारथम् ।
महता शरवर्षेण वारयामास संयुगे ॥ ६०॥
चेकितानोऽपि सङ्क्रुद्धस् सुशर्माणं महाहवे ।
शरैश्च छादयामास महामेघ इवाचलम् ॥ ६१॥
शकुनिः प्रतिविन्ध्यं तु पराक्रान्तं पराक्रमी ।
[1]अभ्यद्रवत राजेन्द्र सिंहो मत्तमिव द्विपम् ॥ ६२॥
यौधिष्ठिरस्तु सङ्क्रुद्धस् सौबलं निशितैश्शरैः ।
व्यदारयत सङ्ग्रामे मघवानिव शम्बरम् ॥ ६३॥
शकुनिः प्रतिविन्ध्यं तु प्रतिविन्ध्यस्तमाहवे ।
व्यदारयन्महाप्राज्ञश् शरैस्सन्नतपर्वभिः ॥ ६४॥
सुदक्षिणं च राजेन्द्र काम्भोजानां जनेश्वरम् ।
श्रुतसोमः पराक्रान्तो ह्यभ्यद्रवत संयुगे ॥ ६५॥

1. घ—अर्धमयं नास्ति

सुदक्षिणस्तु समरे भैमसेनिं महाबलम् ।
विद्धा नाकम्पयत् संख्ये मैनाकमिव पर्वतम् ॥ ६६॥

श्रुतसोमस्तु सङ्क्रुद्धः काम्भोजं तु नराधिपम् ।
[1]शरैर्बहुभिरानर्च्छेद् दारयन्निव सर्वशः ॥ ६७॥

इरावानथ सङ्क्रुद्धश् श्रुतायुषममर्षणम् ।
प्रत्युद्ययौ रणे यत्तो घोररूपतरं ततः ॥ ६८॥

आर्जुनिस्तत्र समरे हयान् हत्वा महारथः ।
ननाद तत् कर्म रणे सर्वसैन्यान्यपूजयन् ॥ ६९॥

इरावानपि सङ्क्रुद्धश् [2]श्रुतकीर्तिर्महारणे ।
निजघान गदाग्रेण ततो युद्धमवर्तत ॥ ७०॥

विन्दानुविन्दावावन्त्यौ कुन्तिभोजं महारथम् ।
ससैन्यं ससुतं वीरम् अयुध्येतां परन्तपौ ॥ ७१॥

तत्राद्भुतमपश्याम आवन्त्यानां पराक्रमम् ।
अयुध्येतां स्थिरौ भूत्वा महत्या सेनया सह ॥ ७२॥

अनुविन्दस्तु गदया कुन्तिभोजमताडयत् ।
कुन्तिभोजश्च तं क्षिप्रं शरव्रातैरवाकिरत् ॥ ७३॥

कुन्तिभोजसुतश्चापि विन्दं विव्याध सायकैः ।
स तु तं प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ७४॥

---

1. घ—अर्धद्वयं नास्ति 2. ख-ग-घ-ङ-म—श्रुतायोस्तुरगान् रणे

केकया भ्रातरः पञ्च गान्धारान् पञ्च मारिष ।
ससैन्यास्तु ससैन्यांस्तु योधयन्ति महारणे ॥ ७५॥

वीरबाहुश्च ते पुत्रो वैराटिं रथसत्तमम् ।
उत्तरं योधयत्तूर्णं विव्याध निशितैश्शरैः ॥ ७६॥

[1]उत्तरश्चापि तं वीरं विव्याध निशितैश्शरैः ।
ततो युद्धं समभवद् घोररूपं विशां पते ॥ ७७॥

उलूकं तु शतानीकश् शरैर्बहुभिरावृणोत् ।
उलूकश्चापि तं बाणैर् निशितैर्लोमवापिभिः ॥ ७८॥

तयोर्युद्धं समभवद् घोररूपं विशां पते ।
दारयेतां रणे शस्त्रैर् अन्योन्यमपराजितौ ॥ ७९॥

आसन् द्वन्द्वसहस्राणि नरवारणवाजिनाम् ।
पाण्डवानां च समरे तावकानां च संयुगे ॥ ८०॥

मुहूर्तमिव तद्युद्धम् आसीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्न प्राज्ञायत किञ्चन ॥ ८१॥

गजो गजेन समरे रथी च रथिनं ययौ ।
अश्वोऽश्वं समरे प्रेत्य पदातिश्च पदातिनम् ॥ ८२॥

एवं युद्धं सुदुर्धर्षं प्रव्याकुलमजायत ।
सङ्कुले तत्र युध्यन्ति समासाद्य परस्परम् ॥ ८३॥

---

1. अ-क-ख—अर्धद्वयं नास्ति

तत्र देवर्षिसिद्धाश्च चारणाश्च समागताः ।
प्रैक्षन्त ते रणे घोरं देवासुरसमं भुवि ॥ ८४॥

ततो दन्तिसहस्राणि रथानां चापि मारिष ।
अश्वौघाः पुरुषौघाश्च विपरीतान् समाययुः ॥ ८५॥

तत्रतत्रैव दृश्यन्ते रथवारणपत्तयः ।
सादिनश्च नरव्याघ्र युध्यमाना मुहुर्मुहुः[1] ॥ ८६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ८६॥ श्लोकाः]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

---

सङ्कुलयुद्धवर्णनम् ॥

---

सञ्जयः—

राजन् शतसहस्राणि तत्र तत्र तदा तदा ।
निर्मर्यादं प्रवृत्तानि तत् ते वक्ष्यामि भारत ॥ १

न पुत्रः पितरं जज्ञे न पिता पुत्रमौरसम् ।
न भ्राता भ्रातरं तत्र स्वस्रीयं च न मातुलः ॥ २

---

1. अ-क-ग—प्रवाहा इव दृश्यन्ते तदा सागरयोरिव । [अधिकः पाठः]

स्वस्रीयो मातुलं चापि सखायं च सखा तथा ।
आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिस्सह ॥ ३
रथानीकं रथव्याघ्राः केचिदभ्यपतन् रथैः ।
[1]अभज्यन्त युगैरेव युगानि भरतर्षभ ॥ ४
रथेषाश्च रथेषाभिः कूबरा रथकूबरैः ।
संहतैस्संहताः केचित् परस्परजिघांसवः ॥ ५
न शेकुश्चलितुं केचित् समुपेत्य रथा रथैः ।
प्रभिन्नास्सुमहाकायास् सन्निपत्य गजा गजैः ॥ ६
बहुधा दारयामासुः विषाणैरितरेतरम् ।
सतोमरपताकैश्च वारणा वरवारणैः ॥ ७
अभिपत्य महाराज वेगवद्भिर्महाबलैः ।
दन्तैरभिहतास्तत्र चुक्रुशुः परमातुराः ॥ ८
अभिनीताश्च शिक्षाभिस् तोत्राङ्कुशनिपातनैः ।
सुप्रभिन्नाः प्रभिन्नानां सुमुखाभिमुखं ययुः ॥ ९
प्रभिन्नैरपि सम्भिन्नाः केचित् तत्र महागजाः ।
क्रौञ्चवन्निनदं कृत्वा प्राद्रवन्त ततस्ततः ॥ १०
सम्यक् प्रणिहिता नागाः प्रभिन्नकरटामुखाः ।
यष्टितोमरनाराचैर् निर्विद्धा वरवारणाः ॥ ११

1. म—अर्धचतुष्टयं नास्ति

विनेदुश्छिन्नवर्माणो निपेतुश्च गतासवः ।
प्रधावन्ति दिशस्सर्वा नदन्तो भैरवान् रवान् ॥ १२

गजानां पादरक्षास्तु व्यूढोरस्काः प्रहारिणः ।
इषुभिश्च धनुर्भिश्च विमलैश्च परश्वथैः ॥ १३

गदाभिर्मुसलैश्चैव भिण्डिवालैस्सतोमरैः ।
आयसैर्विमलैश्चैव निस्त्रिंशैर्विमलैश्शितैः ॥ १४

प्रगृहीतैश्च संरब्धा सावमानास्ततस्ततः ।
व्यदृश्यन्त महाराज परस्परजिघांसवः ॥ १५

राजमानास्तु निस्त्रिंशास् संरक्ता नरशोणितैः ।
प्रत्यदृश्यन्त शूराणाम् अन्योन्यमभिधावताम् ॥ १६

अवक्षिप्तावधूतानाम् असीनां वीरबाहुभिः ।
सञ्जज्ञे तुमुलश्शब्दः पततां परमर्मसु ॥ १७

गदामुसलरुग्णानां भिन्नानां च वरासिभिः ।
[1]दन्तिदन्तावभिन्नानां मृदितानां च दन्तिभिः ॥ १८

तत्र तत्र नरौघाणां क्रोशतामितरेतरम् ।
[2]अश्रूयन्त महाराज वाचः क्रूरास्सुदारुणाः ॥ १९

अन्योन्यं युध्यतां तेषां शूराणामनिवर्तिनाम् ।
शुश्रुवुर्दारुणा वाचः प्रेतानामिव भारत ॥ २०

---

1. अ-क—नास्तीदमर्धम् 2. अ-क-ग—अर्धद्वयं नास्ति

हयैरपि हयारोहाश् चामरापीडधारिभिः ।
हंसैरिव महावेगैर् अन्योन्यमभिदुद्रुवुः ॥ २१

तैर्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः ।
आशुगा विमलास्तीक्ष्णास् सम्पेतुर्भुजगोपमाः ॥ २२
अश्वैरुग्रजवैः केचिद् आपेतुर्महतो रथात् ॥ २२॥
शिरांसि चिच्छिदुर्वीरा रथिनामश्वसादिनः ॥ २३

बहूनपि हयारोहान् भल्लैरानतपर्वभिः ।
रथिनस्तान् समाजघ्नुर् बाणगोचरमागतान् ॥ २४

नगमेघप्रतीकाशान् आक्षिप्य तुरगान् गजान् ।
[1]ममृदुश्च रणे तत्र हयान् कनकभूषणान् ॥ २५

कुम्भेषु पातयामासुः पार्श्वेष्वपि च वारणाः ।
[2]प्रासैर्विनिहताः केचिद्विनेदुः परमातुराः ॥ २६

साश्वारोहान् हयान् केचिद् उन्मथ्य वरवारणाः ।
सहसा चिक्षिपुस्तत्र सङ्कुले भैरवे सति ॥ २७

साश्वारोहान् विषाणाग्रैर् उत्क्षिप्य तुरगान् गजाः ।
रथौघानभिमृद्नन्तस् सध्वजान् परिचक्रमुः ॥ २८

[3]पुरस्तादभितः पश्चात् केचिदत्र महागजाः ।

---

1. ख—अर्धषट्कं नास्ति 2. ङ—अर्धद्वयं नास्ति
3. ख-ग-घ-ङ-म—लघुत्वादभि मत्तत्वात्

साश्वारोहान् हयाञ्जघ्नुः करैस्सचरणैस्तथा ॥ २९

केचिदुन्मथ्य दन्तेषु साश्वानपि महारथान् ।
विकर्षन्तो दिशस्सर्वास्सम्पेतु[1]स्सर्वतो गजाः ॥ ३०

मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खास्सुतेजनाः ।
अकुण्ठिताग्रा निष्पेतुर् नागेषु च हयेषु च ॥ ३१

नराश्वकायान्निर्भिद्य लौहानि कवचानि च ।
निपेतुर्विमलाश्शक्त्यो वीरबाहुभिरर्पिताः ॥ ३२

महोल्काप्रतिमा घोरास् तत्र तत्र विशां पते ।
द्वीपिचर्मावनद्धैश्च व्याघ्रचर्माशयैरपि ॥ ३३

विकोशैर्विमलैः खड्गैर् अभिजघ्नुः पदातयः ॥ ३३॥

द्रुतं प्लुतमभिक्रान्तम् एकपार्श्वतिरोहितम् ।
विदर्शयन्तस्संपेतुः खड्गचर्मपरश्वधैः ॥ ३४॥

[2]शक्तिभिर्दारिताः केचित् संच्छिन्नाश्च परश्वधैः ।
हस्तिभिर्मृदिताङ्गाश्च क्षुण्णाश्च तुरगैस्तथा ॥ ३५॥

[3]रथनेमिनिकृत्ताश्च निकृत्ताश्च शितैश्शरैः ।
विचुक्रुशुर्नरा राजंस् तत्र तत्रात्मबान्धवान् ॥ ३६॥

पुत्रानन्ये पितॄनन्ये भ्रातॄंश्च सह बान्धवैः ।

---

1. ख-ग-घ-ङ-म—स्सर्वशब्दगाः  2. अ-क-ख-ग—नास्तीदमर्धम्
3. अ-क—नास्तीदमर्धम्

मातुलान् भागिनेयांश्च परानपि च संयुगे ॥ ३७॥
विकीर्णान्त्रास्सुबहवो भग्नसक्थाश्च भारत ।
बाहुभिस्सुभुजाश्छिन्नाः पार्थेषु च विदारिताः ॥ ३८॥
क्रन्दन्तस्समदृश्यन्त तृषिता जीवितेप्सवः ॥ ३९
तृष्णापरिगताः केचिद् अल्पसत्त्वा विशां पते ।
भूमौ निपतितास्सङ्ख्ये मृगुयांचक्रिरे जलम् ॥ ४०
रुधिरौघपरिक्लिन्नाः क्लिश्यमानाश्च संयुगे ।
व्यनिन्दन् भृशमात्मानं तव पुत्रांश्च सङ्गतान् ॥ ४१
अपरे क्षत्रियाश्शूराः कृतवैराः परस्परम् ।
न च शस्त्रं प्रमुञ्चन्ति न चाक्रन्दन्ति मारिष ॥ ४२
तर्जयन्ति च संहृष्टास् तत्र तत्र परस्परम् ।
संदश्य दशनैश्चापि क्रोधात् स्वदशनच्छदान् ॥ ४३
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षन्ते स्म परस्परम् ।
तर्जयित्वा च संहृष्टाः प्राणार्ताश्शरविक्षताः ॥ ४४
[1]अपरे क्लिश्यमानास्तु शरार्ता व्रणपीडिताः ।
निष्कूजनास्समपद्यन्त दृढसत्त्वा महाबलाः ॥ ४५
अन्ये तु विरथाश्शूराः रथमन्यस्य संयुगे ।
प्रार्थयाना निपतिताः संक्षुण्णा वरवारणैः ॥ ४६

1. अ-क-ग—नास्तीदमर्धम्

अशोभन्त महाराज योधास्तत्र सहस्रशः ।
[1]रुधिरोक्षितसर्वाङ्गाः पुष्पिता इव किंशुकाः ॥ ४७

चुक्रुशुस्तेष्वनीकेषु बहवो भैरवस्वनाः ।
वर्तमाने तदा भीमे तस्मिन् वीरवरक्षये ॥ ४८

निजघान पिता पुत्रं पुत्रश्च पितरं रणे ।
स्वस्रीयो मातुलं चापि स्वस्रीयं चापि मातुलः ॥ ४९

सखा सखायं च तथा सम्बन्धी बान्धवं तथा ॥ ४९॥

एवमेव क्षयो वृत्तः कुरूणां पाण्डवैस्सह ॥ ५०

वर्तमाने तथा तस्मिन् निर्मर्यादे महाहवे ।
भीष्ममासाद्य पार्थानां वाहिनी समकम्पत ॥ ५१

केतुना पञ्चतालेण तालेन भरतर्षभ ।
राजतेन महाबाहुर् उच्छ्रितेन महारथे ॥ ५२
बभौ भीष्मस्तदा राजंश् चन्द्रमा इव मेरुणा ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ५२॥ श्लोकाः]

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

उत्तरकुमारवधः ॥

सञ्जयः—

गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे ।
वर्तमाने महारौद्रे महावीरवरक्षये ॥ १

दुर्मुखः कृतवर्मा च कृपश्शल्यो विविंशतिः ।
भीष्मं जुगुपुरासाद्य तव पुत्रेण चोदिताः ॥ २

एतैर्गुप्तो महेष्वासैः पञ्चभिः पावकोपमैः ।
पाण्डवानामनीकानि विजगाहे महारथः ॥ ३

चेदिकाशिकरूषेषु पाञ्चालेषु च भारत ।
भीष्मस्य बहुधा तालश्च चरन् केतुरदृश्यत ॥ ४

धनूंषि रथिनां भीष्मस् [1]सोष्णीषाणि शिरांसि च ।
बाहूनपि रथांश्चोरून् तथा च विपुलान् ध्वजान् ॥ ५
विचकर्त महावेगैर् भल्लैस्सन्नतपर्वभिः ॥ ५॥

एकैकेन तु मातङ्गा [2]नाराचेन महात्मनः ॥
ताडितास्सहसा जग्मुः पृथिवीं पर्वतोपमाः ॥ ६॥

1. ख-ग-व-ङ-म—सोत्सेधानि 2. अ-क—आजघान महामनाः

नृत्यन स रथमार्गेषु भीष्मश्चरति पार्थिव ॥ ७

दुराधर्षैस्तु शत्रूणां मनांसि समकम्पयत् ।
हयांश्च सहयारोहान् पातयामास संयुगे ॥ ८

सरथेन महेष्वासो विचरन् बहुधा बली ।
मण्डलानि विचित्राणि गोमूत्रादीनि भारत ॥ ९

अन्यान् बहुविधान्मार्गान् रथेन रथकोविदः ।
विस्मापयञ् शूरसङ्घान् विचरञ्जाह्नवीसुतः ॥ १०

अभिमन्युस्ततः क्रुद्धः पिशङ्गैस्तुरगोत्तमैः ।
संयुक्तं रथमास्थाय प्रायाद् भीष्मरथं प्रति ॥ ११

जाम्बूनदविचित्रेण कर्णिकारेण केतुना ।
अभ्यवर्तत भीष्मं च तान् शल्यप्रमुखान् नृपान् ॥ १२

[1]सतालकेतुना कार्ष्णिस् समासाद्य महारथः ।
भीष्मेण युयुधे वीरस् तस्य चानुरथैस्सह ॥ १३

कृतवर्माणमेकेन शल्यं पञ्चभिराशुगैः ।
विद्ध्वा नवभिरानर्च्छच् छिताग्रैः प्रपितामहम् ॥ १४

पूर्णायतविसृष्टेन सम्यक् प्रणिहितेन च ।
ध्वजमेकेन विव्याध जाम्बूनदविभूषितम् ॥ १५

दुर्मुखस्य तु भल्लेन सर्वावरणभेदिना ।

---

1. अ-क—नास्तीदमर्धम्

जहार सारथेः कायाच् छिरस्सन्नतपर्वणा ॥ १६

विविंशतिं त्रिभिर्बाणैस् सर्वावरणभेदिभिः ।
धनुश्चिच्छेद [1]चैकेन हत्वा चाश्वान् व्यनादयत् ॥ १७

कृपस्य निशिताग्रैस्तु हयांस्तीक्ष्णजवैश्शरैः ।
जघान समरे क्रुद्धो नृत्यन्निव महारथः ॥ १८

तस्य लाघवमालोक्य तुष्टुवुर्दैवतान्यपि ।
लब्धलक्षतया कार्ष्णेस् सर्वे भीष्ममुखाश्च ते ॥ १९

सत्त्ववन्तममन्यन्त साक्षादिव धनञ्जयम् ॥ १९॥

तस्य लाघवमार्गस्थं ह्यलातसदृशप्रभम् ।
दिशः पर्यपतच्चापं गाण्डीवमिव घोषवत् ॥ २०॥

तमुद्यन्तं महावेगैर् भीष्मो दशभिराशुगैः ।
विव्याध समरे वीरम् आर्जुनिं परवीरहा ॥ २१॥

ध्वजं चास्य त्रिभिर्भल्लैश् चिच्छेद परमौजसा ।
सारथिं च त्रिभिर्बाणैर् आजघान महाव्रतः ॥ २२॥

तथैव कृतवर्मा च कृपश्शल्यश्च दुर्मुखः ।
विविंशतिस्तथा राजन् पञ्चयोधा महारथाः ॥ २३॥

[2]निजघ्नुर्निशितैर्बाणैर् अभिमन्युं महाबलम् ॥ २४

1. ख-ग-घ-ङ-म—भल्लेन हत्वा वक्षसि चानदत्
2. ख-घ-ङ-म—अर्धद्वयं नास्ति

अभिमन्युर्महावीरो विद्धो वीरैस्तु पञ्चभिः ।
तदा नाकम्पयत् कार्ष्णिर् मैनाक इव पर्वतः ॥ २५

स तैः परिवृतश्शूरो धार्तराष्ट्रैर्महारथैः ।
ववर्ष शरवर्षाणि कार्ष्णिः पञ्चरथान् प्रति ॥ २६

ततस्तेषां महास्त्राणि संवार्य शरवृष्टिभिः ।
ननाद बलवान् कार्ष्णिर् भीष्माय विसृजञ् शरान् ॥ २७

सौभद्रस्य तदा राजन् बाह्वोर्बलमदृश्यत ।
यतमानं महेष्वासं भीष्ममर्दयतश्शरैः ॥ २८

पराक्रान्तस्य तस्यैवं भीष्मोऽपि प्राहिणोच्छरान् ।
[1]स तांश्चिच्छेद समरे भीष्मचापच्युताञ् शरान् ॥ २९

ततो ध्वजममोघेषुर् भीष्मस्य नवभिश्शरैः ।
चिच्छेद समरे वीरस् तत उच्चुक्रुशुर्जनाः ॥ ३०

स राजतो महास्कन्धस् तालो हेमविभूषितः ।
सौभद्रविशिखैश्छिन्नः पपात भुवि भारत ॥ ३१

तं च सौभद्रविशिखैः पातितं भरतर्षभ ।
दृष्ट्वा भीमो ननादोच्चैस् सौभद्रमभिपालयन् ॥ ३२

अथ भीष्मस्स्वयं राजन् दिव्यमस्त्रमुदारधीः ।
प्रादुश्चक्रे महारौद्रं रणे तस्मिन् महाबलः ॥ ३३

1. अ-क—नास्तीदमर्धम्

ततश्शतसहस्रेण शराणां नतपर्वणाम् ।
अवाकिरदमेयात्मा सौभद्रं प्रपितामहः ॥ ३४
ततो दश महेष्वासाः पाण्डवानां महारथाः ।
रक्षार्थमभ्यधावन्त सौभद्रं त्वरिता रथैः ॥ ३५
विराटस्सह पुत्रेण धृष्टद्युम्नश्च पार्षतः ।
भीमश्च केकयाश्चैव सात्यकिश्च विशां पते ॥ ३६
तेषां जवेनापततां भीष्मोऽपि त्वरितो रणे ।
पाञ्चाल्यं त्रिभिरानर्च्छत् सात्यकिं च त्रिभिश्शरैः ॥ ३७
पूर्णायतविसृष्टेन क्षुरेण निशितेन च ।
ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा ॥ ३८
जाम्बूनदमयश्श्रीमान् केसरी स नरोत्तम ।
पपात भीमसेनस्य भीष्मेण मथितो रथात् ॥ ३९
ततो भीमस्त्रिभिर्विद्ध्वा भीष्मं शान्तनवं रणे ।
कृपमेकेन विव्याध कृतवर्माणमष्टभिः ॥ ४०
प्रगृहीताग्रहस्तेन वैराटिरपि दन्तिना ।
अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः ॥ ४१
तस्य वारणराजस्य जवेनापततो रथी ।
शल्यो निवारयामास वेगमप्रतिमं रणे ॥ ४२
तस्य प्रगृह्य नागेन्द्रो बृहतस्साधुवाहिनः ।

पदा युगमधिष्ठाय जघान चतुरो हयान् ॥ ४३

स हताश्वे रथे तिष्ठन् मद्राधिपतिरायसीम् ।
उत्तरान्तकरीं शक्तिं चिक्षेप भुजगोपमाम् ॥ ४४

तया भिन्नतनुत्राणः प्रविश्य विपुलं तमः ।
स पपात गजस्कन्धात् प्रमुक्ताङ्कुशतोमरः ॥ ४५

समादाय च शल्योऽसिम् अवप्लुत्य रथोत्तमात् ।
वारणेन्द्रस्य विक्रम्य चिच्छेदाशु महाकरम् ॥ ४६

भिन्नमर्मा शरव्रातैश् छिन्नहस्तस्सवारणः ।
भीममार्तस्वरं कृत्वा पपात च ममार च ॥ ४७

एतदीदृशकं कृत्वा मद्रराजो नराधिपः ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ ४८

उत्तरं तु हतं दृष्ट्वा वैराटिर्भ्रातरं तदा ।
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम् ॥ ४९

शङ्खः क्रोधात् प्रजज्वाल हविषा हव्यवाडिव ॥ ४९॥

स विष्फार्य महच्चापं शक्रचापोपमं बली ।
अभ्यधावज्जिघांसुस्तं शल्यं मद्राधिपं युधि ॥ ५०॥

महता रथवंशेन समन्तात् परिवारितः ।
सृजन् बाणमयं वर्षं प्रायाच्छल्यरथं प्रति ॥ ५१॥

तमापतन्तं सम्प्रेक्ष्य मत्तवारणविक्रमम् ।

तावकानां रथास्सप्त समन्तात् पर्यवारयन् ॥ ५२॥
मद्रराजं परीप्सन्तो मृत्योर्दंष्ट्रान्तरं गतम् ॥ ५३
ततो भीष्मो महाबाहुर् विनद्य जलदो यथा ।
तालमात्रं धनुर्बिभ्रत् शङ्खमभ्यद्रवद्रणे ॥ ५४
तमुद्यन्तमुदीक्ष्यैनं महेष्वासं महाबलम् ।
संत्रस्ता पाण्डवी सेना वातवेगहतेव नौः ॥ ५५
ततोऽर्जुनस्संत्वरितश् शङ्खस्यासीत् पुरस्सरः ।
भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्तत ॥ ५६
हाहाकारस्ततो राजन् योधानां युधि युध्यताम् ।
तेजस्तेजसि संसक्तम् इत्येवं [1]विस्मयो ह्यभूत् ॥ ५७
अथ शल्यो गदापाणिर् अवतीर्य महारथात् ।
शङ्खस्य चतुरो वाहान् अवधीद्भरतर्षभ ॥ ५८
स हताश्वो रथे तिष्ठन् खड्गमादाय विद्रुतः ।
बीभत्सोस्स्यन्दनं प्राप्य पुनश्शान्तिमविन्दत ॥ ५९
ततो भीष्मरथात् तूर्णं प्रपतन्ति पतत्रिणः ।
यैरन्तरिक्षं भूमिश्च सर्वतोऽभूत् समावृतम् ॥ ६०
पाञ्चाल्यानथ मात्स्यांश्च केकयांश्च प्रभद्रकान् ।
भीष्मः प्रहरतां श्रेष्ठः पातयामास मार्गणैः ॥ ६१

1. ख-ब-ङ-म—विस्मयात्तदा

उत्सृज्य समरे राजन् पाण्डवं सव्यसाचिनम् ।
अभ्यवर्तत पाञ्चाल्यं द्रुपदं सेनया वृतम् ॥ ६२

प्रियं सम्बन्धिनं राजन् शरानवकिरन् बहून् ॥ ६२॥
अग्निनेव प्रदग्धानि वनानि शिशिरात्यये ।

शरदग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य च ॥ ६३॥
अतिष्ठच्च रणे भीष्मो विधूम इव पावकः ।

मध्यन्दिने यथाऽऽदित्यं तपन्तमिव तेजसा ॥ ६४॥
न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुम् ।

वीक्षांचक्रुस्समन्तात् ते पाण्डवा भयपीडिताः ॥ ६५॥
त्रातारं नाभ्यगच्छन्त गावश्शीतार्दिता इव ॥ ६६

अथास्मिन् विद्रुते सैन्ये निरुत्साहे विमर्दिते ।
हाहाकारो महानासीत् पाण्डुसैन्येषु मारिष ॥ ६७

ततो भीष्मश्शान्तनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान् दीप्ताग्रान् अहीनाशीविषानिव ॥ ६८

शरैरेकायनीकुर्वन् दिशस्सर्वा यतव्रतः ।
जघान पाण्डवरथान् आदिश्यादिश्य भारत ॥ ६९

ततस्सैन्येषु भग्नेषु मथितेषु च सर्वशः ।
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किञ्चन ॥ ७०

भीष्मं च समुदीर्यन्तं दृष्ट्वा पार्थो महाहवे ।
अपहारमकुर्वंस्ते सैन्यानां भरतर्षभ ॥ ७१

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ७१ श्लोकाः ]
[ प्रथमदिवसे प्रथमापहारस्समाप्तः ]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

धृष्टद्युम्नेन क्रौञ्चव्यूहनिर्माणम् ॥

---

सञ्जयः—

कृतेऽपहारे सैन्यानां प्रथमे भरतर्षभ ।
भीष्मे च युधि संहृष्टे राजन् दुर्योधनेऽपि च ॥ १

धर्मराजस्ततस्तूर्णम् अभिगम्य जनार्दनम् ।
भ्रातृभिस्सहितस्सर्वैस् सर्वैश्च पृथिवीश्वरैः ॥ २

शोकसन्तप्तहृदयश् चिन्तयानः पराजयम् ।
वार्ष्णेयमब्रवीद्राजन् दृष्ट्वा भीष्मस्य विक्रमम् ॥ ३

युधिष्ठिरः—

कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम् ।
शरैर्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलम् ॥ ४

कथमेनं महात्मानं शक्ष्यामः प्रतिवीक्षितुम् ।
लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलम् ॥ ५

एनं हि पुरुषव्याघ्रं धनुष्मन्तं महाबलम् ।
दृष्ट्वा विप्रद्रुतं सैन्यं मदीयं मार्गणाहतम् ॥ ६

शक्यो जेतुं यमस्सङ्ख्ये वज्रपाणिश्च संयुगे ।
वरुणः पाशभृच्चापि कुबेरो वा गदाधरः ॥ ७

न तु भीष्मो महातेजाश् शक्यो जेतुं महाबलः ॥ ७॥
सोऽहमेवं गते भग्नो भीष्मेणाथ जयेप्सुना ॥ ८

[1]आत्मनो बुद्धिदौर्बल्याद् भीष्ममासाद्य केशव ।
वनं यास्यामि वार्ष्णेय श्रेयो मे तत्र जीवितुम् ॥ ९

न त्विमान् पृथिवीपालान् दातुं भीष्माय मृत्यवे ।
क्षपयिष्यति सेनां मे कृष्ण भीष्मो महास्त्रवित् ॥ १०

यथाऽनलं प्रज्वलितं पतङ्गास्समभिद्रुताः ।
विनाशायैव गच्छन्ति तथा मे सैनिका जनाः ॥ ११

क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
पाण्डवा भ्रातरश्चैव कर्शिताश्शरपीडिताः ॥ १२

मत्कृते भ्रातृभावेन राज्याद्भ्रष्टास्तथा सुखात् ।
जीवितुं बहुमन्येऽहं जीवितं ह्यद्य दुर्लभम् ॥ १३

1. अ-क—नास्तीदमर्धम्

जीवितस्य हि शेषेण तपस्तप्स्यामि दुश्चरम् ।
न घातयिष्यामि रणे मित्राणीमानि केशव ॥ १४
रथान् मे बहुसाहस्रान् दिव्यैरस्त्रैर्महाबलः ।
पातयत्यनिशं भीष्मः प्रवराणां प्रहारिणाम् ॥ १५
किं नु कृत्वा हितं मे स्याद् ब्रूहि माधव माचिरम् ।
मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् ॥ १६
एको भीमः परं शक्त्या युध्यत्येष महाभुजः ।
केवलं बाहुवीर्येण क्षत्रधर्ममनुस्मरन् ॥ १७
गदया वीरघातिन्या यथोत्साहं महामनाः ।
करोत्यसुकरं कर्म रथाश्वगजपत्तिषु ॥ १८
नालमेष क्षयं कर्तुं परसैन्यं च मारिष ।
आर्जवेनैव युद्धेन वीर वर्षशतैरपि ॥ १९
एकोऽस्त्रवित् सहायोऽयम् सोऽप्यस्मान् समुपेक्षते ।
निर्दह्यमानान् भीष्मेण द्रोणेन च महात्मना ॥ २०
दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः ।
धक्ष्यन्ति क्षत्रियानद्य प्रयुक्तानि पुनःपुनः ॥ २१
कृष्ण भीष्मस्सुसंरब्धस् सहितस्सर्वपार्थिवैः ।
क्षपयिष्यति नो नूनं तादृशोऽस्य पराक्रमः ॥ २२
स त्वं पश्य महेष्वासं योगेश्वर महारथम् ।

भीष्मं यश्शमयेत् संख्ये दावाग्निं जलदो यथा ॥ २३
तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः ।
स्वराज्यमनुसम्प्राप्ता मोदिष्यन्ति सबान्धवाः ॥ २४

सञ्जयः—

एवमुक्त्वा च कृष्णं स दध्यौ राजा महामनाः ।
चिरमन्तर्मना भूत्वा शोकोपहतचेतनः ॥ २५
[1]शोकार्तं तमथो ज्ञात्वा दुःखोपहतचेतसम् ।
अब्रवीत् तत्र गोविन्दो हर्षयन्निव पाण्डवान् ॥ २६

श्रीभगवान्—

माशुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि ।
यस्य ते भ्रातरश्शूरास् सर्वलोकस्य धन्विनः ॥ २७
अहं च प्रियकृद्राजन् सात्यकिश्च महायशाः ।
विराटद्रुपदौ चोभौ धृष्टद्युम्नश्च पार्षतः ॥ २८
तथैव सबलाश्चेमे राजानो राजसत्तम ।
त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशां पते ॥ २९
अयं ते पार्षतो नित्यं हितकामः प्रिये रतः ।
सेनापत्यमनुप्राप्तो धृष्टद्युम्नो महाबलः ॥ ३०
शिखण्डी च महाबाहो भीष्मस्य निधनं किल ।

---

1. अ-क-ग—दध्यौ राजा सुदीर्घेण कालेन परिमोहितः। [अधिकः पाठः]

[1]करिष्यति न सन्देहो नृपाणां युधि पश्यताम् ॥ ३१

सञ्जयः—

एतच्छ्रुत्वा महाराज धृष्टद्युम्नं महारथम् ।
अब्रवीत् स हि धर्मात्मा वासुदेवस्य शृण्वतः ॥ ३२

युधिष्ठिरः—

धृष्टद्युम्न निबोधेदं यत्त्वा वक्ष्यामि दुर्धरम् ।
नातिक्रम्यं भवेत् तच्च वचनं मम भाषितम् ॥ ३३

भवान् सेनापतिर्मे स्याद् वासुदेवेन सम्मितः ।
कार्तिकेयो यथा पूर्वं सेनानीरभवत् पुरा ॥ ३४

तथा त्वमपि पाण्डूनां सेनानीर्भव पार्षत ॥ ३४॥

सञ्जयः—

[2]तच्छ्रुत्वा जहृषुः पार्थाः पार्थिवाश्च महारथाः ।
साधु साध्विति तद्वाक्यम् ऊचुस्सर्वे महीक्षितः ॥ ३५॥

पुनरप्यब्रवीद्राजा धृष्टद्युम्नं महाबलम् ॥ ३६

युधिष्ठिरः—

स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान् ।
अहं च तेऽनुयास्यामि भीम कृष्णौ च मारिष ॥ ३७

माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च सङ्गताः ।

1. ख-ग-ङ-म—इदमर्धं नास्ति 2. ख-ग-ङ-म—इदमर्धत्रयं नास्ति

ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ ॥ ३८

[1]सहायं तव दुर्धर्षे करिष्यन्ति महारणे ॥ ३८॥

सञ्जयः—

एतच्छ्रुत्वा महाबाहुर् धर्मराजस्य धीमतः ।

अब्रवीद्वचनं भूयः पार्षतो राजसन्निधौ ॥ ३९॥

धृष्टद्युम्नः—

[2]अहं द्रोणान्तकः पार्थ विहितश्शम्भुना पुरा ॥ ४०

कर्णं भीष्मं तथा द्रोणं तथा शल्यं जयद्रथम् ।

सर्वानद्य रणे दृप्तान् प्रतियोत्स्यामि पार्थिव ॥ ४१

सञ्जयः—

तच्छ्रुत्वा वचनं सर्वे जहृषुः पृथिवीश्वराः ।

[3]पाण्डवाश्च सकृष्णास्ते मुदमापुः परन्तप ॥ ४२

समुद्यते पार्थिवेन्द्रे पार्षते शत्रुसूदने ।

[4]प्रहृष्टः पाण्डवो राजा तदा कृष्णस्य शृण्वतः ॥ ४३

तमब्रवीत् ततः पार्थः पार्षतं पृतनापतिम् । ४३॥

युधिष्ठिरः—

व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ।

---

1. ख-च-ङ-म—अर्धद्वयं नास्ति
2. ख-ग-च-ङ—तत उद्धर्षयन्सर्वान्धृष्टद्युम्नोऽभ्यभाषत [अधिकः पाठः]
3. ख-ङ-च-म—नासीदमर्धम्　4. ख-च-ङ-म—इदमर्धं नास्ति

यं बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत् ॥ ४४॥
तं यथावत् प्रतिव्यूहं परानीकविमर्दनम् ।
अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिस्सह ॥ ४५॥

सञ्जयः—

तथोक्तस्स नृपस्तेन विष्णुर्वज्रभृता यथा ।
[1]प्रभाते सर्वसैन्यानां व्यूहं चक्रे स चाग्रतः ॥ ४६॥
बार्हस्पत्येन विधिना व्यूहमार्गविचक्षणः ।
प्रभाते सर्वसैन्यानाम् अग्रे चक्रे धनञ्जयम् ॥ ४७॥
आदित्यपथगः केतुस् तस्याद्भुत[2]तमो महान् ।
शासनात् पुरुहूतस्य निर्मितो विश्वकर्मणा ॥ ४८॥
इन्द्रायुधसवर्णाभिः पताकाभिरलङ्कृतः ।
आकाशग इवाकाशे गन्धर्वनगरोपमः ॥ ४९॥
नृत्यमान इवाभाति रथचर्यासु मारिष ।
तेन रत्नवता पार्थस् स च गाण्डीवधन्वना ॥ ५०॥
[3]बभूव परमोपेतः सुमेरुरिव भानुना ॥ ५१
[4]शिखाऽऽसीद्द्रुपदो राजा महत्या सेनया वृतः ।

---

1. ख-घ-ङ-म—इदमर्धद्वयं नास्ति
2. ख-ग—करोत्तमः (घ) ङ-म—करो मम
3. अ-क—गाण्डीवधनुषा चापि स्वयंभूरिव भानुना । [पाठान्तरम्]
4. ख-ग-घ—विशिखो; ङ-म—विराटद्रुपदौ राजन्

कुन्तिभोजश्च चैद्यश्च चक्षुरासीज्जनेश्वर ॥ ५२
दशार्णगाः प्रयागाश्च कशेरुकगणैस्सह ।
अनूपगाः किराताश्च ग्रीवायां भरतर्षभ ॥ ५३
पटच्चरैश्च हूणैश्च राजन् पौरवकैस्तथा ।
निषादैस्सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ॥ ५४
पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ५४॥
द्रौपदेयाश्च कार्ष्णिश्च सात्यकिश्च महारथः ।
पिशाचा दरदाश्चैव पुण्ड्राः कुण्डीविषैस्सह ॥ ५५॥
निकुम्भा धेनुकाश्चैव तंकणाः परतंकणाः ।
बाह्लिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत ॥ ५६॥
एते जनपदा राजन् दक्षिणं पक्षमाश्रिताः ॥ ५७
[1]अग्निवेश्या जगत्कुण्डा मलदाना महारथाः ।
शबरा बर्बराश्चैव वत्साश्च सह नाकुलैः ॥ ५८
नकुलस्सहदेवश्च वामं पक्षं समाश्रिताः ॥ ५८॥
रथानामयुतं पक्षौ शिरस्तु नियुतं तथा ।
पृष्ठमर्बुदमेवासीत् सहस्राणि च विंशतिः ॥ ५९॥
ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ।
पक्षकोटिप्रपक्षेषु पक्षान्तेषु च वारणाः ॥ ६०॥

1. अ-क—नास्तीदमर्धम्

जग्मुः परिवृता राजंश्च चरन्त इव पर्वताः ॥ ६१
जघनं पालयामास विराटस्सह केकयैः ।
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ॥ ६२
एवमेतं महाव्यूहम् व्यूह्य भारत पाण्डवाः ।
सूर्यस्योदयमिच्छन्ति स्थिता युद्धाय दंशिताः ॥ ६३
तेषामादित्यवर्णानि विमलानि महान्ति च ।
श्वेतच्छत्राण्यशोभन्त वारणेषु रथेषु च ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ६४ श्लोकाः]
[ द्वितीयदिवस युद्धम् ]

## ॥ षट्चत्वारिंशोऽध्यायः ॥



भीष्मादिभिः प्रतिव्यूहरचना ॥

सञ्जयः—

क्रौञ्चं ततो महाव्यूहम् अभेद्यं तनयस्तव ।
व्यूहं दृष्ट्वा महाघोरं पार्थेनामिततेजसा ॥ १
आचार्यमुपसङ्गम्य कृपं शल्यं च मारिष ।
सौमदत्तिं विकर्णं च अश्वत्थामानमेव च ॥ २

दुःशासनादीन् भ्रातृंश्च सर्वानेव च भारत ।
अन्यांश्च सुबहून् शूरान् युद्धाय समुपागतान् ॥ ३
प्राहेदं वचनं काले हर्षयंस्तनयस्तव ॥ ३॥

दुर्योधनः—

नानाशस्त्रप्रहरणास् सर्वे शस्त्रास्त्रकोविदाः ।
एकैकं हि समर्था हि यूयं सर्वे महारथाः ॥ ४॥
पाण्डुपुत्रान् रणे हन्तुं ससैन्यान् किमु संहताः ॥ ५
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ ६
संस्थानाश्शूरसेनाश्च खर्वकाः कुकुरास्तथा ।
आरोचकास्त्रिगर्ताश्च भद्रका यवनास्तथा ॥ ७
शत्रुञ्जयेन सहितास् तथा दुःशासनेन च ।
[1]विकर्णेन च धीरेण तथा नन्दोपनन्दकैः ॥ ८
चित्रसेनेन सहितास् सहिताः पारिभद्रकैः ।
भीष्ममेवाभिरक्षन्तु सर्वसैन्यपुरस्कृताः ॥ ९

सञ्जयः—

[2]दुर्योधनवचश्श्रुत्वा सर्व एव महारथाः ।
तथेत्येनं नृपा ऊचुस् तदा द्रोणपुरोगमाः ॥ १०

1. अ—सप्तार्धानि न सन्ति 2. ख-ग-घ-ङ-म—अर्धद्वयं नास्ति

ततो द्रोणश्च भीष्मश्च तव पुत्रेण मारिष ।
अव्यूहन्त महाव्यूहं पाण्डवान् प्रति चाहवे ॥ ११
भीष्मस्सैन्येन महता समन्तात् परिवारितः ।
ययौ प्रकर्षन् महतीं वाहिनीं सुरराडिव ॥ १२
तमन्वयान्महेष्वासो भारद्वाजः प्रतापवान् ।
कुन्तलैश्च दशार्णैश्च मागधैश्च विशां पते ॥ १३
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि ।
[1]सहितास्सर्वसैन्येन भीष्ममाहवशोभिनम् ॥ १४
गान्धारास्सिन्धुसौवीराश् शिबयोऽथ वसातयः ।
शकुनिश्च स्वसैन्येन भारद्वाजमपालयत् ॥ १५
ततो दुर्योधनो राजा सहितस्सर्वसोदरैः ।
[2]अश्मान्तकैर्निषण्णैश्च तथा काश्मीरकोसलैः ॥ १६
दरदैश्चूचुपैश्चैव तथा क्षुद्रकमालवैः ।
अभ्यरक्षत संहृष्टस् सौबलेयस्य वाहिनीम् ॥ १७
भूरिश्रवाश्शलश्शल्यो भगदत्तश्च मारिष ।
विन्दानुविन्दावावन्त्यौ वामं पक्षमपालयन् ॥ १८
सोमदत्तस्सुशर्मा च काम्भोजश्च सुदक्षिणः ।

1. अ-क—नास्तीदमर्धम्
2. अ-क—अश्मान्तकैर्विकीर्णैश्च

श्रुतायु[1]श्च शतायुश्च दक्षिणं पक्षमाश्रिताः ॥ १९
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
महत्या सेनया सार्धं सेनापृष्ठे व्यवस्थिताः ॥ २०

पृष्ठगोपास्तु तस्यासन् नानादेश्या जनेश्वराः ।
केतुमान् वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ २१

ततस्ते तु नरास्सर्वे हृष्टा युद्धाय भारत ।
दध्मुश्शङ्खान् मुदा युक्तास् सिंहनादान् व्यनादयन् ॥ २२

तेषां श्रुत्वा तु हृष्टानां कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैश् शङ्खं दध्मौ प्रतापवान् ॥ २३

ततश्शङ्खाश्च भेर्यश्च [2]पणवानकगोमुखाः ।
[3]सर्वतश्चाप्यवाद्यन्त स शब्दस्तुमुलोऽभवत् ॥ २४

ततश्श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
प्रदध्मतुश्शङ्खवरौ हेमरत्नपरिष्कृतौ ॥ २५

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
तथैव बलवान् राजन् भीमकर्मा वृकोदरः ॥ २६

युधिष्ठिरश्च धर्मात्मा माद्रीपुत्रौ च पाण्डवौ ।

---

1. ख-ग-घ-ङ-म—श्चाश्रुता
2. ग-ङ-म—पणवाश्च विशां पते घ—आहताश्च विशां पते
3. ग—आनका ख—आनकाश्च वाद्यन्त
घ-ङ-म—आनकाश्चाभ्यवाद्यन्त

अभिमन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ॥ २७
काशिराजश्च शैब्यश्च शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ २८
पाञ्चाल्याश्च महेष्वासा द्रौपद्याः पञ्च चात्मजाः ।
सर्वे दध्मुर्महाशङ्खान् सिंहनादांश्च नेदिरे ॥ २९
[1]स घोषस्सुमहांस्तत्र वीरैस्तैस्समुदीरितः ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत् ॥ ३०
एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः ।
पुनर्युद्धाय सञ्जग्मुस् [2]स्पर्धमानाः परस्परम् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[द्वितीयदिवसयुद्धम्]
[अस्मिन्नध्याये ३१ श्लोकाः]

---

1. ब-ङ—भेरीमृदङ्गपणवा आनकाश्च विशां पते ।
म—पाण्डुसैन्येऽभ्यवादन्त सिंहनादरवैस्सह ॥ [अधिकः पाठः]
2. स-ग-ब-ङ-म—स्थापयन्तः

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

भीष्मार्जुनयोर्युद्धम् ॥

धृतराष्ट्रः—

एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
कथं प्रहरतां श्रेष्ठास् सम्प्रहारं प्रचक्रिरे ॥ १

सञ्जयः—

तथा व्यूढेष्वनीकेषु सन्नद्धरुचिरध्वजाः ।
तावकाः पाण्डवैस्सार्धं यथाऽयुध्यन्त तच्छृणु ॥ २

अपारमिव सन्दृश्य सागरप्रतिमं बलम् ।
तेषां मध्ये स्थितो राजा पुत्रो दुर्योधनस्तव ॥ ३

अब्रवीत् तावकान् सर्वान् युद्ध्यध्वमिति दंशितान् ॥ ३॥

ते मनः क्रूरमास्थाय समभित्यक्तजीविताः ।
पाण्डवानभ्यवर्तन्त सर्वे एवोच्छ्रितध्वजाः ॥ ४॥

ततो युद्धं समभवत् तुमुलं रोमहर्षणम् ।
तावकानां परेषां च व्यतिषक्तरथद्विपम् ॥ ५॥

मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खास्सुतेजनाः ।
सन्निपेतुरतीवोग्रा नागेषु च हयेषु च ॥ ६॥

तथा प्रवृत्ते सङ्ग्रामे धनुरुद्यम्य दंशितः ।

ववर्ष शरवर्षाणि कुरुवृद्धः पितामहः ॥ ७॥
सौभद्रे भीमसेने च शैनेये च महारथे ।
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ८॥
एतेषु नरसिंहेषु मात्स्यकारूशचेदिषु ।
अविषक्तं महाव्यूहं [1]तस्मिन् वीरपरक्षये ॥ ९॥
सर्वेषामेव सैन्यानाम् आसीद्व्यतिकरो महान् ॥ १०
सादिनो [2]ध्वजनागाश्च हतप्रवरवाजिनः ।
विप्रकीर्णरथानीकास् समपद्यन्त पाण्डवाः ॥ ११
ततोऽर्जुनो नरव्याघ्रो दृष्ट्वा भीष्मं महारथम् ।
वार्ष्णेयमब्रवीत् क्रुद्धो याहि यत्र पितामहः ॥ १२
एष भीष्मस्सुसङ्क्रुद्धो वार्ष्णेय मम वाहिनीम् ।
नाशयिष्यति सङ्ग्रामे दुर्योधनहिते रतः ॥ १३
एष द्रोणः कृपश्शल्यो विकर्णश्च जनार्दन ।
धार्तराष्ट्राश्च सहिता दुर्योधनपुरोगमाः ॥ १४
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्वना ॥ १४॥
सोऽहं भीष्मं वधिष्यामि सैन्यहेतोर्जनार्दन ॥ १५
तमब्रवीद्वासुदेवो यत्तो भव धनञ्जय ।

---

1. अ-क—आसीद्वीरक्षये सति
2. अ-क—गजवाहाश्च निहताश्च गजाऽभवन्

एष त्वां प्रापये वीर पितामहरथं प्रति ॥ १६

एवमुक्त्वा ततः कृष्णो रथं तं लोकविश्रुतम् ।
प्रेषयामास भीष्मस्य रथं प्रति जनेश्वर ॥ १७

चलद्वहुपताकेन बलाकावर्णवाजिना ।
समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ १८

महता मेघनादेन रथेनादित्यवर्चसा ।
विनिघ्नन् कौरवानीकं शूरसेनांश्च पाण्डवः ॥ १९

प्रायाच्छरणदश्शीघ्रं सुहृदां हर्षवर्धनः ॥ १९॥

तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
त्रासयन्तं रणे शूरान् स्तंभयन्तं च सायकैः ॥ २०॥

[1]सैन्धवप्रमुखैर्गुप्तश् [2]शूरसेनैश्च केकयैः ।
सहसा प्रत्युदीयाय भीष्मश्शान्तनवोऽर्जुनम् ॥ २१॥

को हि गाण्डीवधन्वानम् अन्यः कुरुपितामहात् ।
द्रोणवैकर्तनाभ्यां वा रथी संयातुमर्हति ॥ २२॥

ततो भीष्मो महाराज सर्वलोकमहारथः ।
अर्जुनं सप्तसप्तत्या नाराचानां समर्पयत् ॥ २३॥

द्रोणश्च पञ्चविंशत्या कृपश्शारद्वतस्त्रिभिः ।
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभिश्शरैः ॥ २४॥

---

1. ख—इदमर्धं नास्ति  2. घ-ङ-म—प्राच्यकेकयमागधैः

सैन्धवो नवभिश्चैव शकुनिश्चापि पञ्चभिः ।
विकर्णो नवभिर्भल्लै राजन् विव्याध पाण्डवम् ॥ २५॥
तैर्विद्धस्स महेष्वासैस् समन्तान्निशितैश्शरैः ।
न विव्यथे महाबाहुर् भिद्यमान इवाचलः ॥ २६॥
स भीष्मं पञ्चविंशत्या कृपं च दशभिश्शरैः ।
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिश्शरैः ॥ २७॥
आर्तायनिं त्रिभिर्बाणै राजानं चापि पञ्चभिः ।
प्रत्यविध्यदमेयात्मा पाण्डवो युद्धदुर्मदः ॥ २८॥
तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ।
सौभद्रो द्रौपदेयाश्च परिवव्रुर्धनञ्जयम् ॥ २९॥
ततो द्रोणं महेष्वासं गाङ्गेयस्य प्रिये रतम् ।
अभ्यवर्तत पाञ्चाल्यस् संयुक्तस्सह सोमकैः ॥ ३०॥
भीष्मस्तु रथिनां श्रेष्ठो राजन् विव्याध पाण्डवम् ।
अशीत्या निशितैर्बाणैस् तदाऽक्रोशन्त पाण्डवाः ॥ ३१॥
तेषां च निनदं श्रुत्वा प्रहृष्टानां प्रधर्षकम् ।
प्रविवेश ततो मध्यं रथसिंहः प्रतापवान् ॥ ३२॥
तेषां महारथानां च मध्यं प्राप्य धनञ्जयः ।
चिक्रीड धनुषा राजँल्लक्ष्यान् कृत्वा महारथान् ॥ ३३॥
क्षत्रियाणां शिरांस्युग्रैः कृन्तन् शस्त्रैर्महारथः ।

शून्यान् कृत्वा रथोपस्थान् व्यचरत् फल्गुनस्तदा ॥ ३४॥

ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः ।
पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे ॥ ३५॥

दुर्योधनः—

एष पाण्डुसुतस्तात कृष्णेन सहितो बली ।
यततां सर्वसैन्यानां मूलं नः परिकृन्तति ॥ ३६॥

त्वयि जीवति गाङ्गेय द्रोणे च रथिनां वरे ।
त्वत्कृते चैष कर्णो वै न्यस्तशस्त्रो महारथः ॥ ३७॥

न युध्यति रणे पार्थान् हितकामस्सदा मम ।
स तथा कुरु गाङ्गेय यथा हन्येत फल्गुनः ॥ ३८॥

सञ्जयः—

एवमुक्तस्तदा राजन् पिता देवव्रतस्तव ।
धिक् क्षत्रधर्ममित्युक्त्वा ययौ पार्थरथं प्रति ॥ ३९॥

उभौ श्वेतहयौ राजन् संसक्तौ दृढधन्विनौ ।
सिंहनादं भृशं कृत्वा बाणशङ्खरवैस्सह ॥ ४०॥

द्रौणिर्दुर्योधनश्चैव विकर्णश्च महारथः ।
परिवार्य रणे भीष्मम् अभ्यरक्षन् पितामहम् ॥ ४१॥

तथैव पाण्डवास्सर्वे परिवार्य धनञ्जयम् ।
स्थिता युद्धाय महते ततो युद्धमवर्तत ॥ ४२॥

[1]गाङ्गेयस्तु रणे पार्थम् आनर्च्छन्नवभिश्शरैः ।
तमर्जुनः प्रत्यविध्यद् दशभिर्मर्मभेदिभिः ॥ ४३॥

ततश्शरसहस्रेण सुप्रयुक्तेन भारत ।
धनञ्जयो जयप्रेप्सुः भीष्मस्यावारयद्दिशः ॥ ४४॥

शरजालं ततस्तत् तु शरजालेन भारत ।
वारयामास पार्थस्य भीष्मश्शान्तनवो युधि ॥ ४५॥

उभौ परमसंहृष्टावुभौ युद्धाभिनन्दिनौ ।
निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ ॥ ४६॥

भीष्मचापविमुक्तानि शरजालानि सङ्घशः ।
शीर्यमाणान्यदृश्यन्त भिन्नान्यर्जुनसायकैः ॥ ४७॥

तथैवार्जुनमुक्तानि शरजालानि भागशः ।
गाङ्गेयशरनुन्नानि न्यपतन्त महीतले ॥ ४८॥

अर्जुनः पञ्चविंशत्या भीष्ममार्च्छच्छितैश्शरैः ।
भीष्मोऽपि समरे पार्थं विव्याध निशितैश्शरैः ॥ ४९॥

अन्योन्यस्य हयान् विद्ध्वा ध्वजौ च सुमहाद्युती ।
रथेषां रथचक्रे च [2]शस्त्रैश्चिक्रीडतू रणे ॥ ५०॥

ततः क्रुद्धो महाराज भीष्मश्शान्तनवश्शरैः ।

1. अ-क—प्रावर्तत महायुद्धं राजन्नर्जुनभीष्मयोः । [अधिकः पाठः]
2. ख-ग-घ-ङ-म—चित्रं

वासुदेवं ततस्तीक्ष्णैर् आजघान स्तनान्तरे ॥ ५१॥
भीष्मचापच्युतैर्बाणैर् निर्विद्धो मधुसूदनः ।
विरराज रणे राजन् सपुष्प इव किंशुकः ॥ ५२॥
ततोऽर्जुनो भृशं क्रुद्धो निर्विद्धं वीक्ष्य माधवम् ।
सारथिं कुरुवृद्धस्य निर्बिभेद शितैश्शरैः ॥ ५३॥
यतमानौ तु तौ वीरावन्योन्यस्य वधं प्रति ।
न तौ शेकतुरन्योन्यम् अतिसन्धातुमाहवे ॥ ५४॥
तौ मण्डलानि चित्राणि गतप्रत्यागतानि च ।
अदर्शयेतां बहुधा सूतसामर्थ्यजं बलम् ॥ ५५॥
अन्तरं च प्रहारेषु तर्कयन्तौ परस्परम् ।
राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः ॥ ५६॥
उभौ सिंहरवोन्मिश्रं शङ्खशब्दं प्रचक्रतुः ।
तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ ॥ ५७॥
तयोश्शङ्खनिनादेन रथनेमिस्वनेन च ।
दारिता सहसा भूमिश् चकम्पे च ननाद च ॥ ५८॥
न तयोरन्तरं कश्चिद् रणे पश्यति भारत ।
धर्माश्रितस्य हि तथा न किञ्चिद्वाजिनं क्वचित् ॥ ५९॥
तावुभौ समरे वीरावन्योन्यसमरे उभौ ।
चिह्नमात्रेण भीष्मं तु जज्ञिरे तव कौरवाः ॥ ६०॥

तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरे ॥ ६१
तयोर्नृसिंहयो राजन् युद्धं दृष्ट्वाऽतिविक्रमम् ।
विस्मयं सर्वभूतानि जग्मुर्भारतसंयुगे ॥ ६२
अन्योन्यं शरजालेन तावदृश्यौ बभूवतुः ।
प्रकाशतां पुनर्यातौ क्षणेन भरतर्षभौ ॥ ६३
ततो देवास्सगन्धर्वाश्च चारणाश्च सहर्षिभिः ।
[1]अन्योन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम् ॥ ६४
न शक्यौ युधि संरब्धौ जेतुमेतौ कथञ्चन ।
सदैत्यासुरगन्धर्वैः देवैरपि सवासवैः ॥ ६५
आश्चर्यभूतं लोकेऽस्मिन् युद्धमेतन्महाद्भुतम् ।
नैतादृशानि युद्धानि भूतपूर्वाणि संयुगे ॥ ६६
न हि शक्यो रणे भीष्मो जेतुं पार्थेन धीमता ।
सधनुश्च रथस्थश्च विसृजंश्चापि सायकान् ॥ ६७
तथैव पाण्डवं युद्धे दैवैरपि दुरासदम् ।
न हि जेतुं रणे भीष्म उत्सहेत धनुर्धरम् ॥ ६८
इति स्म वाचश्श्रूयन्ते प्रोच्चरन्तस्ततस्ततः ।
गाङ्गेयार्जुनयोस्सङ्ख्ये त्वत्कृते भरतर्षभ ॥ ६९
ततस्त्वदीया योधाश्च पाण्डवेयाश्च भारत ।

1. अ—द्वादशार्धानि न सन्ति

अन्योन्यं समरे जघ्नुस् तयोस्तत्र समागमे ॥ ७०
शितधारैस्तथा खड्गैर् विमलैश्च परश्वधैः ।
उभयोस्सेनयोश्शूरा न्यकृन्तन्त परस्परम् ॥ ७१
वर्तमाने तथा घोरे तस्मिन् वीरवरक्षये ।
द्रोणपाञ्चाल्यो राजन् महानासीत् समागमः ॥ ७२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ७२ श्लोकाः ]

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

---

द्रोणधृष्टद्युम्नयोर्युद्धम् ॥

---

धृतराष्ट्रः—

कथं द्रोणो महेष्वासः पाञ्चाल्यश्चापि पार्षतः ।
रणे समीयतुर्यत्तौ तन्ममाचक्ष्व सञ्जय ॥ १
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
यत्र शान्तनवो भीष्मो नाहनद्युधि पाण्डवम् ॥ २
भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान् ।
स कथं पाण्डवं युद्धे नातरत् सञ्जयाद्य वै ॥ ३

सञ्जयः—

शृणु राजन् स्थिरो भूत्वा युद्धमेतत् सुदारुणम् ।
न शक्यः पाण्डवो जेतुं देवैरपि सवासवैः ॥ ४

द्रोणस्तु निशितैर्बाणैर् धृष्टद्युम्नमयोधयत् ।
सारथिं चास्य भल्लेन ध्वजं चैकेन विव्यथे ॥ ५

तथाऽस्य चतुरो वाहांश् चतुर्भिस्सायकोत्तमैः ।
पीडयामास सङ्क्रुद्धो धृष्टद्युम्नस्य मारिष ॥ ६

धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैश्शरैः ।
विव्याध समरे वीरस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७

ततः पुनरमेयात्मा भारद्वाजः प्रतापवान् ।
शरैस्समच्छादयामास धृष्टद्युम्नममर्षणम् ॥ ८

सन्दधे च शरं घोरं पार्षतान्तचिकीर्षया ।
शक्राशनिसमस्पर्शं कालदण्डमिवापरम् ॥ ९

हाहाकारो महानासीत् सर्वसैन्यस्य मारिष ।
तमिषुं संहितं दृष्ट्वा भारद्वाजेन धीमता ॥ १०

तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषम् ।
य एकस्समरे वीरस् तस्थौ गिरिरिवाचलः ॥ ११

तं च सृष्टं महाघोरम् आयान्तं मृत्युमात्मनः ।
चिच्छेद शरवर्येण भारद्वाजस्य संयुगे ॥ १२

तत उच्चुक्रुशु र्हृष्टाः पाञ्चालास्सह पाण्डवैः ।
धृष्टद्युम्नेन तत् कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ १३
अथ शक्तिं महावेगां रुक्मवैडूर्यभूषिताम् ।
द्रोणस्य निधनाकाङ्क्षी चिक्षेप त्वरयाऽन्वितः ॥ १४
तामापतन्तीं सहसा शक्तिं कनकभूषिताम् ।
त्रिधा चिच्छेद समरे भारद्वाजो हसन्निव ॥ १५
शक्तिं तां विहतां दृष्ट्वा धृष्टद्युम्नः प्रतापवान् ।
ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वर ॥ १६
शरवर्षं ततस्तूर्णं सन्निवार्य महारथः ।
द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्मुकम् ॥ १७
स च्छिन्नधन्वा समरे गदां गुर्वीं महाबलः ।
द्रोणाय प्रेषयामास अश्मसारमयीं दृढाम् ॥ १८
सा गदा वेगवन्मुक्ता प्रायाद्द्रोणजिघांसया ॥
तत्राद्भुतमपश्याम भारद्वाजस्य विक्रमम् ॥ १९
लाघवाद्ध्वंसयामास गदां हेमविभूषिताम् ॥ १९॥
ध्वंसयित्वा गदां चैव प्रेषयामास पार्षते ।
भल्लान् सुनिशितान् पीतान् रुक्मपुङ्खान् सुदारुणान् । २०॥
ते तस्य कवचं भित्त्वा पपुश्शोणितमाहवे ॥ २१
अथान्यद्धनुरादाय धृष्टद्युम्नो महामनाः ।

द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः ॥ २२
[1]रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ ।
वसन्तसमये राजन् पुष्पिताविव किंशुकौ ॥ २३
अमर्षितस्ततो राजन् पराक्रम्य चमूमुखे ।
द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकम् ॥ २४
अथैनं छिन्नधन्वानं शरैस्सन्नतपर्वभिः ।
अभ्यवर्षदमेयात्मा वृष्ट्या शैलमिवाम्बुदः ॥ २५
सारथिं चास्य भल्लेन रथनीडादपाहरत् ॥ २५॥
अथास्य चतुरो वाहांश् चतुर्भिर्निशितैश्शरैः ।
पातयामास समरे सिंहनादं ननाद च ॥ २६॥
भल्लेन चास्य तीक्ष्णेन हस्ताच्चापमपातयत् ॥ २७
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवारोहत् ख्यापयन् पौरुषं महत् ॥ २८
तामस्य विशिखैस्तूर्णं पातयामास भारत ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ २९
ततस्स विपुलं चर्म शतचन्द्रं मनोहरम् ।
खड्गं च विपुलं दिव्यं प्रगृह्य सुमहाभुजः ॥ ३०
अभिदुद्राव वेगेन द्रोणस्य वधकाङ्क्षया ।

1. ख—इतः अर्धपञ्चकं नास्ति

आमिषार्थी यथा सिंहो वने मत्तमिव द्विपम् ॥ ३१
तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम् ।
लाघवं चास्त्रयोगं च बलं बाह्वोश्च मारिष ॥ ३२
यदेनं शरवर्षेण सङ्क्रुद्धस्समवारयत् ।
न शशाक ततो गन्तुं बलवानपि संयुगे ॥ ३३
निवारितस्तु द्रोणेन धृष्टद्युम्नो महारथः ।
न्यवारयच्छरौघांस्तांश् चर्मणा कृतहस्तवत् ॥ ३४
ततो भीमो महाबाहुस् सहसाऽभ्यपतद्बली ।
साहाय्यकारी समरे पार्षतस्य महात्मनः ॥ ३५
स द्रोणं निशितैर्बाणै राजन् विव्याध सप्तभिः ।
पार्षतं च रथं तूर्णम् अन्यमारोहयत् तदा ॥ ३६
ततो दुर्योधनो राजन् कलिङ्गं समचोदयत् ।
सैन्येन महता गुप्तं भारद्वाजस्य रक्षणे ॥ ३७
ततस्सा महती सेना कलिङ्गानां जनेश्वर ।
भीममभ्युद्ययौ तूर्णं तव पुत्रस्य शासनात् ॥ ३८
पाञ्चाल्यमपि सन्त्यज्य द्रोणः प्रहरतां वरः ।
विराटद्रुपदौ क्रुद्धौ योधयामास संयुगे ॥ ३९
धृष्टद्युम्नोऽपि समरे धर्मराजानमन्वयात् ।

ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ॥ ४०

कलिङ्गानां च समरे भीमस्य च महात्मनः ।

जगत[1]स्तु क्षयकरं घोररूपं भयानकम् ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

## ॥ एकोनपञ्चाशोऽध्यायः ॥



भीमसेनेन कलिङ्गादिवधः ॥

धृतराष्ट्रः—

मम पुत्रसमादिष्टः कलिङ्गो वाहिनीपतिः ।

कथमद्भुतकर्माणं भीमसेनं महाबलम् ॥ १

चरन्तं गदया वीरं दण्डपाणिमिवान्तकम् ।

योधयामास समरे कलिङ्गस्सह सेनया ॥ २

सञ्जयः—

पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः ।

महत्या सेनया गुप्तः प्रायाद्भीमरथं प्रति ॥ ३

तामापतन्तीं महतीं कलिङ्गानां महाचमूम् ।

1. ग-व-ङ-म—प्रेक्षणकरं ख—ःप्रक्षयकरं

रथनागाश्वकलिलां प्रगृहीतमहागदः ॥ ४
भीमसेनः कलिङ्गानाम् आच्छेद्भारत वाहिनीम् ।
केतुमन्तं च नैषादिम् आयान्तं सह चेदिभिः ॥ ५
[1]ततश्श्रुतायुस्संक्रुद्धो राज्ञा केतुमता सह ।
आससाद रणे भीमं व्यूढानीको महाबलः ॥ ६
अथाश्वैर्बहुसाहस्रैः कलिङ्गानां जनेश्वर ।
अयुतेन गजानां च निषादैस्सह केतुमान् ॥ ७
भीमसेनं रणे राजन् समन्तात् पर्यवारयत् ॥ ७॥
चेदिमत्स्यकरूशाश्च भीमसेनपदानुगाः ।
अभ्यधावन्त समरे निषादैस्सह राजभिः ॥ ८॥
ततः प्रववृते युद्धं घोररूपं भयानकम् ।
परेषां तव योधानां परस्परजिघांसया ॥ ९॥
घोररूपं ततो युद्धं भीमस्य सहसा परैः ।
यथेन्द्रस्य महाराज महत्या दैत्यसेनया ॥ १०॥
तस्य सैन्यस्य सङ्ग्रामे युध्यमानस्य भारत ।
बभूव सुमहाञ्शब्दस् सागरस्येव गर्जतः ॥ ११॥
अन्योन्यस्य तदा योधा विकर्तन्तो विशां पते ।
महीं चक्रुश्चितां सर्वां मांसशोणितकर्दमैः ॥ १२॥

---

1. अ-क-ग—युद्धोन्मुखस्तदा भीमं तव पुत्रेण चोदितः । [अधिकः पाठः]

योधांश्च स्वान् परान् वापि नाभ्यजानञ्जिघांसया ।
स्वानप्याददतेऽस्माकं शूरास्समरदुर्जयाः ॥ १३॥
विमर्दस्सुमहानासीद् अल्पानां बहुभिस्सह ।
कलिङ्गैस्सह चेदीनां निषादैश्च विशां पते ॥ १४॥
कृत्वा पुरुषकारं तु यथाशक्ति महाबलाः ।
भीमसेनं परित्यज्य संन्यवर्तन्त चेदयः ॥ १५॥
सर्वे कलिङ्गकाश्चैव सन्निवृत्तेषु चेदिषु ।
स्वबाहुबलमास्थाय अभ्यवर्षन्त पाण्डवम् ॥ १६॥
न चचाल रथोपस्थाद् भीमसेनो महाबलः ।
[1]शितैरवाकिरद्बाणैः कलिङ्गानां वरूथिनीम् ॥ १७॥
कालिङ्गश्च महेष्वासः पुत्रश्चास्य महारथः ।
[2]शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः ॥ १८॥
ततो भीमो महाबाहुर् प्रगृह्य रुचिरं धनुः ।
योधयामास कालिङ्गान् स्वबाहुबलमाश्रितः ॥ १९॥
शक्रदेवस्तु समरे विसृजन् सायकान् बहून् ।
ववर्ष शरवर्षाणि तपान्ते जलदो यथा ॥ २०॥
जघान चाश्वान् समरे भीमसेनस्य सायकैः ॥ २१
हताश्वे स रथे तिष्ठन् भीमसेनो महाबलः ।

1. अ-क—नवार्धानि न सन्ति 2. ग—अर्धत्रयं नास्ति

शक्रदेवाय चिक्षेप सर्वशैक्यायसीं गदाम् ॥ २२
गदयाऽभिहतो राजन् कलिङ्गतनयो रथात् ।
सध्वजस्सह सूतेन जगाम धरणीतलम् ॥ २३
हतमात्मसुतं दृष्ट्वा कलिङ्गानां जनेश्वरः ।
रथैरनेकसाहस्रैर् भीमस्यावारयद्दिशः ॥ २४
अयुतेन गजानां च निषादैः परिवारितः ।
ततो भीमो महाबाहुस् [1]रथादाप्लुत्य हृष्टवत् ॥ २५
निस्त्रिंशमाददे घोरं चिकीर्षुः कर्म दुष्करम् ।
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभः ॥ २६
नक्षत्रैरर्धचन्द्रैश्च शातकुम्भमयैश्चितम् ।
कलिङ्गस्तु ततः क्रुद्धो [2]धनुर्ज्यामवमृज्य च ॥ २७
[3]परिगृह्य शरं तीक्ष्णम् एकं सर्पविषोपमम् ।
प्राहिणोद्भीमसेनाय जयकाङ्क्षी जनेश्वरः ॥ २८
तमापतन्तं वेगेन प्रेरितं निशितं शरम् ।
भीमसेनो द्विधा राजंश् चिच्छेद विपुलासिना ॥ २९
उदक्रोशच्च संहृष्टस् त्रासयानो वरूथिनीम् ॥ २९॥
कालिङ्गोऽथ ततः क्रुद्धो भीमसेनाय संयुगे ।

---

1. अ-क-म—तमासाद्य प्रहृष्टवत्
2. अ—भीमसेनाय संयुगे
3. अ—षडर्धानि न सन्ति

तोमरान् प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान् ॥ ३०॥
तानप्राप्तान् महाबाहुः खगतानेव पाण्डवः ।
चिच्छेद समरे राजन्नसम्भ्रान्तो वरासिना ॥ ३१॥
निकृत्य तु रणे भीमस् तोमरान् वै चतुर्दश ॥ ३२
भानुमन्तं ततो भीमः प्राद्रवत् पुरुषोत्तमः ।
भानुमानपि सङ्क्रुद्धश् शरवर्षैरवाकिरत् ॥ ३३
ननाद सिंहवन्नादं नादयानो नभस्थलम् ॥ ३३॥
न तु तन्ममृषे भीमस् सिंहनादं महारणे ।
ततस्स्वनेन महता विननाद महाबलः ॥ ३४॥
तेन नादेन वित्रस्ता कलिङ्गानां वरूथिनी ।
न भीमं समरे मेने मानुषं भरतर्षभ ॥ ३५॥
[1]गजमारुह्य बलवान् मदवारणविक्रमः ।
भानुमाञ् शरवर्षेण वर्षयामास पाण्डवम् ॥ ३६॥
भीमसेनाय सङ्क्रुद्धः प्रेरयामास तं गजम् ।
पुरस्तादभिधावन्तं विनदन्तं महागजम् ॥ ३७॥
[2]तदा चरन्महाराज विनद्य विपुलस्वनम् ।
सासिर्वेगवदाप्लुत्य दन्ताभ्यां वारणोत्तमम् ॥ ३८॥

1. ख-घ-ङ-म—अर्धचतुष्टयं नास्ति
2. अ-क—नास्तीदमर्धम्

आरुरोह ततो मध्यं नागराजस्य मारिष ।
खड्गेन पृथुना मध्ये भानुमन्तमथाच्छिनत् ॥ ३९॥

[1]उत्तरा युधि नश्वास्य हत्वा भीमो रणोत्कटः ।
गुरुभारसहे स्कन्धे नागस्यासिमपातयत् ॥ ४०॥

छिन्नस्कन्धस्स निनदन् पपात गजयूथपः ।
आरुग्णस्सिन्धुवेगेन सानुमानिव पर्वतः ॥ ४१॥

गजात् पतत आप्लुत्य रणे भरतसत्तम ।
खड्गपाणिरदीनात्मा तस्थौ भुवि सुदंशितः ॥ ४२॥

चचार च बहून् मार्गान् भीमः प्रहरतां वरः ।
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ॥ ४३॥

अश्ववृन्देषु नागेषु रथानीकेषु चाभिभूः ।
पदातीनां च सङ्घेषु विनिघ्नन् शोणितोक्षितः ॥ ४४॥

श्येनवद्व्यचरद्भीमो रणे तु स बलोत्कटः ।
छिन्दंस्तेषां शरीराणि शिरांसि च महाबलः ॥ ४५॥

खड्गेन शितधारेण संयुगे गजयोधिनाम् ।
पदातिरेकस्संक्रुद्धश् शत्रूणां भयवर्धनः ॥ ४६॥

मोहयामास शूरांस्तान् कालान्तकयमोपमः ॥ ४७

---

1. अ-क—उत्ततार पुनश्वासात्

[1]पदातिभिः पदातींश्च अश्वानश्वैर्गजान् गजैः ।
रथान् रथैश्च बहुधा जघान समरे बली ॥ ४८
मूढास्तमेव चरणे विनदन्तस्समाद्रवन् ॥ ४८॥
सोऽसिमुद्यम्य चरणे वेगेन विचरन् नदन् ।
निकृत्य रथिनां चाजौ रथेषाश्च युगानि च ॥ ४९॥
जघान रथिनश्चापि बलवानरिमर्दनः ।
भीमसेनश्चरन् मार्गान् बहून् दृढपराक्रमः ॥ ५०॥
भ्रान्तमाविद्धमुद्भ्रान्तम् आप्लुतं प्रसृतं प्लुतम् ।
संहृतं समुदीक्षं च दर्शयामास पाण्डवः ॥ ५१॥
केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना ।
विनेदुर्भिन्नवर्माणो निपेतुश्च गतासवः ॥ ५२॥
छिन्नदन्ताग्रहस्ताश्च भिन्नकुम्भास्तथाऽपरे ।
वियोधास्स्वान्यनीकानि मृद्नन्ति वरवारणाः ॥ ५३॥
निपेतुरुर्व्यां च तथा विनदन्तो महारवान् ॥ ५४
गजांश्च गजयन्तॄंश्च गजहस्तांश्च भारत ।
छिन्नांश्च तोमरावापान् महामात्रशिरांसि च ॥ ५५
परिस्तोमानि चित्राणि कक्ष्याश्च कनकोज्ज्वलाः ।
[2]ग्रैवेयाण्यथ शक्तीश्च पताकाश्च ध्वजांस्तथा ॥ ५६

1. अ-क-ख—अर्धद्वयं नास्ति 2. ख—द्वदमर्धं नास्ति

तूणीराण्यथ योक्त्राणि विचित्राणि धनूंषि च ।
अग्निकुण्डानि शुभ्राणि तोमरांश्चाङ्कुशैस्सह ॥ ५७

घण्टाश्च विविधा राजन् हेमगर्भान्त्सरूनपि ।
पततः पातितांश्चैव पश्यामस्सह सादिभिः ॥ ५८

छिन्नगात्रैश्छिन्नहस्तैर् निहतैर्वरवारणैः ।
आसीत् तस्मिन् रणे भूमिः पतितैः पर्वतैरिव ॥ ५९

विमृद्यैवं महानागान् ममर्दाश्वान् महाबलः ।
अश्वारोहवरांश्चैव पातयामास भारत ॥ ६०

तद्घोरमभवद्युद्धं तस्य तेषां च भारत ॥ ६०॥

खलीनान्यथ चित्राणि कशाश्च कनकोज्ज्वलाः ।
परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ॥ ६१॥

कवचान्यथ चित्राणि चित्राण्यास्तरणानि च ।
तत्रापविद्धान्येतानि पश्यामस्तत्र सङ्घशः ॥ ६२॥

चकर्त रथनीडांश्च रथचक्राणि चाभिभूः ।
तैः कीर्णां वसुधां चक्रे शबलां कुसुमैरिव ॥ ६३॥

आप्लुत्य रथिनः कांश्चित् परामृश्य महाबलः ।
पातयामास खड्गेन सध्वजानपि पाण्डवः ॥ ६४॥

मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः ।

[1]आकाङ्क्षमाणान् शरणं पालयामास पाण्डवः ॥ ६५॥

भीमस्य विक्रमं दृष्ट्वा गजाश्वरथयोधिनः ।
मार्गांश्च चरतश्चित्रान् व्यस्मयन्त रणे जनाः ॥ ६६॥

निजघान पताकाश्च ध्वजदण्डान् बहूंश्च सः ।
खड्गेनान्यांश्च चिच्छेद नादेनान्यांश्च भीषयत् ॥ ६७॥

ऊरुवेगेन चाप्यन्यान् पातयामास भूतले ।
अपरे चैनमालोक्य भयात् पञ्चत्वमागताः ॥ ६८॥

एवं स बहुलां सेनां कलिङ्गानां तरस्विनाम् ।
विनिघ्नन् व्यचरद्भीमो युगान्ताग्निरिवाहवे ॥ ६९॥

ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ ।
श्रुतायुषमभिप्रेक्ष्य भीमसेनस्समभ्ययात् ॥ ७०॥

तमायान्तमभिप्रेक्ष्य कलिङ्गो नवभिश्शरैः ।
भीमसेनममेयात्मा प्रत्यविध्यत् स्तनान्तरे ॥ ७१॥

कलिङ्गबाणाभिहतस् तोत्रार्दित इव द्विपः ।
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवोत्थितः ॥ ७२॥

[2]श्रुतायुस्तु ततो राजन् योजयित्वा महारथम् ।
भीमं सम्पादयामास रथेन रथिनां वरम् ॥ ७३॥

---

1. ख-ब-ङ-म—अर्धद्वयं नास्ति
2. ख-ग-घ-ङ-म—विशोकस्तु

तमारुह्य रथं तूर्णं कौन्तेयश्शत्रुसूदनः ।
कलिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७४॥

ततश्श्रुतायुर्बलवान् भीमाय निशिताञ् शरान् ।
प्रेषयामास सङ्क्रुद्धो दर्शयन् हस्तलाघवम् ॥ ७५॥

स कार्मुकच्युतैर्बाणैर् रुक्मपुङ्खैर्महाहवे ।
कलिङ्गेन तदा भीमो विद्धस्सप्तभिराशुगैः ॥ ७६॥

सञ्चुक्रोध तदा भीमो दण्डाहत इवोरगः ॥ ७७

क्रुद्धस्स चापमायम्य बलवद्बलिनां वरः ।
कलिङ्गमवधीत् पार्थो भीमस्सप्तभिरायसैः ॥ ७८

क्षुराभ्यां चक्ररक्षौ तु कलिङ्गस्य महाबलौ ।
सत्यदेवं च सत्यं च प्राहिणोद्यमसादनम् ॥ ७९

ततः पुनरमेयात्मा नाराचैश्च त्रिभिः पुनः ।
बिभेद समरे वीरः प्रेक्ष्य भीमस्समाप्लुतम् ॥ ८०

[1]पत्त्यश्वरथमातङ्गं रणे भीमः प्रतापवान् ॥ ८०॥

हतारोहाश्च मातङ्गाः पाण्डवेन कृता रणे ।
विप्रजग्मुरनीकेषु मेघा वातहृता इव ॥ ८१॥

मृद्नन्तस्स्वान्यनीकानि विनदन्तश्शरातुराः ।

1. ख-च-ङ-म—इदमर्धं नास्ति

[1]योधा निपेतुर्मातङ्गैर् निहतास्तुरगैर्भुवि ॥ ८२॥
ततो भीमो महाघोषं शङ्खं दध्मौ महाबलः ।
सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् ॥ ८३॥
मोहस्तेन कलिङ्गानाम् आविवेश परन्तप ॥ ८४
प्रचकम्प च तत् सैन्यं वाहनानि च भारत ।
मार्गांश्च चरतश्चित्रान् धावतश्च यशस्विनः ॥ ८५
मुहुश्चोत्पततो दिक्षु भीमस्य च महात्मनः ।
दृष्ट्वा कर्म सुदुर्धर्षं व्यस्मयन्त रणे जनाः ॥ ८६
हन्यमानं भयत्रस्तं सैन्यं तत् समकम्पत ।
क्षोभ्यमाणमसम्बाधं ग्राहेणेव महत् सरः ॥ ८७
त्रासितेषु च सैन्येषु भीमेनाद्भुतकर्मणा ।
पुनरावर्तमानेषु विद्रवत्सु समन्ततः ॥ ८८
सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः ।
अब्रवीत् स्वान्यनीकानि युध्यध्वमिति मारिष ॥ ८९
सेनापतिवचश्श्रुत्वा शिखण्डिप्रमुखा रथाः ।
भीममेवाभ्यवर्तन्त रथानीकैः प्रहारिभिः ॥ ९०
धर्मराजश्च तान् सर्वान् पालयन् पृष्ठतोऽन्वगात् ॥ ९०॥
महता मेघघोषेण गजानीकेन दंशितः ।

1. ख-घ-ङ-म—नास्तीदमर्धम्

सर्वसैन्यानि संचोद्य धृष्टद्युम्नो महाबलः ॥ ९१॥
भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषैस्सह ॥ ९२

न हि पाञ्चालपुत्रस्य लोके कश्चन विद्यते ।
भीमशैनेययोरन्यः नरः प्रियतमो भुवि ॥ ९३

स तं पश्यन् कलिङ्गेषु चरन्तमरिसूदनम् ।
भीमसेनं महाबाहुं पार्षतः परवीरहा ॥ ९४

ननर्द पुरुषव्याघ्रो जहृषे च परन्तपः ।
शङ्खं च समरे दध्मौ सिंहनादं ननाद च ॥ ९५

पारावतसवर्णैश्च संयुक्ते तुरगोत्तमैः ।
[1]शोभमानो महोत्सेधे रथे हेमविभूषिते ॥ ९६
कोविदारध्वजं दृष्ट्वा भीमसेनस्समाश्वसत् ॥ ९६॥

धृष्टद्युम्नस्तु तं दृष्ट्वा कलिङ्गैस्समभिद्रुतम् ।
भीमसेनममेयात्मा त्राणायाजौ समभ्ययात् ॥ ९७॥

तौ दूरात् सात्यकिं दृष्ट्वा धृष्टद्युम्नवृकोदरौ ।
कलिङ्गान् समरे वीरौ योधयन्तौ यशस्विनौ ॥ ९८॥

स तत्र गत्वा शैनेयो जवेन जयतां वरः ।
भीमपार्षतयोः पार्ष्णिं जग्राह पुरुषोत्तमः ॥ ९९॥

स कृत्वा कदनं तत्र प्रगृहीतशरासनः ।

---

1. ब-ङ-म—नास्तीदमर्धम्

आस्थितो रौद्रमात्मानं जघान समरे परान् ॥ १००॥
कलिङ्गप्रभवां चैव मांसशोणितकर्दमाम् ।
रुधिरस्यन्दिनीं तत्र भीमः प्रावर्तयद्बली ॥ १०१॥
अन्तरेण कलिङ्गानां पाण्डूनां चैव वाहिनीम् ॥ १०२
तस्याः पारमपाराया भीमसे[1]नस्य गच्छतः ।
आक्रोशन्त सुता दृष्ट्वा तावका भरतर्षभ ॥ १०३
कालोऽयं भीमरूपेण युध्यतीति भयार्दिताः ॥ १०३॥
ततश्शान्तनवश्श्रुत्वा निनदन्तं महाहवे ।
अभ्ययात् त्वरितो भीमं व्यूढानीकः परन्तपः ॥ १०४॥
तं सात्यकिर्भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन्त वेगेन रथैर्हेमपरिष्कृतैः ॥ १०५॥
परिवार्य च ते सर्वे गाङ्गेयं द्रुतमाहवे ।
त्रिभिस्त्रिभिश्शरैर्घोरैर् भीष्मं विव्यधुराहवे ॥ १०६॥
प्रत्यविध्यत् ततस्सर्वान् पिता देवव्रतस्तव ।
यतमानान् महेष्वासांस् त्रिभिस्त्रिभिरजिह्मगैः ॥ १०७॥
ततश्शरसहस्रेण सन्निवार्य महारथान् ।
हयान् काञ्चनसन्नाहान् भीमस्य न्यहनच्छरैः ॥ १०८॥
हताश्वे तु रथे तिष्ठन् भीमसेनः प्रतापवान् ।

1. ख—नोऽभ्यगच्छत । व्याक्रोशन्त स्म तं दृष्ट्वा

शक्तिं चिक्षेप समरे गाङ्गेयस्य रथं प्रति ॥ १०९॥

अप्राप्तामेव तां शक्तिं राजन् देवव्रतश्शरैः ।
त्रिधा चिच्छेद समरे सा व्यशीर्यत भूतले ॥ ११०॥

ततश्शैक्यायसीं गुर्वीं प्रगृह्य महतीं गदाम् ।
भीमसेनो रथात् तूर्णं पुप्लुवे भरतर्षभ ॥ १११॥

[1]भीष्ममेवाभ्ययात् तूर्णं जिघांसुः पाण्डवर्षभः ।
सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया ॥ ११२॥

सारथिं कुरुवृद्धस्य पातयामास भारत ॥ ११३

भीष्मस्तु निहते तस्मिन् सारथौ रथिनां वरः ।
[2]वातायमानैस्तैरश्वैर् अपनीतो रणाजिरात् ॥ ११४

भीमसेनस्ततो राजन्नपयाते महाव्रते ।
प्रजज्वाल महावह्निर् दहन् कक्षमिवैधितः ॥ ११५

स हत्वा सर्वकालिङ्गान् सेनामध्ये व्यतिष्ठत ।
पश्यतां सर्वसैन्यानाम् अपोवाह यशस्विनम् ॥ ११६

सम्पूज्यमानः पाञ्चाल्यैर् मत्स्यैश्च भरतर्षभ ।
धृष्टद्युम्नं परिष्वज्य समेयादथ सात्यकिम् ॥ ११७

अथाब्रवीद्भीमसेनं सात्यकिः परवीरहा ।

1. अ-क—नास्तीदमर्धम्   2. अ-ख—षडर्धानि न सन्ति

[1]प्रहर्षयन् यदुश्रेष्ठो धृष्टद्युम्नस्य पश्यतः ॥ ११८

सात्यकिः—

दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान् ।
सत्यदेवश्च कालिङ्गः कलिङ्गाश्च मृधे हताः ॥ ११९

स्वबाहुबलवीर्येण गजाश्वरथसङ्कुलः ।
महाव्यूहः कलिङ्गानाम् एकेन मृदितस्त्वया ॥ १२०

सञ्जयः—

एवमुक्त्वा शिनेर्नप्ता दीर्घबाहुररिन्दम ।
रथाद्रथमभिप्लुत्य पर्यष्वजत पाण्डवम् ॥ १२१

ततस्स्वरथमारुह्य पुनरेव महारथः ।
तावकानवधीत् क्रुद्धो भीमस्य बलमादधत् ॥ १२२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये १२२ श्लोकाः]

---

1. अ-क—नास्तीदमर्धम्

## ॥ पञ्चाशोऽध्यायः ॥

अर्जुनयुद्धवर्णनम् ॥

सञ्जयः—

ततोऽपराह्णभूयिष्ठे तस्मिन्नहनि दारुणे ।
रथाश्वनरनागानां सादिनां चाभवत् क्षयः ॥ १

द्रोणपुत्रेण शल्येन कृपेण च महात्मना ।
समसज्जत पाञ्चाल्यस् त्रिभिरेतैर्महारथैः ॥ २

स लोकविदितानश्वान् निजघान महाबलः ।
द्रौणेः पाञ्चालदायादश् शितैर्दशभिराशुगैः ॥ ३

ततश्शल्यरथं तूर्णम् आस्थाय हतवाहनः ।
द्रौणिः पाञ्चालदायादम् अभ्यवर्षद्रथेषुभिः ॥ ४

धृष्टद्युम्नं तु संसक्तं द्रौणिना वीक्ष्य भारत ।
सौभद्रोऽभ्यपतत् तूर्णं विकिरन् निशिताञ् शरान् ॥ ५

स शल्यं पञ्चविंशत्या कृपं च नवभिश्शरैः ।
विव्याध समरे राजन् अश्वत्थामानमेव च ॥ ६

आर्जुनिं तु ततस्तूर्णं द्रौणिर्विव्याध पत्रिणा ।
शल्यो द्वादशभिस्तीक्ष्णैः कृपश्च निशितैस्त्रिभिः ॥ ७

लक्ष्मणस्तव पौत्रस्तु सौभद्रं समवस्थितम् ।
अभ्यवर्षत संहृष्टस् ततो युद्धमवर्तत ॥ ८
दौर्योधनिस्तु सङ्क्रुद्धस् सौभद्रं निशितैश्शरैः ।
विव्याध समरे राजन् विशिखैर्मर्मभेदिभिः ॥ ९
अभिमन्युस्ततः क्रुद्धो लक्ष्मणं भरतर्षभ ।
शरैः पञ्चाशता राजन् क्षिप्रहस्तो व्यविध्यत ॥ १०
लक्ष्मणोऽपि धनुस्तस्य ततश्चिच्छेद पत्रिणा ।
मुष्टिदेशे महाराज तत उच्चुक्रुशुर्जनाः ॥ ११
तद्विहाय धनुश्छिन्नं सौभद्रः परवीरहा ।
अन्यदा दत्तबलवान् कार्मुकं बलवत्तरम् ॥ १२
तौ तत्र समरे यत्तौ कृतप्रतिकृतैषिणौ ।
अन्योन्यं विशिखैस्तीक्ष्णैर् जघ्नतुः पुरुषर्षभौ ॥ १३
ततो दुर्योधनो राजा पुत्रं दृष्ट्वा महाबलम् ।
पीडितं तव पौत्रेण ततः प्रायाज्जनेश्वरः ॥ १४
सन्निवृत्ते तव सुते सर्वे एव जनाधिपाः ।
आर्जुनिं रथवंशेन समन्तात् पर्यवारयन् ॥ १५
स तैः परिवृतश्शूरैश् शूरो युधि सुदुर्जयैः ।
न तदा विव्यथे राजन् कृष्णतुल्यपराक्रमः ॥ १६
सौभद्रमथ संसक्तं दृष्ट्वा पुत्रं धनञ्जयः ।

अभिदुद्राव सङ्क्रुद्धस् त्रातुकामस्स्वमात्मजम् ॥ १७
ततस्सरथनागाश्वा भीष्मद्रोणपुरोगमाः ।
अभ्यवर्तन्त राजानस् सहसा सव्यसाचिनम् ॥ १८
उद्धूतं सहसा भौमं नागाश्वरथसादिभिः ।
दिवाकररथं प्राप्तं रजस्तीव्रमदृश्यत ॥ १९
तानि नागसहस्राणि भूमिपालशतानि च ।
तस्य बाणपथं प्राप्य नाभ्यवर्तन्त सर्वशः ॥ २०
प्रणेदुस्सर्वसैन्यानि बभूवुस्तिमिता दिशः ॥ २०॥
[1]रजसा चावृतास्सर्वा दिशो राजन् कथञ्चन ॥ २१
कुरूणां जनयंस्तीव्रं प्रत्यदृश्यत दारुणम् ॥ २१॥
न चान्तरिक्षं न दिशो न भूमिर्न च भास्करः ।
प्राज्ञायत नरश्रेष्ठ शरसङ्घैः किरीटिनः ॥ २२॥
[2]संपातितध्वजाः केचिद्धताश्वा रथिनोऽपरे ।
विप्रद्रुतरथाः केचिद् दृश्यन्ते रथपुङ्गवाः ॥ २३॥
विरथा रथिनश्चान्ये धावमानास्ततस्ततः ।
रणे तस्मिन्नदृश्यन्त सायुधास्साङ्गदैर्भुजैः ॥ २४॥
हयारोहा हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः ।

1. ख-च-ङ-म—इदमर्धं नास्ति
2. अ-क-ग—संपातिता गजाः केचित् हतास्सारथिनोऽपरे। [पाठान्तरम्]

अर्जुनस्य भयाद्राजन् व्यद्रवन्त समन्ततः ॥ २५॥
रथेभ्यश्च हयेभ्यश्च गजेभ्यश्च नराधिपाः ।
पातिताः पात्यमानाश्च दृश्यन्तेऽर्जुनपीडिताः ॥ २६॥
सगदानुद्यतान् बाहून् सखड्गांश्च विशां पते ।
सप्रासांश्च सतूणीरान् सशरान् सशरासनान् ॥ २७॥
साङ्कुशान् सपताकांश्च तत्र तत्रार्जुनो नृणाम् ।
न्यकृन्तत रणे क्रुद्धो बिभ्रद्रौद्रं वपुस्तदा ॥ २८॥
परिघाणां विकीर्णानां मुद्गराणां च पार्थिव ।
प्रासानां भिण्डिपालानां निस्त्रिंशानां च भारत ॥ २९॥
[1]परश्वथानां तीक्ष्णानां तोमराणां च भारत ।
वर्मणां चापविद्धानां कवचानां च संयुगे ॥ ३०॥
ध्वजानां चर्मणां चैव व्यजनानां च सर्वशः ।
छत्राणां हेमदण्डानां चामराणां च भारत ॥ ३१॥
प्रतोदानां च योक्त्राणां कशानां चैव मारिष ।
राशयः प्रत्यदृश्यन्त विकीर्णानां विशां पते ॥ ३२॥
नासीत् तत्र पुमान् कश्चित् तव सैन्यस्य भारत ॥ ३३
न तत्रासीत् पुमान् कश्चित् तव सैन्येषु भारत ।
योऽर्जुनं समरे वीरं प्रत्युदीयान्महारथम् ॥ ३४

1. अ—अष्टार्धानि न सन्ति

[1]यो यो हि समरे पार्थं प्रत्युद्याति विशां पते ।
स सङ्ख्ये विशिखैस्तीक्ष्णैः परलोकाय नीयते ॥ ३५

तेषु विभ्राम्यमाणेषु तव योधेषु सर्वशः ।
अर्जुनो वासुदेवश्च शङ्खौ दध्मतुरुत्तमौ ॥ ३६

तत् प्रभग्नं बलं दृष्ट्वा पिता देवव्रतस्तव ।
अब्रवीत् समरे शूरो भारद्वाजं यशस्विनम् ॥ ३७

भीष्मः—

एष पाण्डुसुतो वीरः कृष्णेन सहितो बली ।
तथा करोति सैन्यानि यथा कुर्याद्धनञ्जयः ॥ ३८

न ह्येष समरे शक्यो जेतुमन्यैः कथञ्चन ।
[2]अस्यैतद् दृश्यते रूपं क्रुद्धस्येव पिनाकिनः ॥ ३९

न निवर्तयितुं चापि शक्येयं महती चमूः ।
अन्योन्यप्रेक्षया पश्य द्रवतीयं वरूथिनी ॥ ४०

एष चास्तं गिरिश्रेष्ठं भानुमान् प्रत्यपद्यत ।
चक्षूंषि सर्वलोकस्य संहरन्निव भारत ॥ ४१

[3]सेनापहारं सम्प्राप्तं मन्येऽहं पुरुषर्षभ ॥ ४१॥

श्रान्ता भीताश्च नो योधा न योत्स्यन्ति कथञ्चन ॥ ४२

---

1. घ—नास्तीदमर्धम्
2. ख—तथाऽस्य दृश्यते घ—तद्दृश्यते तूग्ररूपं
 म—ङ—तद्दृश्यते ह्यद्य रूपं
3. ख—इदमर्धं नास्ति

सञ्जयः—

एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यसत्तमम् ।
अपहारमथो चक्रे तावकानां महारथः ॥ ४३

ततस्सरथनागाश्वा जयं प्राप्य ससोमकाः ।
पञ्चालाः पाण्डवाश्चैव प्रणेदुश्च पुनः पुनः ॥ ४४

प्रययुश्शिबिराण्येव धनञ्जयपुरस्कृताः ।
वादित्रघोषैस्संहृष्टाः प्रनृत्यन्तो महारथाः ॥ ४५

ततोऽपहारस्सैन्यानां तव तेषां च भारत ।
अस्तं गच्छति सूर्ये च सन्ध्याकालेऽभ्यवर्तत ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ६४ ॥ भीष्मवधपर्वणि दशमोऽध्यायः ॥ १० ॥
[द्वितीयापहारः समाप्तः]
[अस्मिन्नध्याये ४६ श्लोकाः]

## ॥ एकपञ्चाशोऽध्यायः ॥

उभयपक्षयोर्व्यूहरचना ॥

सञ्जयः—

प्रभातायां तु शर्वर्यां भीष्मश्शान्तनवस्तदा ।
अनीकान्यनुसंयाने व्यादिदेश परन्तपः ॥
गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा ।

पुत्राणां ते जयाकाङ्क्षी वृद्धः कुरुपितामहः ॥ २

गरुडस्य तु यत् तुण्डं पिता देवव्रतस्तव ।
चक्षुषी च भरद्वाजः कृतवर्मा च भारत ॥ ३

अश्वत्थामा कृपश्चैव शिर आस्तां यशस्विनौ ।
त्रिगर्तैर्मद्रकैकेयैर् वाटधानैश्च संयुगे ॥ ४

भूरिश्रवाश्शलश्शल्यो भगदत्तश्च मारिष ।
मद्रकास्सिन्धुसौवीरास् तथा पञ्चनदाश्च ये ॥ ५

जयद्रथेन सहिता ग्रीवा ह्यासन् विशां पते ॥ ५॥

पृष्ठे दुर्योधनो राजा सोदरैस्सह सानुगैः ॥ ६

विन्दानुविन्दावावन्त्यौ काम्भोजश्च नराधिपः ।
पुच्छमासन् महाराज शूरसेनाश्च सर्वशः ॥ ७

मागधाश्च कलिङ्गाश्च कशेरुकगणैस्सह ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ॥ ८

कर्णाटाश्च विकुञ्जाश्च मुद्राः कुण्डीविषास्तथा ।
बृहद्बलेन सहिता वामपार्श्वमुपाश्रिताः ॥ ९

व्यूहं दृष्ट्वा तु सैन्यस्य सव्यसाची परंतपः ।
धृष्टद्युम्नेन सहितः प्रत्यव्यूहत पाण्डवः ॥ १०

व्यूहेन चार्धचन्द्रेण व्यूहं तमतिदारुणम् ॥ १०॥

दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत ॥ ११
नानाशस्त्रौघसम्पन्नैर् नानादेश्यैर्नृपैर्वृतः ।
तमन्वेति विराटश्च द्रुपदश्च महायशाः ॥ १२
तदनन्तरमेवासीन्नीलो नीलायुधो विभुः ।
नीलादनन्तरश्चापि धृष्टकेतुर्महाबलः ॥ १३
चेदिकाशिकरूषैश्च पौरवैश्चैव रक्षितः ।
धृष्टद्युम्नश्शिखण्डी च पाञ्चालाश्च प्रभद्रकाः ॥ १४
मध्ये सैन्यस्य महतस् स्थिता युद्धाय भारत ॥ १४॥
तत्रानु धर्मराजश्च गजानीकेन दंशितः ॥ १५
ततस्तु सात्यकी राजन् द्रौपद्याः पञ्च चात्मजाः ।
अभिमन्युस्ततश्शूर इरावांश्च ततः परम् ॥ १६
भैमसेनिस्ततो राजन् केकयाश्च महारथाः ।
एते सर्वे महाराज वामं पार्श्वमपालयन् ॥ १७
सर्वस्य जगतो गोप्ता गोप्ता यस्य जनार्दनः ।
तत्रानु रथिनां श्रेष्ठो वामशृङ्गे व्यवस्थितः ॥ १८
एवमेतं महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः ।
वधार्थं तव पुत्राणां तत्पक्षे ये समाश्रिताः ॥ १९
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।

[1]तावकानां परेषां च निघ्नतामितरेतरम् ॥ २०
अश्वौघाश्च रथौघाश्च गजौघाश्च विशां पते ।
सम्पतन्तस्स्म दृश्यन्ते निघ्नमानाः परस्परम् ॥ २१
धावतां च रथौघानां युध्यतां च पृथक् पृथक् ।
बभूव तुमुलश्शब्दो विमिश्रो दुन्दुभिस्वनैः ॥ २२
[2-3]एवं तु नरवीराणां निघ्नतामितरेतरम् ।
सुसम्प्रहारे तुमुले रौद्रमासीत् तदा वपुः ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

## ॥ द्विपञ्चाशोऽध्यायः ॥

[ तृतीयदिवसयुद्धारम्भः ]

संकुलयुद्धवर्णनम् ॥ १ ॥

सञ्जयः—

एवं व्यूढेष्वनीकेषु तावकेष्वितरेषु च ।
धनञ्जयो रथानीकं पीडयंस्तव भारत ॥ १
शरैरतिरथो युद्धे पातयामास पार्थिवान् ॥ १॥

1. ख-ग—सप्तार्धानि न सन्ति 2. व—अर्धद्वयं नास्ति
3. म—नास्तीदमर्धम्

ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
धार्तराष्ट्रा रणे यत्ताः पाण्डवान् प्रत्ययोधयन् ॥ २॥
प्रार्थयाना यशो दीप्तं मृत्युं कृत्वा निवर्तनम् ॥ ३

एकाग्रमनसो भूत्वा पाण्डवानां वरूथिनीम् ।
बभञ्जुर्बहुशो राजंस् तैश्चाभज्यन्त संयुगे ॥ ४

[1]पतद्भिश्च रथैर्भिन्नैर् गजैः पत्तिभिरेव च ।
प्रभग्नैस्स्यन्दनैश्चासीद् युद्धमेतत् प्रवर्तितम् ॥ ५

[2]द्रवद्भिश्च रथैर्भग्नैर् परिवर्तद्भिरेव च ।
पाण्डवाः कौरवेयाश्च न प्राज्ञायत किञ्चन ॥ ६

उदतिष्ठद्रजो भौमं छादयानं दिवाकरम् ।
न दिशः प्रदिशो वापि जज्ञिरेऽत्र समागताः ॥ ७

अनुमानेन संज्ञाभिर् नामगोत्रैश्च संयुगे ।
अवर्तत तदा युद्धं तत्र तत्र विशां पते ॥ ८

व्यूहो नाभिद्यत तदा कौरवाणां कथञ्चन ।
[3]रक्षितस्सत्यसन्धेन भारद्वाजेन मारिष ॥ ९

तथैव पाण्डवेयानां रक्षितस्सव्यसाचिना ।
नाभिद्यत महाव्यूहो भीमेन च सुरक्षितः ॥ १०

1. ख-ब-ङ-म—इदमर्धद्वयं नास्ति 2. अ-क-ग—नास्तीदमर्धम्
3. ङ—अर्धद्वयं नास्ति

सेनाग्रादभिनिष्पत्य प्रायुध्यंस्तत्र मानवाः ।
उभयोस्सेनयो राजन् व्यतिषक्ताः परस्परम् ॥ ११

हयारोहा हयारोहान् पातयामासुराहवे ।
[1]यष्टिभिर्विमलाभिश्च प्रासैरपि च संयुगे ॥ १२

रथी रथिनमासाद्य बाणैः कनकभूषणैः ।
[2]पातयामास समरे शरैस्सन्नतपर्वभिः ॥ १३

गजारोहा गजारोहान् नाराचशरतोमरैः ।
संसक्तान् पातयामासुस् तव तेषां च सङ्घशः ॥ १४

पत्तिसङ्घा रणे पत्तीन् भिण्डिपालपरश्वथैः ।
निपातयन्ति संहृष्टाः परस्परजिगीषवः ॥ १५

[3]रथी च समरे राजन्नासाद्य गजयोधिनम् ।
सगजं पातयामास गजी च रथिनां रथात् ॥ १६

रथिनं च हयारोहः प्रासेन भरतर्षभ ।
पातयामास समरे रथी च हयसादिनम् ॥ १७

[4]पदाती रथिनं सङ्ख्ये रथी चापि पदातिनम् ।
न्यपातयच्छितैश्शस्त्रैस् सेनयोरुभयोरपि ॥ १८

गजारोहा हयारोहान् पातयामासुराहवे ।

---

1. अ-क—सप्तार्धानि न सन्ति   2. घ—पञ्चार्धानि न सन्ति
3. अ-क-ख-ग-घ—अर्धचतुष्टयं नास्ति
4. अ-क—पञ्चार्धानि न सन्ति

हयारोहा गजस्थांश्च तदद्भुतमिवाभवत् ॥ १९

निस्त्रिंशैर्निशितैस्तीक्ष्णैः पातयामासुराहवे ।
वारणस्थैश्च समरे हतास्तत्र पदातयः ॥ २०

पातिताः प्रत्यदृश्यन्त तैश्चापि गजयोधिनः ॥ २०॥

हस्तिसङ्घा हयारोहैस् सादिसङ्घाश्च दन्तिभिः ।
पात्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ २१॥

ध्वजैस्तत्रापविद्धैश्च तोमरैः कार्मुकैस्तथा ।
प्रासैस्तदा गदाभिश्च [1]चक्रैः कर्पणकैस्तथा ॥ २२॥

शक्तिभिः कवचैश्चित्रैः कणपैरङ्कुशैरपि ।
निस्त्रिंशैर्विमलैश्चापि स्वर्णपुङ्खैश्शरैस्तथा ॥ २३॥

परिस्तोमैः कुथाभिश्च कम्बलैश्च महाधनैः ।
विबभौ भूर्नरश्रेष्ठ स्रग्दामभिरिवाचिता ॥ २४॥

नराश्वकायैः पतितैर् दन्तिनां च महाहवे ।
[2]शरीरैस्स्यन्दनैर्भग्नैर् विकीर्णैश्च समन्ततः ॥ २५॥

अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ २६

प्रशशाम रजो भौमम् उक्षितं गजशोणितैः ।
दिशश्च विमलास्सर्वास् सम्बभूवुर्जनेश्वर ॥ २७

1. अ-क-ग—अयं पादोऽनन्तरश्च न स्तः
2. ख-ध-ङ-म—नास्तीदमर्धम्

उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
चिह्नभूतानि जगतो विनाशार्थानि भारत ॥ २८
तस्मिन् युद्धे महारौद्रे वर्तमाने सुदारुणे ।
प्रत्यदृश्यन्त रथिनो धावमानास्ततस्ततः ॥ २९
ततो द्रोणश्च भीष्मश्च सैन्धवश्च जयद्रथः ।
पुरुमित्रो विकर्णश्च शकुनिश्चापि सौबलः ॥ ३०
एते समरदुर्धर्षास् सिंहतुल्यपराक्रमाः ।
पाण्डवानामनीकानि बभञ्जुस्समरे स्थिताः ॥ ३१
तथैव भीमसेनोऽपि राक्षसश्च घटोत्कचः ।
सात्यकिश्चेकितानश्च द्रौपदेयाश्च भारत ॥ ३२
तावकांस्तव पुत्रांश्च सहितान् सर्वराजभिः ।
द्रावयामासुराजिस्थास् त्रिदशा दानवानिव ॥ ३३
तथा ते समरेऽन्योन्यं निघ्नन्तः क्षत्रियर्षभाः ।
रक्तोक्षिता घोररूपा विरेजुर्दानवा इव ॥ ३४
विजित्य च रिपून् वीरास् सेनयोरुभयोरपि ।
व्यदृश्यन्त महामात्रा ग्रहा इव नभस्थले ॥ ३५
ततो रथसहस्रेण पुत्रो दुर्योधनस्तव ।
अभ्ययात् पाण्डवान् युद्धे राक्षसं च घटोत्कचम् ॥ ३६
तथैवापततश्शूरान् महत्या सेनया वृतान् ।

भीष्मद्रोणौ महात्मानौ वारयामासतुश्शरैः ॥ ३७
किरीटी तु ततः क्रुद्धस् समन्तात् पार्थिवोत्तमान् ।
आर्जुनिस्सात्यकिश्चैव सौबलं ययतुर्बलम् ॥ ३८
ततः प्रववृते घोरस् सङ्ग्रामो रोमहर्षणः ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ३९ श्लोकाः]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

अर्जुनादियुद्धवर्णनम् ॥

---

सञ्जयः—

ततस्ते पार्थिवाः क्रुद्धाः फल्गुनं वीक्ष्य संयुगे ।
रथैरनेकसाहस्रैस् समन्तात् पर्यवारयन् ॥ १
अथैनं रथवंशेन कोष्ठकीकृत्य भारत ।
शरैरनेकसाहस्रैस् समन्तात् पर्यवारयन् ॥ २
[1]शक्तीश्च विमलास्तीक्ष्णा गदाश्च परिघैस्सह ।
प्रासान् परश्वथांश्चैव मुद्गरान् मुसलानपि ॥ ३

---

1. व—अर्धत्रयं नास्ति

चिक्षिपुस्समरे वीरा धनञ्जयरथं प्रति ॥ ३॥
शस्त्राणामथ तां वृष्टिं समन्तात् पतितां रथे ।
रुरोध समरे पार्थश् शरैः कनकभूषणैः॥ ४॥
तत्र तल्लाघवं दृष्ट्वा बीभत्सोरतिमानुषम् ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ ५॥
साधु साध्विति भाषन्तो विस्मयं परमं ययुः ॥ ६
[1]सात्यकिश्चाभिमन्युश्च महत्या सेनया वृतौ ।
गान्धारान् समरे शूरान् वारयेतांससौबलान् ॥ ७
तत्र सौबलकाश्शूराः वार्ष्णेयस्य रथं प्रति ।
तिलशश्चिच्छिदुः क्रोधान्नानाप्रहरणैस्तथा ॥ ८
सात्यकिश्च रथं त्यक्त्वा वर्तमाने महाहवे ।
अभिमन्युरथं तूर्णम् आरुरोह परंतपः ॥ ९
तावेकरथमारूढौ सौबलेयस्य वाहिनीम् ।
जघ्नतुर्निशितैर्बाणैस् तीक्ष्णैस्सन्नतपर्वभिः ॥ १०
द्रोणभीष्मौ रणे यत्तौ धर्मराजस्य वाहिनीम् ।
व्यदारयेतामिषुभिः कङ्कपत्रैरजिह्मगैः ॥ ११
ततो धर्मसुतो राजा माद्रीपुत्रौ च पाण्डवौ ।
मिषतां सर्वसैन्यानां द्रोणानीकमुपाद्रवन् ॥ १२

---

1. घ—अर्धद्वयं नास्ति

तत्रासीत् तुमुलं युद्धं भैरवं रोमहर्षणम् ।
यथा दैवासुरं युद्धं पूर्वमासीत् सुदारुणम् ॥ १३

पिता पुत्रश्च समरे कुर्वाणौ कर्म दुष्करम् ।
राजानं प्रत्युदीयातां भीमसेनघटोत्कचौ ॥ १४

तत्राद्भुतमपश्याम हैडिम्बस्य पराक्रमम् ॥ १४॥
अतीत्य पितरं युद्धे यदयुध्यत भारत ।
[1]दुर्योधनस्य महतीं द्रावयामास वाहिनीम् ॥ १५॥
दुर्योधनस्ततोऽभ्येत्य तावुभावप्यवारयत् ॥ १६

भीमसेनस्तु सङ्क्रुद्धो दुर्योधनममर्षणम् ।
हृद्यविध्यत् पृषत्केन प्रहसन्निव पाण्डवः ॥ १७

ततो दुर्योधनो राजा प्रहारपरिपीडितः ।
निषसाद रथोपस्थे कश्मलं च जगाम ह ॥ १८

तं विसंज्ञमथो ज्ञात्वा त्वरमाणोऽस्य सारथिः ।
अपोवाह रणाद्राजंस् तव सैन्यमभज्यत ॥ १९

विद्रुतां तु तदा सेनां द्रवमाणां समन्ततः ।
पार्षतश्चापि तत् सैन्यं तव पुत्रस्य मारिष ॥ २०

[2]द्रोणस्य च ततस्संख्ये गाङ्गेयस्य च पश्यतः ।

1. ख-घ-ङ-म—इदमर्धं नास्ति 2. ङ—अर्धत्रयं नास्ति

जघान विशिखैस्तीक्ष्णैस् तवानीकं विशां पते ॥ २१

द्रवमाणं तु तत् सैन्यं तव पुत्रस्य मारिष ।
नाशक्नुतां वारयितुं भीष्मद्रोणौ महारथौ ॥ २२

निवार्यमाणं भीष्मेण द्रोणेन च महात्मना ।
अभिदुद्राव वेगेन भीमेनार्दितमाहवे ॥ २३

तथा रथसहस्राणि विद्रवन्ति रणाजिरे ॥ २३॥

एकस्थौ च रणे शूरौ शैनेयकुरुपुङ्गवौ ।
शरौघैस्समरे सेनां नाशयेतां समन्ततः ॥ २४॥

शुशुभाते तदा तौ तु शैनेयकुरुपुङ्गवौ ।
अमावास्यां गतौ यद्वत् सोमसूर्यौ नभस्स्थले ॥ २५॥

अर्जुनस्तु ततः क्रुद्धस् तव सैन्यं विशां पते ।
[1]ववर्ष शरवर्षेण धाराभिरिव तोयदः ॥ २६॥

मथ्यमानं ततस्तत् तु शरैः पार्थस्य संयुगे ।
दुद्राव कौरवं सैन्यं विषादभयपीडितम् ॥ २७॥

[2]द्रवमाणं तु तत् सैन्यं तदा दृष्ट्वा महारथौ ।
[3]भीष्मद्रोणौ महावीर्यौ त्वरमाणौ महारणे ॥ २८॥

---

1. ग—द्रोणस्य यततस्संख्ये गाङ्गेयस्य च धीमतः ।
जघान विशिखैस्तीक्ष्णैः परानीकं विशां पते ॥ [अधिकः पाठः]
2. ख-ग-घ-ङ-म—द्रवतस्तान् समालक्ष्य भीष्मद्रोणौ महारथौ ।
3. ख—इदमर्धं नास्ति [पाठान्तरम्]

वारयेतां सुसंरब्धौ दुर्योधनहितैषिणौ ॥ २९
ततो दुर्योधनो राजा समाश्वस्य विशां पते ।
न्यवर्तयत तत् सैन्यं द्रवमाणं समन्ततः ॥ ३०
यत्र यत्र हि पुत्रं ते ये ये पश्यन्ति भारत ।
तत्र तत्र न्यवर्तन्त क्षत्रियाणां महारथाः ॥ ३१
तान् निवृत्तान् समीक्ष्याथ ततोऽन्ये हीतरे जनाः ।
अन्योन्यस्पर्धया राजँल्लज्जयाऽन्ये व्यवस्थिताः ॥ ३२
पुनरावर्ततां तेषां वेग आसीद्विशां पते ।
पूर्यतस्सागरस्येव चन्द्रस्योदयने यथा ॥ ३३
सन्निवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः ।
अब्रवीत् त्वरितो गत्वा भीष्मं शान्तनवं वचः ॥ ३४

दुर्योधनः—

पितामह निबोधेदं यत् त्वां वक्ष्यामि भारत ।
नानुरूपमिदं मन्ये त्वयि जीवति कौरव ॥ ३५
द्रोणे च रथिनां श्रेष्ठे सपुत्रे ससुहृज्जने ।
कृपे चैव महेष्वासे द्रवतीयं वरूथिनी ॥ ३६
न पाण्डवान् प्रतिबलांस् तव मन्ये महाबल ।
तथा द्रोणस्य सङ्ग्रामे द्रौणेश्चैव कृपस्य च ॥ ३७
अनुग्राह्याः पाण्डुसुतास् तव नूनं पितामह ।
यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ॥ ३८

सोऽहं वाच्यस्त्वया वीर पूर्वमेवेह संयुगात् ।
न योत्स्येऽहं रणे वीर पाण्डवान् प्रति भारत ॥ ३९

श्रुत्वा ततोऽहं वाक्यं त आचार्यस्य च भारत ।
कर्णेन सहितः कृत्यं चिन्तयिष्ये यथातथम् ॥ ४०

यदि नाहं परित्याज्यो युवाभ्यामत्र संयुगे ।
विक्रमेणानुरूपेण युध्येतां पुरुषोत्तमौ ॥ ४१

सञ्जयः—

एतच्छ्रुत्वा वचो भीष्मः प्रहसन् वै पुनः पुनः ।
अब्रवीत् तव पुत्रं तु सामपूर्वमिदं वचः ॥ ४२

भीष्मः—

बहुशोऽसि मया राजंस् तथ्यमुक्तं हितं वचः ।
अजेयाः पाण्डवा युद्धे देवैरपि सवासवैः ॥ ४३

यत् तु शक्यं मया कर्तुं वृद्धेनाद्य गतायुषा ।
करिष्यामि यथाशक्ति पश्येदानीं सुबालवत् ॥ ४४

अद्य पाण्डुसुतान् सर्वान् ससैन्यान् सह बन्धुभिः ।
समरे वारयिष्यामि सर्वसैन्यस्य पश्यतः ॥ ४५

सञ्जयः—

एवमुक्तास्तु भीष्मेण पुत्रास्तव जनेश्वर ।
दध्मुश्शङ्खान् मुदा युक्ता हर्षसम्पूर्णमानसाः ॥ ४६

[1]ततश्शङ्खांश्च भेरीश्च समन्तात् पर्यवादयन् ॥ ४६॥

पाण्डवाश्च ततो राजञ् श्रुत्वा तं निनदं महत् ।
दध्मुश्शङ्खांश्च भेरीश्च मुरजांश्च व्यनादयन् ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये ४७॥ श्लोकाः]

## ॥ चतुःपञ्चाशोऽध्यायः ॥

स्वप्रतिज्ञां विहाय गृहीतचक्रेण कृष्णेन पादचारेण भीष्मं हन्तुमभियानम् ॥ १ ॥ अर्जुनेन कृष्णस्य प्रतिनिवर्तनम् ॥ २ ॥

धृतराष्ट्रः—

प्रतिज्ञाते तु भीष्मेण तस्मिन् युद्धे सुदारुणे ।
पाण्डवान् वारयिष्येति कथं युयुधिरे नृपाः ॥ १

मम पुत्रस्य वाक्यैस्तु क्रोधितश्च महाव्रतः ।
भीष्मः किमकरोत् तत्र पाण्डवेयेषु सञ्जय ॥ २

[2]ये चान्ये पृथिवीपालाः किमकुर्वन्त मामकैः ।
पितामहे च पञ्चालाश् शूरा युद्धाभिनन्दिनः ॥ ३

1. ख-घ-ङ—नास्तीदमर्धम् 2. ख-घ-ङ-म—इदमर्धं नास्ति

सञ्जयः—

गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे ।
जयं प्राप्तेषु हृष्टेषु पाण्डवेषु महात्मसु ॥ ४

सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
अभ्ययाज्जवनैरश्वैः पार्थमेव धनञ्जयम् ॥ ५
महत्या सेनया गुप्तस् तव पुत्रैश्च भारत ॥ ५॥

प्रावर्तत ततो युद्धं तुमुलं रोमहर्षणम् ।
अस्माकं पाण्डवैस्सार्धं सेनयोर्भरतर्षभ ॥ ६॥

धनुषां कूजतां तत्र तलानां चाभिहन्यताम् ।
महान् समभवच्छब्दो गिरीणामिव दीर्यताम् ॥ ७॥

तिष्ठ स्थितोऽस्मि विद्ध्येनं निवर्तस्व स्थिरो भव ।
स्थितोऽस्मि प्रहरस्वेति वाचोऽश्रूयन्त सर्वशः ॥ ८॥

काञ्चनेषु तनुत्रेषु किरीटेषु ध्वजेषु च ।
शिलानामिव शैलेषु पततां च महाध्वनिः ॥ ९॥

पतितान्युत्तमाङ्गानि बाहवश्च विभूषिताः ।
व्यवेष्टन्त महीं प्राप्य शतशोऽथ सहस्रशः ॥ १०॥

हतोत्तमाङ्गाः केचित् तु तथैवोद्यतकार्मुकाः ।
प्रगृहीतायुधाश्चैव तस्थुः पुरुषसत्तमाः ॥ ११॥

प्रावर्तत महावेगा नदी रुधिरवाहिनी ।

मातङ्गाङ्गशिला रौद्रा मांसशोणितकर्दमा ॥ १२॥

नराश्वद्विरदेन्द्राणां शरीरप्रभवा तथा ।
परलोकार्णवमुखी गृध्रगोमायुमोदिनी ॥ १३॥

नैवं दृष्टं श्रुतं चापि युद्धमेतादृशं पुरा ।
यथा तव सुतानां च पाण्डवानां च भारत ॥ १४॥

नासीद्रथपथस्तत्र योधैर्युधि निपातितैः ।
गजैश्च पतितैर्नीलैर् गिरिशृङ्गैरिवावृतः ॥ १५॥

विकीर्णैः कवचैश्चित्रैर् ध्वजैश्छत्रैश्च मारिष ।
शुशुभे तद्रणस्थानं शरदीव नभस्स्थलम् ॥ १६॥

विनिर्भिन्ना नराः केचिद् दन्तपीडाप्रकर्षणाः ।
अर्दितास्समरे शत्रून् अभ्यधावन्त दंशिताः ॥ १७॥

तात भ्रातस्सखे बन्धो वयस्य मम मातुल ।
मा मां परित्यजेत्यन्ये चुक्रुशुः पतिता रणे ॥ १८॥

आद्यावभ्येहि मा गच्छ किं भीतोऽसि क यास्यसि ।
स्थितोऽहं समरे मा भैर् इति चान्ये विचुक्रुशुः ॥ १९॥

ततो भीष्मश्शान्तनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान् दीप्ताग्रान् अहीनाशीविषानिव ॥ २०॥

शरैरेकायनीकुर्वन् दिशस्सर्वा यतव्रतः ।

जघान पाण्डवरथान् [1]आविश्याविश्य भारत ॥ २१॥
स नृत्यन् रथमार्गेषु दर्शयन् हस्तलाघवम् ।
अलातचक्रवत् संख्ये तत्र तत्र स्म दृश्यते ॥ २२॥
तमेकं समरे वीरं पाण्डवास्सह सृञ्जयैः ।
अनेकशतसाहस्रैस् समपश्यन्त लाघवात् ॥ २३॥
मायाकृतात्मानमिव भीष्मं तं तत्र मेनिरे ॥ २४
पूर्वस्यां दिशि तं दृष्ट्वा प्रतीच्यां ददृशुर्जनाः ।
उदीच्यां दक्षिणस्यां च लघुत्वात् प्रत्यदृश्यत । २५
एवं स समरे वीरो गाङ्गेयः प्रत्यदृश्यत ॥ २५॥
न चैनं पाण्डवेयानां कश्चिच्छक्नोति वीक्षितुम् ।
विशिखानेव पश्यामो भीष्मचापच्युतान् बहून् ॥ २६॥
कुर्वाणं समरे कर्म सूदयानं च वाहिनीम् ॥ २७
व्याक्रोशन्त रणे तत्र वीरास्ते बहवो बहु ॥ २७॥
अमानुषेण वपुषा चरन्तं पितरं तव ।
शलभा इव राजेन्द्र पतन्ति विधिचोदिताः ॥ २८॥
भीष्माग्निमभिसङ्क्रुद्धं विनाशाय सहस्रशः ॥ २९
न हि मोघश्शरः कश्चिद् आसीद्भीष्मस्य संयुगे ।
नरनागाश्वकायेषु बहुत्वाल्लघुयोधिनः ॥ ३०

1. ख-ग-घ-ङ-म—आदिश्यादिश्य भारत

[1]प्रच्छादयन् शरान् भीष्मो निशितान् कङ्कपत्रिणः ।
अश्वमेकेन बाणेन गजमेकेन पत्रिणा ॥ ३१

चिच्छेद समरे राजन् वज्रेणेव शिलोच्चयम् ॥ ३१॥

गजांश्च सगजारोहान् वर्मिणश्चापरानपि ।
[2]छिनत्त्येकेन बाणेन सुमुक्तेन पतत्रिणा ॥ ३२॥

गजं कंकटसन्नद्धं वज्रेणेव शिलोच्चयम् ॥ ३३

[3]द्वित्रानपि गजान् भीष्मो वर्मितान् पिण्डितानपि ।
नाराचेन सुमुक्तेन निजघान पिता तव ॥ ३४

यो यो भीष्मं नरव्याघ्रम् अभ्येति युधि कश्चन ।
मुहूर्तदृष्टस्सहसा पतितो भुवि दृश्यते ॥ ३५

एवं सा धर्मराजस्य वध्यमाना महाचमूः ।
[4]भीष्मेणातुलवीर्येण व्यशीर्यत सहस्रधा ॥ ३६

प्राकम्पत महासेना शरवर्षेण पीडिता ॥ ३६॥

[5]ताडिता पाण्डवी सेना बहुधा सा व्यभज्यत ।
पश्यतो वासुदेवस्य पार्थस्य च शिखण्डिनः ॥ ३७॥

[6]यतमाना महावीर्याः पाण्डवास्सोमकास्तथा ।

---

1. ख-घ-ङ-म—इदमर्धचतुष्टयं नास्ति
2. अ-क-ग—अर्धद्वयं नास्ति
3. अ-क—नास्तीदमर्धम्
4. अ—सप्तार्धानि न सन्ति
5. ख-घ-ङ-म—नास्तीदमर्धम्
6. घ—अर्धत्रयं नास्ति

नाशक्नुवन् वारयितुं भीष्मबाणप्रपीडिताः ॥ ३८॥
महेन्द्रसमवीर्येण वध्यमाना महाचमूः ।
अभज्यत महाराज धर्मपुत्रस्य पश्यतः ॥ ३९॥
आविद्धध्वजनागं च पतितध्वजकूबरम् ।
अनीकं पाण्डुपुत्राणां हाहाभूतमदृश्यत ॥ ४०॥
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ।
प्रियं सखायं चाक्रन्दत् सखा दैवबलात्कृतः ॥ ४१॥
विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः ।
विकीर्य केशान् धावन्तः प्रत्यदृश्यन्त भारत ॥ ४२॥
तद्गोकुलमिवोद्भ्रान्तम् उद्भ्रान्तरथकुञ्जरम् ।
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ॥ ४३॥
प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः ।
उवाच पार्थं बीभत्सुं प्रगृह्य रथमुत्तमम् ॥ ४४॥

श्रीभगवान्—

अयं स कालस्सम्प्राप्तः पार्थ यः काङ्क्षितस्त्वया ।
प्रहरास्मै नरव्याघ्र न चेन्मोहाद्विमुह्यसे ॥ ४५॥
यत्पुरा कथितं वीर त्वया राज्ञां समागमे ॥ ४६
भीष्मद्रोणमुखान् सर्वान् धार्तराष्ट्रस्य सैनिकान् ।
सानुबन्धान् हनिष्यामि ये मां योत्स्यन्ति संयुगे ॥ ४७
इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम ॥ ४७॥

स्वसैन्यं पश्य बीभत्सो धावमानमितस्ततः ।
द्रवतश्च महीपालान् पश्य यौधिष्ठिरे बले ॥ ४८॥
दृष्ट्वा भीष्मं च समरे व्यात्ताननमिवान्तकम् ।
भयार्ताः प्रपलायन्ते सिंहात् क्षुद्रमृगा इव ॥ ४९॥

सञ्जयः—
[1]एवमुक्तः प्रत्युवाच वासुदेवं धनञ्जयः ॥ ५०

अर्जुनः—
चोदयाश्वान् यतो भीष्मो विगाह्ये तद्बलार्णवम् ॥ ५०॥

सञ्जयः—
ततोऽश्वान् रजतप्रख्यांश् चोदयामास केशवः ।
यतो भीष्मरथो राजन् दुष्प्रेक्ष्यो रश्मिमानिव ॥ ५१॥
ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यन्तमाहवे ॥ ५२॥
ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनदन् मुहुः ।
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ५३॥
क्षणेनातिरथस्तस्य सहयस्सहसारथिः ।
शरवर्षेण महता सञ्छन्नो न प्रकाशते ॥ ५४॥
वासुदेवस्त्वसम्भ्रान्तो धैर्यमास्थाय वीर्यवान् ।
चोदयामास तानश्वान् विभिन्नान् भीष्मसायकैः ॥ ५५॥
ततोऽर्जुनो धनुर्गृह्य दिव्यं जलदनिस्स्वनम् ।

1. म—अर्धद्वयं नास्ति

[1]पातयामास भीष्मस्य धनुश्छित्वा शितैश्शरैः ॥ ५६॥
सञ्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ५७॥
विचकर्ष ततो दोर्भ्यां धनुस्तज्जलदस्वनम् ।
अथास्य तदपि क्रुद्धश् चिच्छेद धनुरर्जुनः ॥ ५८॥
तस्य तत् पूजयामास लाघवं शन्तनोस्सुतः ॥ ५९

भीष्मः—

साधु पार्थ महाबाहो साधु पाण्डवनन्दन ।
त्वय्येवैतद्युक्तरूपं महत् कर्म धनञ्जय ॥ ६०
प्रीतोऽस्मि ते भृशं पार्थ कुरु युद्धं मया सह ॥ ६०॥

सञ्जयः—

इति पार्थं प्रशस्याथ प्रगृह्यान्यन्महद्धनुः ।
मुमोच समरे वीरश् शरान् पार्थरथं प्रति ॥ ६१॥
अदर्शयद्वासुदेवो हयज्ञाने परं बलम् ।
मोघान् कुर्वन् शरांस्तस्य माण्डलान्यचरल्लघु ॥ ६२॥
तथा भीष्मस्तु सुदृढं वासुदेवधनञ्जयौ ।
विव्याध निशितैस्तीक्ष्णैस् सर्वगात्रेषु मारिष ॥ ६३॥
शुशुभाते नरव्याघ्रौ भीष्मस्य शरपीडितौ ।
गोवृषाविव संरब्धौ विषाणोल्लेखनाङ्कितौ ॥ ६४॥
पुनश्चापि सुसङ्क्रुद्धश् शरैश्शतसहस्रशः ।

1. ख—इदमादि अर्धचतुष्टयं नास्ति

कृष्णयोर्युधि संरब्धो भीष्मः प्राच्छादयद्दिशः ॥ ६५॥
पार्थोऽपि समरे क्रुद्धो भीष्मस्यावारयद्दिशः ॥ ६६
वार्ष्णेयं च शरैस्तीक्ष्णैः कम्पयामास रोषितः ।
मुहुरस्य स्वयं भीष्मः प्रहस्य स्वनवत् तदा ॥ ६७
कृष्णस्तु समरे दृष्ट्वा भीष्मं भीमपराक्रमम् ।
सम्प्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ॥ ६८
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ।
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ॥ ६९
वरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ।
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ॥ ७०
अमृष्यमाणो भगवान् केशवः परवीरहा ।
अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ॥ ७१
एकाह्नाऽपि रणे भीष्मो नाशयेद्देवदानवान् ।
किमु पाण्डुसुतान् युद्धे सबलान् सपदानुगान् ॥ ७२
द्रवते च महासैन्यं पाण्डवस्य महात्मनः ॥ ७२॥
एते च कौरवास्तूर्णं प्रभग्नान् वीक्ष्य सोमकान् ।
प्राद्रवन्ति रणे दृष्ट्वा हर्षयन्तः पितामहम् ॥ ७३॥
सोऽहं भीष्मं निहत्याद्य पाण्डवार्थाय दंशितः ।
भारमेनं विनेष्यामि पाण्डवानां महात्मनाम् । ७४॥

अर्जुनोऽपि शरैस्तीक्ष्णैर् वध्यमानोऽपि संयुगे ।
कर्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात् ॥ ७५॥
तथा चिन्तयतस्तस्य भूय एव पितामहः ।
प्रेषयामास सङ्क्रुद्धश् शरान् पार्थरथं प्रति ॥ ७६॥

तेषां बहुत्वात् सुभृशं शराणां
दिशोऽथ सर्वाः पिहिता [1]बभूवुः ।
नैवान्तरिक्षं न दिशो न भूमिर्-
न भास्करोऽदृश्यत रश्मिमाली ॥ ७७॥

ववुश्च वातास्तुमुलास्सधूमा
दिशश्च सर्वाः क्षुभिता बभूवुः ।
द्रोणो विकर्णोऽथ जयद्रथश्च
भूरिश्रवाः कृतवर्मा कृपश्च ॥ ७८॥

श्रुतायुरम्बष्ठपतिश्च राजा
विन्दानुविन्दौ च महीक्षितश्च ।
प्राच्याश्च सौवीरगणाश्च सर्वे
वसातयः क्षुद्रकमालवाश्च ॥ ७९॥

किरीटिनं त्वरमाणाभिसस्रुर्
निदेशगाश्शान्तनवस्य राजन् ।

1. ख-ग—:समीक्ष्य

तं वाजिपादातरथौघजालैर्
अनेकसाहस्रशतैर्ददर्श ॥ ८०॥

किरीटिनं सम्परिवार्यमाणं
शिनेर्नप्ता वारणयूथपैश्च ।
[1]निरीक्षमाणास्सुभृशं नृपालाम्
ते पाण्डवेया व्यथिता बभूवुः ॥ ८१॥

ततस्तु दृष्ट्वाऽर्जुनवासुदेवौ
पदातिनागाश्वरथैस्समन्तात् ।
अभिद्रुतौ शस्त्रभृतां वरिष्ठौ
शिनिप्रवीरोऽभिससार तूर्णम् ॥ ८२॥

ततो ह्यनीकानि महाधनुष्मान्
शिनिप्रवीरस्सहसाऽभिपत्य ।
चकार साहाय्यमथार्जुनस्य
विष्णुर्यथा वृत्रनिषूदनस्य ॥ ८३॥

विकीर्णनागाश्वरथध्वजौघं
भीष्मेण वित्रासितसर्वयोधम् ।
युधिष्ठिरानीकमभिद्रवन्तं
प्रोवाच संदृश्य शिनिप्रवीरः ॥ ८४॥

1. ख-घ-ङ-म—इदमर्धं नास्ति

सात्यकिः—

क्व क्षत्रिया यास्यथ नैष धर्मस्
सतां पुरस्तात् कथितः पुराणः ।
मा स्म प्रतिज्ञां त्यजत प्रवीरास्
स्वं वीरधर्मं परिपालयध्वम् ॥ ८५॥

सञ्जयः—

तान् वासवानन्तरजो निशाम्य
नरेन्द्रमुख्यान् द्रवतस्समन्तात् ।
पार्थस्य दृष्ट्वा मृदुयुद्धतां च
भीष्मं च सङ्ख्ये समुदीयमाणम् ॥ ८६॥
अमृष्यमाणस्स ततो महात्मा
यशस्विनं सर्वदशार्हभर्ता ।
उवाच शैनेयमभिप्रशंसन्
दृष्ट्वा कुरूनापततस्समग्रान् ॥ ८७॥

श्रीभगवान्—

ये यान्ति यान्त्वेव शिनिप्रवीर
येऽवस्थितास्सात्वत तेऽपि यान्तु ।
भीष्मं रथात् पश्य निपात्यमानं
द्रोणं च सङ्ख्ये सगणं मयाऽद्य ॥ ८८॥
[1]न सारथेस्सात्वत कौरवाणां
क्रुद्धस्य मुच्येत रणेऽद्य कश्चित् ॥

1. अ-क—अर्धद्वयं नास्ति

तस्मादहं गृह्य रथाङ्गमुग्रं
प्राणं हरिष्यामि महाव्रतस्य ८९॥
निहत्य भीष्मं सगणं तथाऽऽजौ
द्रोणं च शैनेय रथप्रवीरौ ।
प्रीतिं करिष्यामि धनञ्जयस्य
राज्ञश्च भीमस्य तथाऽश्विनोश्च ॥ ९०॥
निहत्य सर्वान् धृतराष्ट्रपुत्रान्
तत्पक्षिणो ये च नरेन्द्रमुख्याः ।
राज्ये च राजानमजातशत्रुं
सम्पादयिष्याम्यहमद्य हृष्टः ॥ ९१॥

सञ्जयः—

इतीदमुक्त्वा स महानुभावस्
सस्मार चक्रं निशितं पुराणम् ।
सुदर्शनं चिन्तितमात्रमेव
तस्याग्रहस्तं स्वयमारुरोह ॥ ९२॥
[1]तच्चक्रपद्मं प्रगृहीतमाजौ
रराज नारायणबाहुनालम् ।
[2]यथाऽऽदिपद्मं तरुणार्कवर्णं
रराज नारायणनाभिजातम् ॥ ९३॥

---

1. अ-क-घ-ङ-म—अर्धचतुष्टयं नास्ति
2. स—इदमादि अर्धत्रयं नास्ति

तत्कृष्णकोपोदयसूर्यवर्चः
　　क्षुरान्ततीक्ष्णाग्रसुजातपत्रम् ।
तस्यैव देहोरुसरःप्ररूढं
　　रराज नारायणबाहुनालम् ॥　　९४॥

ततस्सुनाभं वसुदेवसूनुस्
　　सूर्यप्रभं वज्रसमप्रभावम् ।
क्षुरान्तमुद्यम्य भुजेन चक्रं
　　रथादवप्लुत्य विसृज्य वाहान् ॥　　९५॥

स कम्पयन् गां चरणैर्महात्मा
　　वेगेन कृष्णः प्रससार भीष्मम् ।
मदान्धमाजौ समुदीर्णदर्पं
　　सिंहो जिघांसन्निव वारणेन्द्रम् ॥　　९६॥

सोऽभिद्रवन् भीष्ममनीकमध्ये
　　क्रुद्धो महेन्द्रावरजः प्रमाथी ।
व्यालम्बिपीताम्बरधृक् चकाशे
　　घनो यथा सूर्यमरीचिनद्धः ॥　　९७॥

सुदर्शनं चास्य रराज शौरेः
　　[1]करस्थितं तच्च सुनालयुक्तम् ।

---

1. घ-ङ-म—तच्चक्रपद्मं सुभुजोरुनालम्
　　यथाऽऽदिपद्मं तरुणार्कवर्णम्।　　[पाठान्तरम्]

यथा हि पद्मं तरुणं सुवर्णं
रराज नारायणनाभिजातम् ॥ ९८॥

[1]तच्चक्रपद्मं शुभकोटिपत्रं
गोविन्दकान्तिव्रजसूर्यबुद्धम् ।
तस्यैव देहोरुसरःप्ररूढं
रराज नारायणनाभिजातम् ॥ ९९॥

तमात्तचक्रं प्रणदन्तमुच्चैः
क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः
क्षयं कुरूणामिति चिन्तयित्वा ॥ १००॥

स वासुदेवः प्रगृहीतचक्रस्
संवर्तयिष्यन्निव सर्वलोकम् ।
अभ्युत्पतँल्लोकगुरुर्बभासे
भूतानि धक्ष्यन्निव धूमकेतुः ॥ १०१॥

तमापतन्तं प्रगृहीतचक्रं
समीक्ष्य देवं द्विपदां वरिष्ठम् ।
असम्भ्रमं कार्मुकबाणपाणिर्
रथे स्थितश्शान्तनवोऽभ्युवाच ॥ १०२॥

2. घ-ङ-म—तत्कृष्णकोपोदितसूर्यबुद्धं
क्षुरान्ततीक्ष्णाग्रसुजातपक्ष्मम् । [पाठान्तरम्]

भीष्मः—

एह्येहि फुल्लाम्बुजपत्रनेत्र
नमोऽस्तु ते देववराप्रमेय ।
प्रसह्य मां पातय लोकनाथ
रथोत्तमाद्भूतशरण्य सङ्ख्ये ॥ १०३॥

त्वया हतस्यापि ममाऽद्य कृष्ण
श्रेयः परस्मिन्निह चैव लोके ।
सम्भावितोऽस्म्यन्धकवृष्णिनाथ
लोकैस्त्रिभिर्वीर तवाभियानात् ॥ १०४॥

सञ्जयः—

रथादवप्लुत्य ततस्त्वरावान्
पार्थोऽप्यनुद्रुत्य यदुप्रवीरम् ।
जग्राह पीनोत्तमलम्बबाहुं
बाह्वोर्हरिं व्यायतपीनबाहुः ॥ १०५॥

निगृह्यमाणश्च तमादिदेवो
भृशं सरोषः किल नाम योगी ।
आदाय वेगेन जगाम जिष्णुं
विष्णुर्महावात इवैकवृक्षम् ॥ १०६॥

पार्थस्तु विष्टभ्य बलेन पादौ
भीष्मान्तिकं तूर्णमभिद्रवन्तम् ।

बलान्निजग्राह हरिं किरीटी
पदे च राजन् दशमे कथञ्चित् ॥ १०७॥

अवस्थितं तु प्रणिपत्य कृष्णं
प्रीतोऽर्जुनः काञ्चनचित्रमौलिः ।
उवाच कोपं प्रतिसंहरेति
गतिर्भवान् केशव पाण्डवानाम् ॥ १०८॥

न हास्यते कर्म यथाप्रतिज्ञं
पुत्रैश्शपे केशव सोदरैश्च ।
अन्तं करिष्यामि यथा कुरूणां
त्वयाऽहमिन्द्रानुज सम्प्रयुक्तः ॥ १०९॥

ततः प्रतिज्ञां समयं च तस्य
जनार्दनः प्रीतमना निशम्य ।
स्थितः प्रिये कौरवसत्तमस्य
रथं सचक्रः पुनराहरोह ॥ ११०॥

[1]ततः प्रतिज्ञां समवाप्य भीष्मः
कृताञ्जलिस्स्तुत्यमथाकरोद्वै ।
त्रैविक्रमे यस्य वपुर्बभासे
तथैव दृष्ट्वा तु समुज्ज्वलन्तम् ॥ १११॥

1. अ-क—अर्धद्वयं नास्ति

पुनस्त्वरन् वै वरदो जिघांसुः
प्रगृह्य शङ्खं द्विषतां निहन्ता ।
विनादयामास दिशो नभश्च
स पाञ्चजन्यस्य रवेण शौरिः ॥ ११२॥

व्याविद्धनिष्काङ्गदकुण्डलं तं
रजोविकीर्णाञ्चितपद्मनेत्रम् ।
विशुद्धदंष्ट्रं प्रगृहीतशङ्खं
विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥ ११३॥

मृदङ्गभेरीपटहप्रणादा
नेमिस्वना दुन्दुभिनिस्स्वनाश्च ।
ससिंहनादाश्च बभूवुरुग्र्याः
सर्वेष्वनीकेषु कुरूत्तमानाम् ॥ ११४॥

गाण्डीवघोषस्स्तनयित्नुकल्पो
जगाम पार्थस्य नभो दिशश्च ।
जग्मुश्च बाणा विमलाः प्रसन्नास्
सर्वा दिशः पाण्डवचापमुक्ताः ॥ ११५॥

तं कौरवाणामधिपो जवेन
भीष्मेण भूरिश्रवसा च सार्धम् ।

अभ्युद्ययावुद्यतबाणपाणिः
कक्षं दिधक्षन्निव धूमकेतुः ॥ ११६॥

अथार्जुनाय प्रजहार भल्लान्
भूरिश्रवास्सप्त सुवर्णपुङ्खान् ।
[1]दुर्योधनस्तोमरमुग्रधन्वा
शल्यो गदां शान्तनवश्च शक्तिम् ॥ ११७॥

स सप्तभिस्सप्त शरप्रवेकान्
संवार्य भूरिश्रवसा प्रसृष्टान् ।
शितेन दुर्योधनबाहुमुक्तं
क्षुरेण तत्तोमरमुन्ममाथ ॥ ११८॥

ततश्शुभामापततीं स शक्तिं
विद्युत्प्रभां शान्तनवेन मुक्ताम् ।
गदां च मद्राधिपवेगमुक्तां
द्वाभ्यां शराभ्यां निचकर्त वीरः ॥ ११९॥

ततो भुजाभ्यां बलवद्विकृष्य
चित्रं धनुर्गाण्डिवमप्रमेयम् ।
माहेन्द्रमस्त्रं विधिवत् सुघोरं
प्रादुश्चकाराद्भुतमन्तरिक्षे ॥ १२०॥

---

1. अ-क-ग—भूरिश्रवाश्चातियशा महात्मा
स सिंहनादं च चकार भूयः। [अधिकः पाठः]

तेनोत्तमास्त्रेण ततो महात्मा
　　सर्वाण्यनीकानि महाधनुष्मान् ।
शरौघजालैर्विमलाग्निवर्णैर्
　　निवारयामास किरीटमाली ॥ १२१॥

भीष्मं शरैस्सम्परिवार्य सङ्ख्ये
　　चिच्छेद भूरिश्रवसश्च चापम् ।
शल्यञ्च विद्ध्वा नवभिः पृषत्कैर्
　　दुर्योधनं वक्षसि निर्बिभेद ॥ १२२॥

शिलीमुखाः पार्थधनुःप्रमुक्ता
　　रथान् ध्वजान् बाणधनूंषि बाहून् ।
निकृत्य देहान् विविशुः परेषां
　　नरेन्द्रनागेन्द्रतुरङ्गमाणाम् ॥ १२३॥

ततो दिशश्चाऽनुदिशश्च पार्थश्
　　शरैस्सुधारैर्निशितैर्वितत्य ।
गाण्डीवशब्देन मनांसि तेषां
　　किरीटमाली व्यथया चकार ॥ १२४॥

तस्मिंस्तथा घोरतमे प्रवृत्ते
　　शङ्खस्वना दुन्दुभिनिस्स्वनाश्च ।

सर्सिहनादाश्च बभूवुरुग्र्याः
सर्वेष्वनीकेषु तथा कुरूणाम् ॥ १२५॥

अन्तर्हिता गाण्डिवनिस्स्वनेन
बभूवुरुग्राश्च रणप्रणादाः ॥ १२६

गाण्डीवशब्दं तमथो विदित्वा
विराटराजप्रमुखा नरेन्द्राः ।
पाञ्चालराजो द्रुपदश्च वीरस्
तं देशमाजग्मुरदीनसत्त्वाः ॥ १२७

सर्वाणि सैन्यानि च तावकानि
यतो यतो गाण्डिवजः प्रणादः ।
ततस्ततस्सन्नतिमेव चक्रुः
पुनः पुनर्धार्तराष्ट्रास्समग्राः ॥ १२८

न तं प्रतीतोऽभिससार कश्चित्
तस्मिन् सुघोरे नृप सम्प्रहारे ॥ १२८॥

हताः प्रवीरास्सरथास्ससूता
हयाश्वनागाश्च निघाततप्ताः ॥
महापताकाश्शुभरुक्मकक्ष्याः
परीतसत्त्वास्सहसा निपेतुः ॥ १२९॥

किरीटिना भिन्नतनुत्रकायाः
दृढं हताः पत्रिभिरुग्रवेगैः ।
पार्थेन भल्लैर्विमलैश्शिताग्रैः
निकृत्तयन्त्रा निहतेन्द्रजालाः ॥ १३०॥

ध्वजा महान्तो ध्वजिनीपतीनाम्
पदातिसङ्घाश्च रथाश्च सङ्ख्ये ।
हयाश्च नागाश्च धनञ्जयेन
बाणाहताः पेतुरदीनसत्त्वाः ॥ १३१॥

ऐन्द्रेण तेनास्त्रवरेण राजन्
प्रकीर्णविच्छिन्नशिरोरुकायाः ॥ १३२

ततश्शरौघैर्निशितैः किरीटी
प्रवर्तयामास नदीं सुघोराम् ।
नृनागवाजिक्षतलोहितोदां
[1]नरान्त्रमज्जा स्थितकमांसफेनाम् ॥ १३३

प्रभूतरक्षोगणभूतजुष्टां
शिरःकपालाकुलशङ्कुजुष्टाम् ।
गजाश्ववालाकुलकेशशाद्वलां
प्रपातिताश्वेभशरीरकच्छपाम् ॥ १३४

1. अ-क—नरान्त्रसर्जां बहुमांसपङ्कम्

नराश्वशीर्षादिसहस्रमण्डुकां
गजाश्वशीर्षाकुलचारुमत्स्याम् ।
पादोरुचार्वञ्चितसर्पजुष्टां
सझिल्लिकाचामरचारुफेनिलाम् ॥ १३५

प्रकीर्णनानाकवचाख्यकर्कटां
शरीरसङ्घाटसहस्रवाहिनीम् ।
नरास्थिनागाश्वनिकृत्तशर्करां
विनाशिनीं भीरुभयावहां सदा ॥ १३६

श्वकङ्कसालावृकगृध्रसङ्कुलां
तरक्षुभिर्भूतगणैः प्रजुष्टाम् ।
क्रूरां महावैतरणीप्रकाशां
व्यपेतकूलां ददृशुर्मनुष्याः ॥ १३७

प्रवर्तितां चार्जुनबाणसङ्घैर्
मेदोवसासृक्प्रवहां सुभीमाम् ।
ते चेदिपाञ्चालकरूशमात्स्याः
पार्थाश्च सर्वे सहिताः प्रतेरुः ॥ १३८

हतप्रवीराणि बलानि दृष्ट्वा
किरीटिना शत्रुभयावहेन ।

विलस्यमाना ध्वजिनी परेषां
[1]आसीन्मृगी सिंहभयातुरेव ॥ १३९

हतद्रुतां तव पुत्रसेनां
दृष्ट्वा तदा भारतवृष्णिसिंहौ ।
विनेदतुस्तावतिहृष्यमाणौ
गाण्डीवधन्वा च जनार्दनश्च ॥ १४०

ततो रविं संहृतरश्मिजालं
दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः ।
तमैन्द्रमस्त्रं विततं सुघोरम्
असह्यमुद्वीक्ष्य युगान्तकल्पम् ॥ १४१

अथापहारं कुरवस्सभीष्मास्
सद्रोणदुर्योधनबाह्लिकाश्च ।
चक्रुर्निशां सन्धिगतां समीक्ष्य
विभावसोर्लोहितरागयुक्ताम् ॥ १४२

अवाप्य कीर्तिं च यशश्च लोके
विमृद्य शत्रूंश्च धनञ्जयोऽपि ।
ययौ नरेन्द्रैस्सह सोदरैश्च
समाप्तकर्मा शिबिरं निशायाम् ॥ १४३

1. ख-ग-घ-ङ-म—यथा महेन्द्रेण हि मार्गसङ्घान्

ततः प्रजज्ञे तुमुलः कुरूणां
निशामुखे घोरतरः प्रणादः ॥ १४३॥

कौरवसैनिकाः—

रणे रथानामयुतं निहत्य
[1]तथा गजानामयुतानि सप्त ।
प्राच्याश्च सौवीरगणाश्च सर्वे
निपातिताः क्षुद्रकमालवाश्च ॥ १४४॥

महत् कृतं कर्म धनञ्जयेन
कर्तुं यथा नार्हति कश्चिदन्यः ।
श्रुतायुरम्बष्ठपतिश्च राजा
तथा च दुर्मर्षणचित्रसेनौ ॥ १४५॥

द्रोणः कृपस्सैन्धवबाह्लिकौ च
भूरिश्रवाश्शल्यशलौ च राजन् ।
स्वबाहुवीर्येण जितास्सभीष्माः
किरीटिना लोकमहारथेन ॥ १४६॥

सञ्जयः—

इति ब्रुवन्तश्शिबिराणि जग्मुस्
सर्वे गणा भारत ये त्वदीयाः ॥ १४७

1. ख-ग-च-म—हत्वा गजानां च शतानि सप्त

उल्कासहस्रैश्च सुसम्प्रदीप्तैर्
विभ्राजमानैश्च तथा प्रदीपैः ।
किरीटिवित्रासितसर्वयोधा
जग्मुर्निवेशं ध्वजिनी कुरूणाम् ॥ १४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ तृतीयापहारस्समाप्तः ]
[अस्मिन्नध्याये १४८ श्लोकाः]

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥



भीष्मार्जुनयुद्धवर्णनम् ॥

---

सञ्जयः—

व्युष्टां निशां भारत भारतानाम्
अनीकिनीनां प्रमुखे महात्मा ।
ययौ सपत्नान् प्रति जातकोपो
वृतस्समग्रेण बलेन भीष्मः ॥ १

तं द्रोणदुर्योधनबाह्लिकाश्च
तथैव दुर्मर्षणचित्रसेनौ ।
जयद्रथश्चातिबलो बलौघैर्
नृपास्तथाऽन्येऽभिययुस्समस्ताः ॥ २

स तैर्महद्भिश्च महारथैश्च
तेजस्विभिर्वीर्यवद्भिश्च राजन् ।
रराज राजा तु स राजमध्ये
मध्ये सुराणामिव देवराजः ॥ ३

तस्मिन्ननीकप्रमुखे विषक्ता
दोधूयमाना विततः पताकाः ।
सुरक्तपीतासितपाण्डुराभा
महागजस्कन्धगता विरेजुः ॥ ४

सा वाहिनी शान्तनवेन गुप्ता
महारथैर्वारणवाजिभिश्च ।
बभौ सविद्युत्स्तनयित्नुघोषा
जलागमे द्यौरिव जातमेघा ॥ ५

ततो रणायाभिमुखी प्रयाता
प्रत्यर्जुनं शान्तनवाभिगुप्ता ।
ससार सेना सहसा कुरूणां
वेगो यथा भीम इवापगायाः ॥ ६

[1]तं व्यूढनानाद्विपगूढसारं
वराश्वपादातरथौघयुक्तम् ।

1. अ-क—ततः परं व्यूहमचिन्त्यरूपं
निवेशयामास महाधनुष्मान् । [अधिकः पाठः]

व्यूहं महामेघनिभं महात्मा
ददर्श दूरात् कपिराजकेतुः ॥ ७
स निर्ययौ केतुमता रथेन
नरर्षभश्श्वेतहयेन काले ।
[1]जये धृतश्शत्रुवरूथिनीनां
यथा सुरेन्द्रोऽसुरवाहिनीनाम् ॥ ८
नारायणेनेन्द्र इवाभिगुप्तश्
शशीव सूर्येण समेयिवान् यथा ।
तथा महात्मा सह केशवेन
वरूथिनीनां प्रमुखे रराज ॥ ९
सोपस्करं सोत्तरबन्धुरेषं
यत्तं यदूनामृषभेण सङ्ख्ये ।
कपिध्वजं प्रेक्ष्य रथं विषेदुस्
सहैव पुत्रैस्तव कौरवेयाः ॥ १०
प्रकल्पितं गुप्तमुदायुधेन
किरीटिना श्वेतहयेन तेन ।
[2]महानुभावेन महारथेन
कृतं तदा व्यूहमचिन्त्यरूपम् ॥ ११

---

1. अ-क—महारथानां प्रवरो महात्मा
वधोद्यतश्शत्रुवरूथिनीनां । [पाठान्तरम्]
2. ख-ग-घ-ङ-म—नास्तीदमर्धम्

ततस्तु राजन् ददृशुस्त्वदीयाश्
चतुश्चतुर्व्यालसहस्रकीर्णम् ॥ ११॥
यथैव पूर्वेऽहनि धर्मराज्ञा
व्यूहः कृतः कौरवसत्तमेन ।
यथा न भूतो भुवि मानुषेषु
न दृष्टपूर्वो न च संश्रुतो नः ॥ १२॥
ततो महावेगसमाहतानि
भेरीसहस्राणि विनेदुराजौ ।
शङ्खस्वनास्तूर्यरवाः प्रणेदुस्
सर्वेष्वनीकेषु ससिंहनादाः ॥ १३॥
ततस्सबाणानि महान्ति तानि
विष्फार्यमाणानि धनूंषि वीरैः ।
क्षणेन भेरीपणवप्रणादान्
अन्तर्दधुश्शङ्खमहास्वनांश्च ॥ १४॥
तच्छङ्खशब्दाहतमन्तरिक्षम्
उद्धूतभौमद्रुतरेणुजालम् ॥
महानुभावाश्च ततः प्रकाशम्
आलोक्य वीरास्सहसाऽभिपेतुः ॥ १५॥
रथी रथेनाभिहतस्ससूतः
पपात साश्वस्सरथस्सकेतुः ।

गजो गजेनाभिहतः पपात
पदातिना चाभिहतः पदातिः ॥ १६॥
[1]आवर्तमानान्यभिवर्तमानैर्
[2]घोराण्यनीकानि सुदर्शनानि ।
प्रासैश्च खड्गैश्च समाहतानि
सदश्ववृन्दानि सदश्ववृन्दैः ॥ १७॥
[3]सुवर्णतारागणभूषितानि
सूर्यप्रभाभानि शरावराणि ।
विदार्यमाणानि परश्वथैश्च
प्रासैश्च खड्गैश्च निपेतुरुर्व्याम् ॥ १८॥

---

1. अ-क-ग—तुरङ्गमश्चापि तुरङ्गमेण
हतः पपाताथ नदन् पृथिव्याम् । [अधिकः पाठः]
2. अ-क-ग—सैन्यानि सैन्यैर्निहतानि सङ्ख्ये । [अधिकः पाठः]
3. अ-क-ग—हतानि सर्वाणि पदातिसङ्घैः
पदातिसङ्घा निहतास्समन्तात् ।
सुवर्णमाणिक्यविभूषितानि
सूर्यप्रभाजालसमद्युतीनि ॥
सबाणजालानि तथाऽयुधानि
विदार्यमाणानि परश्वथैश्च ।
निपेतुरुर्व्यां सहसा हतानि
गदासिशक्त्यष्टिपरश्वथानि ॥
बाणैश्शिताग्रैर्निहतास्सुपर्वभिः
सहाश्वसूता रथिनः प्रपेतुः ॥
[अधिकः पाठः पाठभेदश्च]

गजैर्विषाणापरगात्ररुग्णाः

केचित् ससूता रथिनः प्रपेतुः ।

गजर्षभाश्चापि गजर्षभेण

निपातिता बाणहताः पृथिव्याम् ॥ १९॥

गजौघवेगोद्धतसादितानां

श्रुत्वा निपेतुस्सहसा मनुष्याः ॥

आर्तस्वरं सादिपदातियूनां

विषाणगात्रापरतापितानाम् । २०॥

सम्भ्रान्तनागाश्वरथे मुहूर्ते

महाक्षये सादिपदातियूनाम् ।

महारथैस्सम्परिवार्यमाणं

संदृश्य दूरात् कपिराजकेतुम् ॥ २१॥

[1]तं पञ्चतालोच्छ्रिततालकेतुस्

सदश्ववेगाद्भुतवेगपातः ।

महास्त्रबाणाशनिदीप्तिमन्तं

किरीटिनं शान्तनवोऽभ्यधावत् ॥ २२॥

---

1. अ-क—पदातिनागाश्वरथौघसङ्कुलं हत्वा महत्सैन्यमनेकथाऽर्जुनः ।
चचार मार्गान् बहुधा प्रदर्शयन् नैपुण्यमार्गं स रणे समस्थितः॥
तं तत्र तालोच्छ्रितकेतुवर्यः सदश्ववेगोत्थितरेणुरूषितः ।
रथेन बाणासनशस्त्रपाणिः समाससादार्जुनमेकवीरम् ॥
[अधिकः पाठः पाठभेदश्च]

तं कार्तवीर्यप्रतिमानकल्पम्
इन्द्रोपमं द्रोणमुखा भिसञ्जुः ॥
कृपस्तदा शल्यविविंशती च
दुर्योधनस्सोमदत्तश्च राजन् ॥ २३॥

ततो रथानीकमुखानुपेत्य
सर्वास्त्रवित् काञ्चनचित्रवर्मा ।
जवेन शूरोऽभिससार सर्वास्
तानर्जुनस्यात्मभवोऽभिमन्युः ॥ २४॥

तेषां महास्त्राणि महारथानाम्
[1]स भीमकर्मा विनिहत्य कार्ष्णिः ।
बभौ तदा मन्त्रहुतश्शिखीव
सदोगतस्सन् भगवानिवाग्निः ॥ २५॥

ततस्स तूर्णं रुधिरोदफेनां
कृत्वा नदीं वैशसने कुरूणाम् ।
जगाम सौभद्रमतीत्य भीष्मो
महारथं पार्थमदीनसत्त्वम् ॥ २६॥

---

1. क—अशक्यकर्मा विनिहत्य ख-ग— स उग्रकर्मा वि
अ—अशक्यकर्माणि

[1]ततः प्रहस्याद्भुतविक्रमेण
गाण्डीवमुक्तेन शिलाशितेन ॥
विपाठजालेन महास्त्रजालं
निशातयामास किरीटमाली ॥ २७॥

तमुत्तमं सर्वधनुर्धराणाम्
असक्तकर्मा कपिराजकेतुः ।
भीष्मं महात्माऽभिववर्ष तूर्णं
शरौघजालैर्विमलैश्च भल्लैः ॥ २८॥

[2]एवंविधं कार्मुकभीमनादम्
अदीनवत् सत्पुरुषोत्तमाभ्याम् ।
ददर्श लोकः कुरुसृञ्जयाश्च
तद् द्वैरथं भीष्मधनञ्जयाभ्याम् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

1. अ-क-ग—रणाय चोद्युक्तमनन्तवीर्यं बालं हि मत्वाऽऽर्जुनिमप्रमेयम् ।
तथा समीपे स्थितमर्जुनं तं दृष्ट्वा कुरूणां प्रवरस्स भीष्मः ।
महारथं पार्थमुपेत्य शीघ्रं स योधयामास रणे महात्मा ।
[अधिकः पाठः]

2. अ-क-ग—एवं विधं युद्धमभूतपूर्वं कृतं तु ताभ्यां भुवि विश्रुताभ्याम् ।
भीमार्जुनाभ्यां पुरुषोत्तमाभ्यां सर्वे नृपाः पाण्डवकौरवेयाः॥
गन्धर्वयक्षप्रवरास्सविस्मयास् ससर्वलोका ददृशुस्समन्तात्।
[पाठान्तरम्]

## ॥ षट्पञ्चाशोऽध्यायः ॥

धृष्टद्युम्नेन शलपुत्रवधः ॥

सञ्जयः—

द्रौणिर्भूरिश्रवाश्शल्यश् चित्रसेनश्च मारिष ।
पुत्रस्सांयमनेश्चैव सौभद्रं समयोधयन् ॥ १

संसक्तमतितेजोभिस् तमेकं ददृशुर्जनाः ।
पञ्चभिर्मनुजव्याघ्रैर् गजैस्सिंहशिशुं यथा ॥ २

नातिलक्ष्यतया कश्चिन्न शौर्ये न पराक्रमे ।
बभूव सदृशः कार्ष्णेर् नास्त्रे नापि च लाघवे ॥ ३

तथा तमात्मजं युद्धे विक्रमन्तमरिन्दमम् ।
दृष्ट्वा पार्थस्सुसम्पन्नं सिंहनादं ननाद ह ॥ ४

[1]पीडयानं च तत् सैन्यं पौत्रं तव विशां पते ।
ददर्श राजन् पाञ्चाल्यस् सेनापतिररिन्दमः ॥ ५

स च तां धार्तराष्ट्राणां ध्वजिनीं परवीरहा ।
अत्यरोचत सौभद्रस् तेजसा च बलेन च ॥ ६

तस्य लाघवमार्गस्थम् आदित्यसदृशप्रभम् ।
व्यदृश्यत महच्चापं समरे युध्यतः परैः ॥ ७

1. अ-क—अर्धद्वयं नास्ति

द्रौणिमेकेषुणा विद्धा शल्यं विव्याध पञ्चभिः ।
ध्वजं सांयमनेश्चैव सोऽष्टाभिश्चिच्छिदे ततः ॥ ८

[1]रुक्मदण्डां महाशक्तिं प्रेषितां सौमदत्तिना ।
शितेनोरगसङ्काशां पत्रिणाऽभिजघान ताम् ॥ ९

शल्यस्य तु महावेगान् अस्यतस्समरे शरान् ।
[2]धनुश्चिच्छेद भल्लेन तीव्रवेगेन फाल्गुनिः ॥ १०

जघानार्जुनदायादश् चतुर्भिश्चतुरो हयान् ॥ १०॥

[3]भूरिश्रवाश्च शल्यश्च द्रौणिस्सांयमनिश्शलः ।
नात्यवर्तन्त संरब्धाः कार्ष्णेर्बाहुबलोदयात् ॥ ११॥

ततस्त्रिगर्ता राजेन्द्र सहितास्तत्र केकयैः ।
पञ्चविंशत्सहस्राणि पुत्रेण तव चोदिताः ॥ १२॥

[4]धनुर्वेदविदां श्रेष्ठा ह्यजेया अरिभिर्युधि ।
सहपुत्रं जिघांसन्तः परिवव्रुः किरीटिनम् ॥ १३॥

तौ तु तत्र पितापुत्रौ परिक्षिप्तौ महारथौ ।
ददर्श राजन् पाञ्चाल्यस् सेनापतिरमित्रजित् ॥ १४॥

---

1. अ-क-ग—अष्टाविंशद्भिरहनच्छलं चैव महेषुभिः ।
सौमदत्तिस्तु सङ्क्रुद्धश् शक्तिं कालायसीमथ ।
प्रेषयामास समरे फल्गुनस्य सुताय वै ॥ [अधिकः पाठः]

2. अ-क-ग—नास्तीदमर्धम्

3. अ-क-ग—भूरिश्रवसमेवाथ जघानोरसि सायकैः । [अधिकः पाठः]

4. अ-क-ग—सौमदत्तिश्शलश्चैव पञ्चैते तु महारथाः । [अधिकः पाठः]

पारावताश्वं स रथम् आस्थाय परवीरहा ।
धनुर्विष्फार्य सङ्क्रुद्धश् चोदयित्वा च वाहिनीम् ॥ १५॥
ययौ स मद्रकानीकं केकयांश्च परंतप ॥ १६
तेन कीर्तिमता गुप्तम् अनीकं दृढधन्वना ।
संरब्धरथनागाश्वं योत्स्यमानमशोभत ॥ १७
[1-2]सोऽर्जुनप्रमुखे यात्वा पाञ्चाल्यः कुरुनन्दन ।
त्रिभिश्शारद्वतं बाणैर् भुजदेशे समर्पयत् ॥ १८
ततस्स मद्रराजानं विव्याध दशभिश्शरैः ।
[3]हृष्ट एकं जघानाश्वं भल्लेन कृतवर्मणः ॥ १९
दमनं चापि दायादं पौरवस्य महात्मनः ।
जघान विमलाग्रेण नाराचेन परंतपः ॥ २०
ततस्सांयमनेः पुत्रः पाञ्चाल्यं युद्धदुर्मदम् ।
[4]अविध्यत् त्रिंशता बाणैर् दशभिश्चास्य सारथिम् ॥ २१

1. अ-क—नास्तीदमर्धम्
2. अ-क-ग—सर्वे महारथाश्शूरा अयुध्यन्त महारणे ।
पार्षतेन महाराज शलशल्यकृपादयः ।
प्रमुखे चार्जुनस्यैव स्थित्वा च युधि पार्षतः ॥
[अधिकः पाठः]
3. अ-क—नास्तीदमर्धम्
4. अ-क—स्वरथात्तूर्णमभ्यागाद् रथस्थं पुरुषर्षभम् ।
भल्लेन कृतवर्माणं शलमेकेषुणाऽहनत् ॥ [अधिकः पाठः]

सोऽतिविद्धो महेष्वासस् सृक्किणी परिसंलिहन् ।
भल्लेन भृशतीक्ष्णेन निचकर्तास्य कार्मुकम् ॥ २२
अथैनं पञ्चविंशत्या क्षिप्रमेव समर्पयत् ।
अथाश्वांश्चावधीद्राजन् [1]रथरक्षौ च सारथिम् ॥ २३
स हताश्वे रथे तिष्ठन् ददर्श भरतर्षभ ।
पुत्रः सांयमनेः पुत्रं पाञ्चाल्यं च यशस्विनम् ॥ २४
स प्रगृह्य महाघोरं निस्त्रिंशं वरमायुधम् ।
पदातिस्तूर्णमभ्यागाद् रथस्थं पुरुषर्षभम् ॥ २५
तं महौघमिवायान्तं खे पतन्तमिवोरगम् ।
भ्रान्तावरणनिस्त्रिंशं कालसृष्टमिवान्तकम् ॥ २६
दीप्यमानं यथा वह्निं मत्तवारणवारणम् ।
पश्यतां पाण्डुपुत्राणां प्रवेगस्समपद्यत ॥ २७
तस्य पाञ्चालपुत्रस्तु प्रतीपमभिधावतः ।
पीतनिस्त्रिंशहस्तस्य शरावरणधारिणः ॥ २८
बाणवेगमतीतस्य रथाभ्याशमुपेयुषः ।
त्वरन् सेनापतिः क्रुद्धो बिभेद गदया शिरः ॥ २९
[2]निस्त्रिंशस्तस्य राजेन्द्र सम्भ्रमग्नशरावरः ।
हतस्य पततो हस्ताद् वेगेन न्यपतद्भुवि ॥ ३०

1. घ-ङ-म—नदन् पृष्ठे च सारथिम्  2. अ-क—नासीदमर्षम्

तं निहत्य गदाग्रेण लेभे परमकं यशः ।
पुत्रः पाञ्चालराजस्य इन्द्रो बलमिवेश्वरः ॥ ३१

तस्मिन् हते महेष्वासे शल्यपुत्रे महारथे ।
हाहाकारो महानासीत् तव सैन्यस्य मारिष ॥ ३२

ततस्सांयमनिः क्रुद्धो दृष्ट्वा निहतमात्मजम् ।
अभिदुद्राव वेगेन पाञ्चाल्यं युद्धदुर्मदम् ॥ ३३

तौ तत्र समरे वीरौ समेतौ रथिनां वरौ ।
ददृशुस्सर्वराजानः कुरवः पाण्डवास्तथा ॥ ३४

ततस्सांयमनिः क्रुद्धः पार्षतं परवीरहा ।
आजघान त्रिभिर्बाणैस् तोत्रैरिव महाद्विपम् ॥ ३५

तथैव पार्षतो वीरश् शल्यं समितिशोभनम् ।
[1]आजघान शरैः क्रुद्धस् ततो युद्धमवर्तत ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ३६ श्लोकाः]

---

1. अ-क-ग—निजघान महाबाणैस् तीक्ष्णाग्रैरप्यजिह्मगैः ।
ततः क्रुद्धावयुध्येतां परस्परजयैषिणौ ।
युध्यतोरुभयोश्चापि समं युद्धमवर्तत । [अधिकः पाठः]

## ॥ सप्तपञ्चाशोऽध्यायः ॥



भीमसेनादियुद्धवर्णनम् ॥

धृतराष्ट्रः—

दैवमेव परं मन्ये पौरुषादपि सञ्जय ।
यत् सैन्यं मम पुत्रस्य पाण्डुपुत्रेण वध्यते ॥ १
नित्यं हि मामकांस्तात हतानेव स्म शंससि ।
उदग्रांश्च प्रहृष्टांश्च नित्यं शंससि पाण्डवान् ॥ २
विभग्नांश्च प्रनष्टांश्च नित्यं शंससि मामकान् ।
हीनान् पुरुषकारेण निरुत्साहांश्च सञ्जय ॥ ३
युध्यमानान् यथाशक्ति घटमानान् जयं प्रति ।
मामकांश्च रणे तात निहतानेव शंससि ॥ ४
पाण्डवा विजयन्त्येव हीयन्ते चैव मामकाः ॥ ४॥
सोऽहं तीव्राणि दुःखानि दुर्योधनकृतानि च ।
समश्रौषमहं तात दुस्सहानि बहूनि च ॥ ५॥
उपायं तु न पश्यामि येन जेया हि पाण्डवाः ।
मामका वा जयं युद्धे प्राप्नुयुर्येन सञ्जय ॥ ६॥

सञ्जयः—

गजवाजिमनुष्याणां तथैव रथिनां क्षयम् ।

शृणु राजन् स्थिरो भूत्वा तवैवापनयं महत् ॥ ७॥

धृष्टद्युम्नस्तु शल्येन पीडितो निशितैश्शरैः ।
पीडयामास सङ्क्रुद्धो मद्राधिपतिमायसैः ॥ ८॥

तत्राद्भुततरं चक्रे पार्षतः परवीरहा ।
न्यवारयत यत् संख्ये शल्यं समितिशोभनम् ॥ ९॥

नान्तरं ददृशे कश्चित् तयोः पुरुषसिंहयोः ।
मुहूर्तमिव तद्युद्धं तयोस्समभवत् तदा ॥ १०॥

ततश्शल्यो महाराज धृष्टद्युम्नस्य संयुगे ।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ॥ ११॥

अथैनं शरवर्षेण च्छादयामास भारत ।
गिरिं जलागमे यद्वद् धाराभिर्जलदो यथा ॥ १२॥

अभिमन्युस्ततः क्रुद्धो धृष्टद्युम्ने निपीडिते ।
अभिदुद्राव वेगेन मद्रराजरथं प्रति ॥ १३॥

ततो मद्राधिपरथं कार्ष्णिः प्राप्यातिकोपनः ।
आर्तायनिममेयात्मा विव्याध निशितैश्शरैः ॥ १४॥

ततस्तु तावका राजन् परीप्सन्तोऽर्जुनिं रणे ।
मद्रराजरथं तूर्णं परिवार्योपतस्थिरे ॥ १५॥

दुर्योधनो दुर्विषहो दुर्मुखो दुस्सहस्तथा ।
दुर्मर्षणश्च राजेन्द्र चित्रसेनो विविंशतिः ॥ १६॥

सत्यव्रतः पुरुमित्रो विकर्णश्च महारथः ।
एते मद्राधिपरथं पालयन्तस्स्थिता रणे ॥ १७॥

भीमसेनस्ततः क्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाश्चाभिमन्युर् माद्रीपुत्रौ च पाण्डवौ ॥ १८॥

नानारूपाणि शस्त्राणि विसृजन्तो विशां पते ।
अभ्यवर्तन्त संहृष्टाः परस्परवधैषिणः ॥ १९॥

ततस्समाययुर्वीरा राजन् दुर्मन्त्रिते तव ॥ २०

तस्मिन् दाशरथे युद्धे वर्तमाने भयावहे ।
तावकानां परेषां च प्रेक्षका रथिनोऽभवन् ॥ २१

[1]अस्त्राण्यनेकरूपाणि विसृजन्तो महारथाः ।
अन्योन्यमभिगर्जन्तस् सम्प्रहारं प्रचक्रिरे ॥ २२

ते तदा जातसंरम्भास् सर्वेऽन्योन्यं जिघांसवः ।
महाशस्त्राणि मुञ्चन्तस् समापेतुरमर्षिणः ॥ २३

दुर्योधनस्तु सङ्क्रुद्धो धृष्टद्युम्नममर्षणम् ।
विव्याध निशितैर्बाणैश् चतुर्भिस्समरे द्रुतम् ॥ २४

दुर्मर्षणश्च विंशत्या चित्रसेनश्च सप्तभिः ।
दुर्मुखो [2]नवभिर्बाणैर् दुस्सहश्चापि सप्तभिः ॥ २५

1. अ-क-ग—प्रावर्तत महायुद्धं परस्परजिगीषया । [अधिकः पाठः]
2. ख-घ-म—दशभि

विविंशतिस्त्रिभी राजन् विकर्णः पञ्चभिश्शरैः ।
तान् प्रत्यविध्यद्राजेन्द्र पार्षतश्शत्रुतापनः ॥ २६

एकैकं पञ्चविंशत्या दर्शयन् पाणिलाघवम् ।
सत्यव्रतं च समरे पुरुमित्रं च भारत ॥ २७

अभिमन्युरविध्यत् तान् तावकान् नृपतीन् नृप ।
प्रत्येकं समरे वीरान् दशभिर्दशभिश्शरैः ॥ २८

माद्रीपुत्रौ तु समरे मातुलं प्रीतिवर्धनौ ।
छादयेतां शरैर्घोरैस् तदद्भुतमिवाभवत् ॥ २९

ततश्शल्यो महाराज स्वस्रीयौ युद्धदुर्मदौ ।
शरैर्बहुभिरानर्च्छत् कृतप्रतिकृतैषिणौ ॥ ३०

[1]माद्रीपुत्रौ पुनः क्रुद्धौ शल्यं विव्यधतुश्शरैः ॥ ३०॥

वार्यमाणश्शरैर्घोरैर् मद्रराजो न विव्यथे ॥ ३१

ततो दुर्योधनं दृष्ट्वा भीमसेनो महाबलः ।
दिदृक्षुः कलहस्यान्तं गदां जग्राह पाण्डवः ॥ ३२

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनं महाबाहुं पुत्रास्ते प्राद्रवन् भयात् ॥ ३३

दुर्योधनस्ततः क्रुद्धो मागधं समचोदयत् ।
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ॥ ३४

---

1. ख-च-ङ-म—इदमर्धं नास्ति

मागध[1]स्तं रथानीकैर् भीमसेनं समभ्ययात् ॥ ३४॥
आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः ।
[2]गदापाणिरवारोहद् रथात् सिंह इवोन्नदन् ॥ ३५॥
अश्मसारमयीं गुर्वीं प्रगृह्य महतीं गदाम् ।
अभ्यधावद्गजानीकं व्यादितास्य इवान्तकः ॥ ३६॥
स गजान् गदया निघ्नन् व्यचरत् समरे बली ।
भीमसेनो गदापाणिर् वृत्रहा दानवेष्विव ॥ ३७॥
तस्य नादेन महता मनोहृदयकम्पिना ।
प्रावेपन्त च सम्भीता गजा भीमस्य नर्दतः ॥ ३८॥
ततस्तु द्रौपदीपुत्रास् सौभद्रश्च महारथः ।
नकुलस्सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ३९॥
पृष्ठं भीमस्य रक्षन्तश् शरवर्षेण वारणान् ।
अभ्यधावन्त वर्षन्तो मेघा इव गिरीन् यथा ॥ ४०॥
नाकुलिस्तु शतानीकश् समरे शत्रुपूगहा ।
शरैः क्षुरप्रैर्भल्लैश्च वत्सदन्तैर्वरासिभिः ॥ ४१॥
न्यहनच्चोत्तमाङ्गानि पाण्डवो गजयोधिनाम् ॥ ४२
[3]शिरोभिः प्रपतद्भिश्च बाहुभिश्च विभूषितैः ।

---

1. ख-ग-घ-ङ-म—श्चाग्रणीस्तत 2. ङ—अर्धद्वयं नास्ति
3. च—अर्धद्वयं नास्ति

[1]अश्मवृष्टिरिवाभाति पाणिभिश्च सहाङ्कुशैः ॥ ४३
हृतोत्तमाङ्गास्स्कन्धेषु गजानां गजयोधिनः ।
अदृश्यन्ताचलाग्रेषु द्रुमा भग्नशिपा इव ॥ ४४
मागधोऽथ महीपालो गजमैरावतोपमम् ।
प्रेषयामास समरे सौभद्रस्य रथं प्रति ॥ ४५
तमापतन्तं सम्प्रेक्ष्य मागधस्य महागजम् ।
जघानैकेषुणा वीरस् सौभद्रः परवीरहा ॥ ४६
तस्यावर्जितनागस्य कार्ष्णिः परपुरञ्जयः ।
राज्ञो राजतपुङ्खेन भल्लेनापाहरच्छिरः ॥ ४७
धृष्टद्युम्नहतानन्यान् विमुखान् समरे गजान् ।
पततः पतितांश्चान्यान् पार्षतेन महात्मना ॥ ४८
विगाह्य तं गजानीकं भीमसेनोऽपि मारिष ।
व्यचरत् समरे मृद्नन् गजानिन्द्रो गिरीनिव ॥ ४९
एकप्रहारनिहतान् भीमसेनेन दन्तिनः ।
अपश्याम रणे तस्मिन् गिरीन् वज्रहतानिव ॥ ५०
भग्नदन्तान् भग्नकरान् भग्नसक्थांश्च वारणान् ।
भग्नपृष्ठत्रिकानन्यान् निहतान् सह सादिभिः ॥ ५१
द्रवतस्सीदतश्चान्यान् विमुखान् समरे गजान् ।

1. अ-क—नास्तीदमर्धम्

[1]भीमसेनस्य मार्गेषु पतितान् पर्वतोपमान् ॥ ५२
अपश्याम हतान् राजन् गजान् निघ्नतोऽपरान् ॥ ५२॥
वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः ।
विह्वलन्तो गता भूमिं शैला इव धरातले ॥ ५३॥
मेदोरुधिरदिग्धाङ्गो वसामेदस्समुक्षितः ।
व्यचरत् समरे वीरो दण्डपाणिरिवान्तकः ॥ ५४॥
गजानां रुधिराक्रान्तां गदां बिभ्रद्वृकोदरः ।
घोरः प्रतिभयश्चासीत् पिनाकीव पिनाकभृत् ॥ ५५॥
निर्मथ्यमानाः क्रुद्धेन भीमसेनेन दन्तिनः ।
सहसा प्राद्रवन् भीता मृदित्वा तव वाहिनीम् ॥ ५६॥
तं हि वीरा महेष्वासास् सौभद्रप्रमुखा नृपाः ।
पर्यरक्षन्त सङ्क्रुद्धा वज्रायुधमिवामराः ॥ ५७॥
शोणिताक्तां गदां बिभ्रद् उक्षितो गजशोणितैः ।
कृतान्त इव रौद्रात्मा भीमसेनो व्यदृश्यत ॥ ५८॥
व्यायच्छमानं गदया दिक्षु सर्वासु भारत ।
अपश्याम रणे भीमं नृत्यन्तमिव शङ्करम् ॥ ५९॥
यमदण्डोपमां गुर्वीम् इन्द्राशनिसमस्वनाम् ।
अपश्याम गदां राजन् रौद्रां परमदारुणाम् ॥ ६०॥

1. अ-क—नास्तीदमर्धम्

केशमज्जासृगभ्यक्तो रौद्रं बिभ्रत्तदा वपुः ।
[1]मारुतिर्भीमसेनस्तु व्यनिघ्नत्तव वाहिनीम् ॥ ६१॥

यथा पशूनां सङ्घातं यष्ट्या पालः प्रकालयत् ।
[2]तथा भीमो गजानीकं गदया समकालयत् ॥ ६२॥
गदया वध्यमानास्ते मार्गणैश्च समन्ततः ।
स्वान्यनीकानि मृद्नन्तः प्राद्रवन् कुञ्जरास्तव ॥ ६३॥
महावात इवाभ्राणि विधमित्वा स वारणान् ।
अतिष्ठत् तुमुले भीमस् श्मशान इव शूलधृक् ॥ ६४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ६४॥ श्लोकाः ]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

सात्यकिभूरिश्रवसोस्समागमः ॥

---

सञ्जयः—
तस्मिन् हते गजानीके पुत्रो दुर्योधनस्तव ।
भीमसेनवधायैव सर्वसैन्यमचूचुदत् ॥ १
ततस्सर्वाण्यनीकानि तव पुत्रस्य शासनात् ।

---

1. ख-ग-घ-ङ-म—मारुतेश्शूलहस्तस्य पुरेवाभिघ्नतः पशून् ।
2. अ-क-च—नास्तीदमर्धम्	[ पाठान्तरम् ]

अभ्यधावन् भीमसेनं नदन्तं सिंहवद्रणे ॥ २
तं बलौघमपर्यन्तं देवैरपि दुरासदम् ।
आपतन्तं सुदुष्पारं समुद्रमिव पर्वणि ॥ ३
रथनागाश्वकलिलं शङ्खदुन्दुभिनादितम् ।
अनन्तरथपादातं रजसा सर्वतो वृतम् ॥ ४
भीमसेनो महाराज नृपोदधिमिवापरम् ।
सेनासागरमक्षोभ्यं वेलेव समवारयत् ॥ ५
तदाश्चर्यमपश्याम पाण्डवस्य महात्मनः ।
भीमसेनस्य समरे कर्मामानुषकर्मणः ॥ ६
[1]उदीर्णां पृतनां सर्वां साश्वान् सरथकुञ्जरान् ।
असम्भ्रमं भीमसेनो गदया समपोथयत् ॥ ७
[2]स संवार्य बलौघांस्तान् गदया बलिनां वरः ।
अतिष्ठत् समरे भीमो गिरिर्मेरुरिवाचलः ॥ ८
तस्मिंस्तु तुमुले घोरे काले परमदारुणे ।
भ्रातृभिस्सह पुत्रैश्च धृष्टद्युम्नो महाबलः ॥ ९
द्रौपदेयाश्चाभिमन्युश्च शिखण्डी चापराजितः ।
न प्राजहन् भीमसेनं भये जाते महाबलम् ॥ १०
ततश्शैक्यायसीं गुर्वीं प्रगृह्य महतीं गदाम् ।

1. अ-क—अर्धद्वयं नास्ति 2. अ-क-ग—अर्धद्वयं नास्ति

अवधीत् तावकान् योधान् दण्डपाणिरिवान्तकः ॥ ११

पोथयन् रथबृन्दानि वाजिबृन्दानि चाभिभूः ।
व्यचरत् समरे भीमो युगान्ते पावको यथा ॥ १२

ऊरुवेगेन सङ्कर्षन् रथजालानि पाण्डवः ।
विनिघ्नन् व्यचरत् संख्ये युगान्ते कालवद्विभुः ॥ १३
बलानि च ममर्दाशु नलिनानीव कुञ्जरः ॥ १३॥

रथेभ्यो रथिनश्चापि गजेभ्यो गजयोधिनः ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातिनः ॥ १४॥
[1]पातयामास राजेन्द्र युद्धभूम्यां महाबलः ॥ १५

तत्र तत्र हतैश्चापि मनुष्यगजवाजिभिः ।
[2]विबभौ कर्म तद्रौद्रं रुद्रस्येव युगक्षये ॥ १६

[3]यमदण्डोपमामुग्राम् इन्द्राशनिसमस्वनाम् ।
ददृशुर्भीमसेनस्य रौद्रीं विशसनीं गदाम् ॥ १७

आविध्यतो गदां तस्य कौन्तेयस्य महात्मनः ।
गदा मारुतवेगाऽभूद् विष्फूर्जितमिवाशनेः ॥ १८

---

1. ख-घ-ङ-म—इदमर्धं नास्ति
2. अ-क—नास्तीदमर्धम्
3. अ-क-ग—युक्ता बभौ युद्धभूमिर् विकीर्णैस्स्यन्दनध्वजैः ।
अन्तकस्येव च क्रीडा भूमिरासीद्युगक्षये ॥ [अधिकः पाठः]

[1]तं तथा महतीं सेनां त्रासयानं पुनःपुनः ।
दृष्ट्वा मृत्युमिवायान्तं सर्वेषां विस्मयोऽभवत् ॥ १९

यतो यतस्समुद्युक्तो गदामुद्यम्य पाण्डवः ।
ततस्ततो व्यदीर्यन्त सर्वसैन्यानि भारत ॥ २०

विदारयन्तं सैन्यानि बलेनामितविक्रमम् ।
व्यादितास्यमनीकानि ग्रसमानमिवान्तकम् ॥ २१

समरे भीमकर्माणं प्रगृहीतमहागदम् ।
दृष्ट्वा वृकोदरं भीष्मस् तत एनं समभ्ययात् ॥ २२

छादयञ् शरवर्षेण पर्जन्य इव वृष्टिमान् ।
भीमसेनं रणे भीष्मो व्यात्ताननमिवान्तकम् ॥ २३

महता मेघघोषेण रथेनादित्यवर्चसा ।
भीष्मं भीमो महाबाहुः प्रत्युदीयादमर्षणम् ॥ २४

तस्मिन् क्षणे सात्यकिस्सत्यसन्धश्
शिनिप्रवीरोऽभ्यपतत् पितामहम् ।
निघ्नन्नमित्रान् धनुषा दृढेन
स कम्पयंस्तव पुत्रस्य सैन्यम् ॥ २५

तं यान्तमश्वै रजतप्रकाशैश्
शरान् वमन्तं निशितान् सुपुङ्खान् ।

1. अ-क-गा—तां प्रगृह्य महावेगाम् आयान्तं भीमनिस्वनम् ।
भीमसेनं महावीर्यम् अतीवाप्रियदर्शनम् ॥ [अधिकः पाठः]

नाशक्नुवन् प्रेक्षयितुं तदानीं
सर्वे गणा भारत ये त्वदीयाः ॥ २६

अविध्यदेनं दशभिश्शितोग्रैर्
अलम्बुसोऽसौ समरे तदानीम् ॥ २६॥

शरैश्चतुर्भिः प्रतिविद्ध्य तं च
नप्ता शिनेरभ्यपतद्रथेन ।
समागतं वृष्णिवरं निशम्य
मध्ये रिपूणां परिवर्तमानम् ॥ २७॥

प्रावर्तयन्तं कुरुपुङ्गवाश्च
पुनः पुनश्च प्रणदन्तमाजौ ।
नाशक्नुवन् वारयितुं वरिष्ठं
सैन्यं हि तूर्णं खमिवापतन्तम् ॥ २८॥

[1]तत्रापि कश्चिन्न विषक्त आसीद्
ऋते राजन् सोमदत्तस्य पुत्रान् ॥ २९

सोऽप्याददानो धनुरुग्रवेगं
भूरिश्रवा भारत सौमदत्तिः ।

1. अ-क-ग—न तत्र कश्चिद्भुवि तस्य विद्यते
निवारकस्सोमदत्तस्य पुत्रात् । [पाठान्तरम्]

दृष्ट्वा रथाश्वान् [1]सारथिचोद्यमानान्
प्रत्यद्रवत् सात्यकिं योद्धुकामः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

## ॥ एकोनषष्टितमोऽध्यायः ॥

भीमेन दुर्योधनानुजाष्टकवधः ॥ १ ॥ घटोत्कचभयेन कुरुभिः सेना पहारः ॥ २ ॥

सञ्जयः—

ततो भूरिश्रवा राजन् सात्यकिं नवभिश्शरैः ।
समविध्यत् सुसङ्क्रुद्धस् तोत्त्रैरिव महाद्विपम् ॥ १

कौरव्यं सात्यकिश्चैव शरैस्सन्नतपर्वभिः ।
पर्यवारयदव्यग्रस् सर्वसैन्यस्य पश्यतः ॥ २

ततो दुर्योधनो राजा सोदरैः परिवारितः ।
सौमदत्तिं रणे यत्तस् समन्तात् पर्यवारयत् ॥ ३

तथैव पाण्डवास्सर्वे सात्यकिं तु महारणे ।
परिवार्य स्थितास्सङ्ख्ये तव पुत्रस्य पश्यतः ॥ ४

1. ख-ब-ङ—दृष्ट्वा रथान् स्वानवलोयमानान् ग—व्यपनीयमानान्

भीमसेनस्ततः क्रुद्धो गदामुद्यम्य भारत ।
दुर्योधनमुखान् सर्वान् पुत्रांस्ते पर्यकालयत् ॥ ५

[1]रथैरनेकसाहस्रैस् समन्तात् पर्यवारयत् ।
नन्दकस्तव पुत्रस्तु भीमसेनं महाबलम् ॥ ६
विव्याध निशितैष्षड्भिः कङ्कपत्रैश्शिलाशितैः ॥ ६॥

दुर्योधनस्तदा राजन् भीमसेनं महाहवे ।
आजघानोरसि क्रुद्धो मार्गणैर्नवभिश्शितैः ॥ ७॥

ततो भीमो महाबाहुर् आस्थाय स्वरथं महत् ।
स्मयमानश्च कोपेन स्वसारथिमथाब्रवीत् ॥ ८॥

भीमः—

एते महारथाश्शूरा धार्तराष्ट्रास्समागताः ।
मामेवाभिमुखास्तूर्णम् उपतिष्ठन्ति दंशिताः ॥ ९॥

एतानद्य हनिष्यामि पश्यतस्ते न संशयः ।
तस्मान्ममाश्वान् सङ्ग्रामे यत्तस्संयच्छ सारथे ॥ १०॥

सञ्जयः—

एवमुक्त्वा ततः पार्थः पुत्रं तव विशां पते ।
विव्याध दशभिस्तीक्ष्णैश् शरैः कनकभूषणैः ॥ ११॥
नन्दकं स त्रिभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ॥ १२

1. अ-क-ख-ग—अर्धत्रयं नास्ति

[1]तं तु दुर्योधनष्षष्ट्या विद्ध्वा भारत संयुगे ।
त्रिभिरन्यैस्सुनिशितैर् विशोकं प्रत्यविध्यत ॥ १३

भीमस्य च रणे राजन् धनुश्चिच्छेद भास्वरम् ।
मुष्टिदेशे भृशं तीक्ष्णैर् विध्वा राजन् महाशरैः ॥ १४

[2]समरे प्रेक्ष्य यन्तारं विशोकं तु वृकोदरः ।
पीडितं विशिखैस्तीक्ष्णैस् तव पुत्रेण धन्विना ॥ १५

[3]अमृष्यमाणस्संरब्धो धनुर्दिव्यं परामृशत् ॥ १५॥

पुत्रस्य ते महाराज वधार्थं भरतर्षभ ।
समधत्तातिसङ्क्रुद्धः क्षुरप्रं लोमवापिनम् ॥ १६॥

तेन चिच्छेद नृपतेर् भीमः कार्मुकमुत्तमम् ॥ १७

अपविद्ध्य धनुश्छिन्नं क्रोधेन प्रज्वलन्निव ।
अन्यत् कार्मुकमादाय सत्वरं वेगवत्तरम् ॥ १८

तत्र सन्धाय सशरं कालमृत्युसमप्रभम् ।
तेनाजघान सङ्क्रुद्धो भीमसेनं स्तनान्तरे ॥ १९

स गाढविद्धो व्यथितस् सर्वगात्रैर्विचेतनः ।
निषसाद रथोपस्थे मूर्च्छामभिजगाम ह ॥ २०

1. अ—चतुर्दशार्धौनि न सन्ति
2. क-ग—सारथिं चापि भीमस्य पुनर्विव्याध मार्गणैः । [अधिकः पाठः]
3. क-ग—नास्तीदमर्धम्

तं दृष्ट्वा व्यथितं भीमम् अभिमन्युपुरोगमाः ।
नामृष्यन्त महेष्वासाः पाण्डवानां महारथाः ॥ २१

ततस्तुतुमुलां वृष्टिं शस्त्राणामुग्रतेजसाम् ।
अपातयन् महाराज तव पुत्रस्य मूर्धनि ॥ २२

प्रतिलभ्य ततस्संज्ञां भीमसेनो महाबलः ।
दुर्योधनं त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २३

शल्यं च पञ्चविंशत्या शरैस्सन्नतपर्वभिः ।
रुक्मपुङ्खैर्महेष्वासस् स विद्धो व्यपयाद्रणात् ॥ २४

प्रत्युद्ययुस्तदा भीमं तव पुत्राश्चतुर्दश ।
सेनापतिस्सुषेणश्च जलसन्धस्सुलोचनः ॥ २५

उग्रो भीमरथो भीमो भीमबाहुरलोलुपः ।
दुर्मुखो दुष्प्रधर्षश्च विचित्रो विकटस्समः ॥ २६

विसृजन्तो बहून् बाणान् कोपसंरक्तलोचनाः ।
भीमसेनमभिद्रुत्य विव्यधुश्चापि पाण्डवम् ॥ २७

पुत्रांस्तु तव सम्प्रेक्ष्य भीमसेनो महाबलः ।
सृक्किणी संलिहन् वीरः पशुमध्ये वृको यथा ॥ २८

[1]अभिपत्य महाबाहुर् गरुत्मानिव पन्नगान् ।
सेनापतेः क्षुरप्रेण शिरश्चिच्छेद भारत ॥ २९

---

1. अ-क-ख-ग—नास्तीदमर्धम्

जलसन्धं त्रिभिर्बाणैर् अनयद्यमसादनम् ।
सुषेणं च ततो हत्वा प्रेषयामास मृत्यवे ॥ ३०
उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं भुवि ।
पातयामास भल्लेन कुण्डलाभ्यां विभूषितम् ॥ ३१
भीमबाहुं च सप्तत्या साश्वकेतुं ससारथिम् ।
निनाय भरतश्रेष्ठ परलोकाय भारत ॥ ३२
भीमं भीमरथं चोभौ भीमसेनो हसन्निव ।
पुत्रौ ते युद्धदुर्मत्तावनयद्यमसादनम् ॥ ३३
[1]ततस्सुलोचनं भीमः क्षुरप्रेण महाहवे ।
मिषतां सर्वसैन्यानाम् अनयद्यमसादनम् ॥ ३४
पुत्रास्तु तव तं दृष्ट्वा भीमसेनपराक्रमम् ।
शेषा ये चाऽभवंस्तत्र ते भीमस्य भयात् तदा ॥ ३५
विप्रसस्रुर्दिशो राजन् वध्यमाना महात्मना ॥ ३५॥
ततोऽब्रवीच्छान्तनवस् सर्वानेव समागतान् ॥ ३६

भीष्मः—

[2]एवं भीमो रणे क्रोधी सर्वानेव महारथान् ।

---

1. ङ—अर्धलयं नास्ति
2. अ-क—क्रुद्ध एव रणे भीमस् सर्वानेव महारथान् ।
वधिष्यति यथायोगं द्रवमाणान् नृपान्युधि ॥
मा द्रवध्वं नृपश्रेष्ठा घातयध्वं वृकोदरम् ।
सङ्गतास्समरे शूरा युध्यध्वमिति मा चिरम् ॥ [पाठान्तरम्]

यथाप्रज्ञं यथाशूरं यथाश्रेष्ठं च सङ्गतान् ॥ ३७

चरन् न्यपातयत् क्रुद्धस् सम्प्रधावत मा चिरम् ॥ ३७॥

सञ्जयः—

एवमुक्तास्ततस्सर्वे धार्तराष्ट्रस्य सैनिकाः ।
अभ्यद्रवन्त सङ्क्रुद्धा भीमसेनममर्षणम् ॥ ३८॥

[1]भगदत्तः प्रभिन्नेन कुञ्जरेण विशां पते ।
अभ्ययात् सहसा तत्र यत्र भीमो व्यवस्थितः ॥ ३९॥

आपतन्नेव च रणे भीमसेनं शिलीमुखैः ।
अदृश्यं समरे चक्रे महामेघो रविं यथा ॥ ४०॥

[2]अभिमन्युमुखास्तत्र नामृष्यन्त महारथाः ।
भीमस्याच्छादनं सङ्ख्ये स्वबाहुबलमाश्रिताः ॥ ४१॥

त एनं शरवर्षेण समन्तात् पर्यवारयन् ॥ ४२

स शस्त्रवृष्ट्याऽभिहतस् समरे तैर्महारथैः ।
प्राग्ज्योतिषगजो राजन्नानालिङ्गैस्सुतेजनैः ॥ ४३

सञ्जातरुधिरोत्पीडः प्रेक्षणीयोऽभवद्रणे ।
गभस्तिभिरिवार्कस्य संस्यूतो जलदो महान् ॥ ४४

सञ्चोदितो मदस्रावी तान् सर्वानभ्यधावत ।

1. घ—अर्धद्वयं नास्ति
2. ङ-म—भीमस्याभिमुखास्तत्र

द्विगुणं जवमास्थाय कम्पयन्निव मेदिनीम् ॥ ४५
तस्य यत् सुमहद्युद्धं दृष्ट्वा सर्वे महारथाः ।
असह्यं मन्यमानास्ते नात्यग्रमनसोऽभवन् ॥ ४६
ततस्तु नृपतिः क्रुद्धो भीमसेनं स्तनान्तरे ।
आजघान महाराज शरेणानतपर्वणा ॥ ४७
सोऽतिविद्धो महेष्वासस् तेन राज्ञा महाबलः ।
मूर्च्छयाऽभिपरीतात्मा ध्वजयष्टिमुपाश्रयत् ॥ ४८
तांस्तु भीतान् समालक्ष्य भीमसेनं च मूर्च्छितम् ।
ननाद बलवन्नादं भगदत्तः प्रतापवान् ॥ ४९
ततो घटोत्कचो राजन् भीमं वीक्ष्य तथा गतम् ।
सङ्क्रुद्धो राक्षसो घोरस् तत्रैवान्तरधीयत ॥ ५०
स कृत्वा दारुणां मायां भीरूणां भयवर्धिनीम् ।
प्रत्यदृश्यन्निमेषार्धाद् घोररूपं समास्थितः ॥ ५१
ऐरावतं समारुह्य अष्टदन्तं महाबलम् ।
कैलासगिरिसङ्काशं वज्रपाणिरिवाभ्ययात् ॥ ५२
तथाऽन्ये चैव दिङ्नागास् त्रासयन्तोऽनुयायिनः ।
अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः ॥ ५३
त्रय एते महानागा राक्षसैस्समधिष्ठिताः ।
महाकायास्त्रिधा राजन् विस्रवन्तो मदं बहु ॥ ५४

तेजोवीर्यबलोपेता महाबलपराक्रमाः ॥ ५४॥

[1]घटोत्कचश्च दिङ्नागांश्चोदयन् सततस्तदा ।

सगजं भगदत्तं तु हन्तुकामः परंतपः ॥ ५५॥

ते चान्ये चोदिता राजन् राक्षसैस्तैर्महाबलैः ।

परिपेतुस्सुसंरब्धाश् चतुर्दन्ताश्चतुर्दिशम् ॥ ५६॥

भगदत्तस्य तं नागं विषाणैस्समपीडयन् ॥ ५७

सम्पीड्यमानस्तैर्नागैर् वेदनार्तश्शरातुरः ।

व्यनदत् सुमहानादम् इन्द्राशनिसमस्वनम् ॥ ५८

[2]मृदित्वा सर्वसैन्यानि तव पुत्रस्य भारत ।

व्यनर्दत महाघोषो भैमसेनिशरार्दितः ॥ ५९

तस्य तं नदतो नादं सुघोरं भीमनिस्स्वनम् ।

श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानं च सुयोधनम् ॥ ६०

भीष्मः—

एष युध्यति सङ्ग्रामे हैडिम्बेन महात्मना ।

भगदत्तो महेष्वासः कृच्छ्रेण परिवर्तते ॥ ६१

राक्षसश्च महामायस् स च राजाऽतिकोपनः ।

एतौ समेतौ समरे कालमृत्यूपमावुभौ ॥ ६२

---

1. अ-क—अर्धचतुष्टयं नास्ति
2. ख-ग-घ-ङ-म—न्यवर्तत महाघोषो भैमसैनिशरार्दितः ।

[अधिकः पाठः]

एषोऽश्रूयत हृष्टानां पाण्डवानां महास्वनः ।
[1]हस्तिनश्चैव सुमहान् भीमस्य नदतो ध्वनिः ॥ ६३

गच्छामस्तत्र भद्रं वो राजानं परिरक्षितुम् ।
अरक्ष्यमाणस्समरे क्षिप्रं प्राणान् विमोक्ष्यति ॥ ६४

ते त्वरध्वं महावीर्या मा चिरं कुरुतानघाः ।
महान् हि वर्तते रौद्रस् सङ्ग्रामो रोमहर्षणः ॥ ६५

भक्तश्च कुलपुत्रश्च शूरश्च पृतनापतिः ।
युक्तं तस्य परित्राणं कर्तुमस्माभिरच्युताः ॥ ६६

सञ्जयः—

भीष्मस्य तद्वचश्श्रुत्वा सर्व एव महारथाः ।
द्रोणभीष्मौ पुरस्कृत्य भगदत्तपरीप्सया ॥ ६७

उत्तमं जवमास्थाय प्रययुर्यत्र सोऽभवत् ॥ ६७॥

तान् प्रयातान् समालोक्य युधिष्ठिरपुरोगमाः ।
पञ्चालाः पाण्डवैस्सार्धं पृष्ठतोऽनुययुः परान् ॥ ६८॥

तान्यनीकान्यथालोक्य राक्षसः परवीरहा ।
ननाद सुमहानादं विस्फोटमशनेरिव ॥ ६९॥

तस्य तं निनदं श्रुत्वा दृष्ट्वा नागांश्च युध्यतः ।
भीष्मश्शान्तनवो राजन् भारद्वाजमभाषत ॥ ७०॥

1. अ-क-ग—हस्तिनोऽश्वाश्शकृन्मूत्रं प्रसस्रुर्महतो भयात् ।[अधिकः पाठः].

भीष्मः—

न रोचते मे सङ्ग्रामो हैडिम्बेन महात्मना ॥ ७१

बलवीर्यसमायुक्तस् ससहायश्च साम्प्रतम् ।
नैष शक्यो महारौद्र इन्द्रेणापि युधा क्वचित् ॥ ७२

लब्धलक्षः प्रहारी च वयं च श्रान्तवाहनाः ।
पाञ्चालैः पाण्डवैश्चैव दिवसं शरविक्षताः ॥ ७३

[1]इदानीं युधि निर्जेतुं न शक्योऽसौ स राक्षसः ॥ ७३॥

अस्तमभ्येति सविता रात्रौ योद्धुं न शक्यते ।
अपहारमतः कुर्मश् श्वो योत्स्यामः परैस्सह ॥ ७४॥

सञ्जयः—

पितामहवचश्श्रुत्वा तथा चक्रुरमर्षिताः ।
उपायेनापयानं ते घटोत्कचभयार्दिताः ॥ ७५॥

कौरवेषु निवृत्तेषु पाण्डवा जितकाशिनः ।
सिंहनादान् भृशं चक्रुश् शङ्खान् दध्मुश्च भारत ॥ ७६॥

एवं तदभवद्युद्धं दिवसं भरतर्षभ ।
पाण्डवानां कुरूणां च पुरस्कृत्य घटोत्कचम् ॥ ७७॥

ततस्तु कौरवा राजन् प्रययुश्शिबिरं स्वकम् ।

1. अ-क-ग—नाद्य मे रोचते युद्धं पाण्डवैर्जितकाशिभिः ।
प्रवर्तत्वपहारोऽद्य गच्छाव स्वबलेन वै ॥
शिबिरं प्रति गच्छामस् सन्ध्या संपरिवर्तते । [पाठान्तरम्]

प्राप्ते तदा निशाकाले पाण्डवेयैः पराजिताः ॥ ७८॥
शरविक्षतगात्राश्च पाण्डुपुत्रा महारथाः
युद्ध्वा सुमनसो राजन् जग्मुस्स्वशिबिरं प्रति ॥ ७९॥
पुरस्कृत्य महाराज भीमसेनघटोत्कचौ ॥ ८०
पूजयन्तो यथान्यायं मुदिताः प्रियदर्शनाः ।
नदन्तो विविधान्नादांस् तूर्यमिश्रितनिस्वनाः ॥ ८१
सिंहनादांश्च कुर्वाणा विमिश्रान् शङ्खनिस्वनैः ।
विनदन्तो महात्मानः कम्पयन्तश्च मेदिनीम् ॥ ८२
कम्पयन्तश्च राजेन्द्र पुत्राणां ते मनांस्युत ॥ ८२॥
तव पुत्राश्च राजेन्द्र तथैव शरविक्षताः ।
प्रयाताश्शिबिरायैव निशाकाले परंतप ॥ ८३॥
दुर्योधनस्तु नृपतिर् दीनो भ्रातृवधेन च ।
मुहूर्तं चिन्तयामास बाष्पशोकसमाकुलः ॥ ८४॥
ततः कृत्वा विधिं तत्र शिबिरस्य यथाविधि ।
प्रदध्यौ शोकसन्तप्तो भ्रातृव्यसनकर्शितः ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये ८५॥ श्लोकाः]
[चतुर्थोपहारः समाप्तः]

---

## ॥ षष्टितमोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति विश्वोपाख्यानकथनम् ॥

धृतराष्ट्रः—

भयं मे सुमहज्जातं विस्मयश्चैव सञ्जय ।
श्रुत्वा पाण्डुकुमाराणां कर्म देवैस्सुदुष्करम् ॥ १
पुत्राणां वै परिभवं श्रुत्वा सञ्जय महत्तरम् ।
चिन्ता मे महती जाता कथमेतद्भविष्यति ॥ २
ध्रुवं विदुरवाक्यानि धक्ष्यन्ति हृदयं मम ।
तथा हि दृश्यते सर्वं दैवयोगेन सञ्जय ॥ ३
यत्र भीष्ममुखान् सर्वान् अस्त्रज्ञान् योधसत्तमान् ।
पाण्डवानामनीकानि योधयन्ति प्रहारिणः ॥ ४
केनावध्या महात्मानः पाण्डुपुत्रा महाबलाः ।
केन दत्तवरास्तात किमु ज्ञानं विदन्ति ते ॥ ५
केन क्षयं न विन्दन्ति दिवि तारागणा इव ॥ ५॥
पुनः पुनर्न मृष्यामि हतसैन्योऽस्मि पाण्डवैः ।
मय्येव दण्डः पतति दैवादेष सुदारुणः ॥ ६॥
यथाऽवध्याः पाण्डुसुता यथा वध्याश्च मे सुताः ।
एतन्मे सर्वमाचक्ष्व याथातथ्येन सञ्जय ॥ ७॥

न हि पारं प्रपश्यामि दुःखस्यास्य कथञ्चन ।
समुद्रस्येव महतो भुजाभ्यां प्रतरन् नरः ॥ ८॥
पुत्राणां व्यसनं मन्ये ध्रुवं प्राप्तं सुदारुणम् ॥ ९
घातयिष्यति मे सर्वान् पुत्रान् भीमो न संशयः ।
न हि पश्यामि तं वीरं यो मे रक्षेत् सुतान् रणे ॥ १०
ध्रुवं विनाशस्समरे पुत्राणां मम सञ्जय ।
तस्मान्मे कारणं सूत युक्तिं चैव विशेषतः ॥ ११
पृच्छते हि यथातत्त्वं सर्वमाख्याहि सञ्जय ॥ ११॥
दुर्योधनश्च यच्चक्रे दृष्ट्वा स्वान् विमुखान् रणे ।
भीष्मद्रोणौ कृपश्चैव सौबलोऽथ जयद्रथः ॥ १२॥
द्रौणिर्वापि महेष्वासो विकर्णो वा महाबलः ॥ १३
निश्चयो वाऽपि कस्तेषां तदा ह्यासीन्महात्मनाम् ।
विमुखेषु महाप्राज्ञ मम पुत्रेषु सञ्जय ॥ १४

सञ्जयः—

शृणु राजन्नवहितश् श्रुत्वा चैवावधारय ॥ १४॥
नैव मन्त्रकृतं किंचिन्नैव मायां तथाविधाम् ।
न वै विभीषिकां काञ्चिद् राजन् कुर्वन्ति पाण्डवाः ॥ १५॥
युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे ॥ १६

[1]धर्मेण सर्वकार्याणि जीवितादीनि भारत ।
आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः ॥ १७
[2]न ते युद्धान्निवर्तन्ते धर्मोपेता महाबलाः ।
श्रिया परमया युक्ता यतो धर्मस्ततो जयः ॥ १८
तेनावध्या रणे पार्था जययुक्ताश्च पार्थिव । १८॥
तव पुत्रा दुरात्मानः पापेष्वभिरतास्सदा ॥
निष्ठुरा हीनकर्माणस् तेन हीयन्ति संयुगे ॥ १९॥
सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वर ।
निकृतानीह पाण्डूनां नीचैरिव यथा नरैः ॥ २०॥
सर्वं च तदनादृत्य पुत्राणां तव किल्बिषम् ।
सापह्नवास्सदैवासन् पाण्डवाः पाण्डुपूर्वज ॥ २१॥
न चैतान् बहुमन्यन्ते पुत्रास्तव विशां पते ॥ २२
तस्य पापस्य सततं क्रियमाणस्य कर्मणः ।
सम्प्राप्तस्सुमहान् घोरो विपाको दुर्नयात् तव ॥ २३
स तं भुङ्क्ष्व महाराज सपुत्रस्ससुहृद्गणः ।
नावबुध्यसि यद्राजन् वार्यमाणस्सुहृज्जनैः ॥ २४
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ।
तथा मया वार्यमाणो न गृह्णास्यसकृद्विभो ॥ २५

1. अ-क—नास्तीदमर्धम् 2. अ-क—नास्तीदमर्धम्

वाक्यं हितं च तथ्यं च मर्त्यः पथ्यमिवौषधम् ॥ २५॥
पुत्राणां मतमास्थाय जितान् मन्यसि पाण्डवान् ॥ २६
शृणु राजन् यथातत्त्वं यन्मां त्वं परिपृच्छसि ।
कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति ॥ २७
ततोऽहं कथयिष्यामि यथाश्रुतमरिन्दम ॥ २७॥
दुर्योधनेन संपृष्ट एतदर्थं पितामहः ।
दृष्ट्वा भ्रातॄन् रणे सर्वान् निर्जितान् सुमहारथान् ॥ २८॥
शोकसम्मूढहृदयो निशाकाले स कौरवः ।
पितामहं महाप्राज्ञं विनयेनोपगम्य तु ॥ २९॥
यदब्रवीत् सुतस्तेऽसौ तत् त्वं शृणु जनेश्वर ॥ ३०

दुर्योधनः—

[1]भवान् द्रोणश्च कर्णश्च द्रौणिश्च कृप एव च ।
कृतवर्मा च हार्दिक्यः काम्भोजश्च सुदक्षिणः ॥ ३१
भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्यवान् ।
महारथास्समाख्याताः कुरूणां कीर्तिवर्धनाः ॥ ३२
त्रयाणामपि लोकानां पर्याप्ता इति मे मतिः ।
पाण्डवानां समस्तानां न तिष्ठन्ति पराक्रमे ॥ ३३
तत्र मे संशयो जातस् तत्त्वमाचक्ष्व पृच्छतः ।
यं समाश्रित्य कौन्तेया जयन्त्यस्मान् पदे पदे ॥ ३४

---

1. म—अर्धचतुष्टयं नास्ति

भीष्मः—

शृणु राजन्नवहितो यत् त्वा वक्ष्यामि कौरव ।
बहुशश्च मयोक्तोऽसि न च मे तत् त्वया कृतम् ॥ ३५

[1]क्रियतां पाण्डवैस्सार्धं शमो भरतसत्तम ।
एतत् क्षममहं मन्ये पृथिव्यास्तव चाभिभोः ॥ ३६

भुङ्क्ष्वेमां पृथिवीं सर्वां स्वपुत्रैस्सङ्गतस्सुखी ।
दुर्हृदस्तापयन् सर्वान् नन्दयंश्चापि बान्धवान् ॥ ३७

न च मे क्रोशतस्तात श्रुतवानसि यत् पुरा ।
तदिदं समनुप्राप्तं यत् पाण्डूनवमन्यसे ॥ ३८

यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्मणाम् ।
तं शृणुष्व महाराज मम कीर्तयतः प्रभो ॥ ३९

नास्ति लोकेषु स पुमान् न भूतो न भविष्यति ।
[2]ससुरासुरमर्त्येषु यो विद्यात् तत्त्वतो हरिम् ॥ ४०

यत् तु मे कथितं तात मुनिभिर्भावितात्मभिः ।
पुराणं तत्त्वधर्मज्ञैस् तच्छृणुष्व यथातथम् ॥ ४१

पुरा किल सुरास्सर्वे ऋषयश्च समागताः ।
पितामहमुपासेदुः पर्वते मानसोत्तरे ॥ ४२

1. अ-क-ग—इदानीमपि वक्ष्यामि हितं तव नराधिप । [अधिकः पाठः]
2. अ-क-ग—नसुरासुरमर्त्येषु यो विन्द्यात् तत्त्वतो हरिम् ।
[पाठान्तरम्]

प्रजापतिरथाऽपश्यद् आसीनो महदद्भुतम् ।
विमानं प्रज्वलद्भासा स्थितं प्रवरमम्बरे ॥ ४३

ध्यानेनावेक्ष्य तद्ब्रह्मा कृत्वा च नियतोऽञ्जलिम् ।
नमश्चकार हृष्टात्मा परमं परमेश्वरम् ॥ ४४

ऋषयश्चापि देवाश्च दृष्ट्वा ब्रह्माणमुत्थितम् ।
तस्थुः प्राञ्जलयस्सर्वे पश्यन्तो महदद्भुतम् ॥ ४५

यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः ।
जगाद जगतस्स्रष्टा परं परमधर्मवित् ॥ ४६

ब्रह्मा—

विश्वावसुर्विश्वमूर्तिर्हि विश्वे
विष्वक्सेनो विश्वकर्मा वशी च ।
विश्वेश्वरो वासुदेवोऽसि तस्माद्
योगात्मानं दैवतं त्वामुपैमि ॥ ४७

जय विश्वमहादेव जय लोकहिते रत ।
जय योगमयो देव जय योगेश्वरेश्वर ॥ ४८

भूतभव्यभवोद्भाव जय सौम्यात्मजात्मज ।
असङ्ख्येयगुणाजेय सर्वलोकपरायण ॥ ४९

नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ।
जय सर्वगुणोपेत विश्वमूर्ते निरामय ॥ ५०

विश्वेश्वर महाबाहो जय लोकार्थतत्पर ।
[1]महोरगवराहाद्य हरिकेश विभो जय ॥ ५१
हरिवासदिशामीश विश्ववासामिताव्यय ।
व्यक्ताव्यक्तास्थितस्थान नियतेन्द्रिय सेन्द्रिय ॥ ५२
असङ्ख्येयात्मभावज्ञ जय गम्भीर कामद ।
अनन्त विदितात्मा त्वम् अद्भुताद्भुतभावन ॥ ५३
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयावह ।
गुणात्मन् सर्वभूतात्मन् स्फुटसम्भूतसम्भव ॥ ५४
भूतात्मन् सर्वलोकेश जय भूतविभावन ।
आत्मयोने महाभाग कल्पसंक्षेपतत्पर ॥ ५५
उद्भावनमनूद्भाव जय ब्रह्मजनप्रिय ।
निसर्गमार्गनिरत कामेश परमेश्वर ॥ ५६
अमृतोद्भवसद्भाव युक्ताग्निविजयप्रद ।
प्रजापतिपते देव पद्मनाभ महाभुज ॥ ५७
आत्मभूतमहाभूत धर्मात्मञ्जय सर्वदा ॥ ५७॥
क्षितिः [2]पादोद्भवा देव दिग्बाहुर्द्यौर्महाशिरः ।

---

1. ग—महोरगशयानाद्य हरे शेष विभो जय ।
ख—महोरगवराभोग शवशेष विभो जय ।
घ—महोरववरागाद्य हरिकेश विभो जय ।
2. ग-ब-ङ-म—पादो नभो नाभिर् दिग्बाहू द्यौर्

मूर्तिस्तेऽहं सुराः कायश् चन्द्रादित्यौ च चक्षुषी ॥ ५८॥

बलं तपश्च सत्यं च धर्मः कामस्तवात्मजाः ।
तेजोऽग्निः पवनश्श्वास आपस्ते स्वेदसम्भवाः ॥ ५९॥

अश्विनौ श्रवणौ देव जिह्वा देवी सरस्वती ।
वेदास्संस्कारनिष्ठा हि त्वयीदं जगदास्थितम् ॥ ६०॥

न सङ्ख्यां न परीमाणं न तेजो न पराक्रमम् ।
न बलं योगयोगेश विजानीमः परन्तप ॥ ६१॥

त्वद्भक्तिनिरता देव नियमस्थास्समाहिताः ।
अर्चयामस्सदा विष्णुं परमेशं महेश्वरम् ॥ ६२॥

ऋषयो देवगन्धर्वयक्षराक्षसपन्नगाः ।
पिशाचा मानुषाश्चैव मृगपक्षिनगास्तथा ॥ ६३॥

एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम् ।
पद्मनाभ विशालाक्ष कृष्ण दुस्स्वप्ननाशन ॥ ६४॥

त्वं गतिस्सर्वभूतानां तेनेदं त्वन्मुखं जगत् ।
त्वत्प्रसादेन देवेश सुखिनो विबुधास्सदा ॥ ६५॥

पृथिवी निर्भया देव त्वत्प्रसादाद्भविष्यति ।
तस्माद्भव विशालाक्ष यदुवंशविवर्धनः ॥ ६६॥

धर्मसंस्थापनार्थाय दैतेयानां वधाय च ।

जगतो रक्षणार्थाय प्रसादं कुरु मे प्रभो ॥ ६७॥

यत् तत् परमकं गुह्यं त्वत्प्रसादमयं विभो ।
वासुदेव तदेवं तु मया गीतं यथातथम् ॥ ६८॥

सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना ।
सृज त्वमात्मना कृष्ण प्रद्युम्नं चात्मसम्भवम् ॥ ६९॥
प्रद्युम्नादनिरुद्धं च यं प्राहुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजत् साम्बं ब्रह्माणं लोकधारिणम् ॥ ७०॥

वासुदेवमयस्सोऽहं त्वयैवास्मि विनिर्मितः ।
वासुदेवेति तं विद्याद् येनाहं निर्मितः प्रभो ॥ ७१॥
तस्माद्याचामि लोकेश चतुरात्मानमात्मना ।
विभज्य भागमात्मानं व्रज वै मानुषीं तनुम् ॥ ७२॥

तत्रासुरवधं कृत्वा सर्वलोकसुखाय वै ।
धर्मं प्राप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः ॥ ७३॥

ततो दिशश्च लोकाश्च देवाश्चामितविक्रम ।
तैस्तैश्च नामभिर्भक्ता गायन्ति परमात्मकम् ॥ ७४॥
सर्वभूतेश्वरं देवं योगयोगेश्वरं विभुम् ॥ ७५

स्थिताश्च सर्वे त्वयि भूतसङ्घाः
कृत्वाऽऽश्रयं त्वां वरदं सुबाहो ।

अनादिमध्यान्तमपारयोगं
लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ६४ ॥ भीष्मवधपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ७६ श्लोकाः ]

---

## ॥ एकषष्टितमोऽध्यायः ॥

विश्वोपाख्यानम् ॥

---

भीष्मः—

ततस्स भगवान् देवो लोकानां परमेश्वरः ।
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ १

विदितं तत् तु लोकात्मन् सर्वं तु तव चेप्सितम् ।
तथा तद्भवतीत्युक्त्वा तत्रैवान्तरधीयत ॥ २

ततो देवर्षिगन्धर्वा विस्मयं परमं गताः ।
कौतूहलपरास्सर्वे प्रजापतिमथाब्रुवन् ॥ ३

देवर्षिगन्धर्वाः—

को न्वयं यो भगवता प्रणम्य विनयाद्विभो ।
वाग्भिस्स्तुतो वरिष्ठाभिश् श्रोतुमिच्छाम तं वयम् ॥ ४

भीष्मः—

एवमुक्तस्स भगवान् प्रत्युवाच पितामहः ।
देवब्रह्मर्षिगन्धर्वान् सर्वान् मधुरया गिरा ॥ ५

ब्रह्मा—

यत्तत् परं भविष्यं च भवितव्यं च यत् परम् ।
भूतात्मा यः प्रभुश्चैव ब्रह्मवर्चः परं पदम् ॥ ६
तेनाहं कृतसंवादः प्रसन्नेन सुरर्षभाः ।
जगतोऽनुग्रहार्थाय याचितो वै जगत्पतिः ॥ ७
मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः ।
असुराणां वधार्थाय सम्भवस्व महीतले ॥ ८
सङ्ग्रामे निहता ये च दैत्यदानवराक्षसाः ।
त इमे नृषु सम्भूता घोररूपा महाबलाः ॥ ९
तेषां वधार्थं भगवान् नरेण सहितो वशी ।
मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ १०
नरनारायणावेतौ पुराणावृषिसत्तमौ ।
सम्भूतौ मानुषे लोके सहितावमितद्युती ॥ ११
अजेयौ हि रणे यत्तौ सहितावमरैरपि ।
मूढास्त्वेतौ न जानन्ति नरनारायणावृषी ॥ १२
यस्याहमात्मजो ब्रह्मा सर्वस्य जगतः पतिः ।

वासुदेवोऽर्चनीयो वै सर्वलोकमहेश्वरः ॥ १३

न वै मनुष्योऽयमिति कदाचित् सुरसत्तमाः ।
अवज्ञेयो महावीर्यश् शङ्खचक्रगदाधरः ॥ १४

एतत् पुरुषसंज्ञं वै पुराणं रूपमुत्तमम् ।
एतत् परमकं गुह्यं एतत् परमकं यशः ॥ १५

एतत् परमकं ब्रह्म एतत् परमकं महः ।
एतदक्षरमव्यक्तम् एतद्वै शाश्वतं महः ॥ १६

एतत् पुरुषसंज्ञं तु हीयते जायते न च ।
एतत् परमकं धाम एतत् परमकं सुखम् ॥ १७

एतत् परमकं सत्यं कीर्तितं विश्वकर्मणा ॥ १७॥

तस्मात् सेन्द्रैस्सुरैस्सार्धं लोकैश्चामितविक्रमः ।
नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभुः ॥ १८॥

यश्च मानुषमात्रोऽयम् इति ब्रूयात् स मन्दधीः ।
हृषीकेशमविज्ञाय तमाहुः तामसात्मकम् ॥ १९॥

यो योगिनं महात्मानं प्रविष्टं मानुषीं तनुम् ।
अवमन्येद्वासुदेवं तमाहुस्तामसं जनाः ॥ २०॥

वासुदेवं जगद्वन्द्यं श्रीवत्साङ्कं सुवर्चसम् ।
पद्मनाभं न जानन्ति तमाहुस्तामसं जनाः ॥ २१॥

किरीटकौस्तुभधरं मित्राणामभयप्रदम् ।

अवजानन् महात्मानं घोरे तमसि मज्जति ॥ २२॥

एवं विदिततत्त्वार्थो लोकानामीश्वरेश्वरः ।
[1]वासुदेवो नमस्कार्यो लोकैस्सर्वैस्सुरोत्तमाः ॥ २३॥

तस्याहमात्मजो ब्रह्मा सर्वस्य जगतः प्रभुः ॥ २४

भीष्मः—

एवमुक्त्वा स भगवान् देवान् सर्षिगणान् पुरा ।
विसृज्य सर्वभूतानि जगाम भवनं स्वकम् ॥ २५

ततो देवास्सगन्धर्वा मुनयोऽप्सरसोऽपि च ।
कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः ॥ २६

एतच्छ्रुतं मया तात मुनीनां भावितात्मनाम् ।
वासुदेवं कथयतां समवाये पुरातनम् ॥ २७

रामस्य जामदग्न्यस्य मार्कण्डेयस्य धीमतः ।
व्यासनारदयोश्चापि श्रुतं श्रुतवतां वर ॥ २८

एतमर्थं च विज्ञाय श्रुत्वा च प्रभुमव्ययम् ।
वासुदेवं महात्मानं लोकानामीश्वरेश्वरम् ॥ २९

[2]जानामि भरतश्रेष्ठ कृष्णं नारायणं प्रभुम् ॥ २९॥

---

1. अ-क-ग—यो जानाति पुमांल्लोके स धीमान् पुरुषस्स्मृतः ।
तस्माद्विभुस्सुरश्रेष्ठः परमात्मा सनातनः ॥ [अधिकः पाठः]

2. ख-घ-म—इदमर्धं नास्ति

यस्यासीदात्मजो ब्रह्मा सर्वस्य जगतः पिता ।
कथं न वासुदेवोऽर्च्यस् सेव्यश्चैवेह मानवैः ॥ ३०॥

वारितोऽसि पुरा तात मुनिभिर्वेदपारगैः ।
मा गास्त्वं वासुदेवेन विग्रहं तेन धीमता ॥ ३१॥

मा तात पाण्डवैस्सार्धं तच्च मोहान्न बुध्यसे ॥ ३२

[1–2]मन्ये त्वां राक्षसं क्रूरम् अथवा तामसात्मकम् ।
यस्माद्द्विषसि गोविन्दं पाण्डवं च धनञ्जयम् ॥ ३३

नरनारायणौ देवौ कोऽन्यो द्वेष्टा हि मानवः ॥ ३३॥

तस्माद्ब्रवीमि ते राजन्नेष वै शाश्वतोऽव्ययः ।
सर्वलोकमयो नित्यश् शास्ता धाता धरो ध्रुवः ॥ ३४॥

यो धारयति लोकांस्त्रींश् चराचरगुरुः प्रभुः ।
योद्धा जयश्च यो धाता सर्वप्रकृतिरीश्वरः ॥ ३५॥

राजन् सत्त्वमयो ह्येष तमोरागविवर्जितः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ३६॥

तस्य माहात्म्ययोगेन योगेनात्मबलेन च ।
धृताः पाण्डुसुता राजञ् जयश्चैषां भविष्यति ॥ ३७॥

---

1. अ–क–ग—अशक्यं कर्तुमुद्यकस्तच्च मोहान्न बुध्यसे । [ अधिकः पाठः]
2. अ–क–ग–म—अर्जुनश्च तथाऽजेयश् शाश्वतोऽव्यय अच्युतः ।
कृष्णस्तु परमात्मा च भूतभव्यभवत्प्रभुः ।
[ अधिकः पाठः ].

श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां ददाति सः ।
बलं चैव रणे नित्यं भयेभ्यश्चैव रक्षति ॥ ३८॥

स एष शाश्वतो देवस् सर्वगुह्यमयश्शिवः ।
वासुदेव इति ख्यातो यन्मां त्वं पृष्टवानसि ॥ ३९॥

[1]स एष कृष्णः कौरव्य पाण्डवार्थमिहागतः ॥ ४०

ब्राह्मणैः क्षत्रियैर्वैश्यैश् शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ॥ ४१

द्वापरस्य युगस्यान्ते चादौ कलियुगस्य च ।
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥ ४२

कृष्णेति नाम्ना विख्यात इमं लोकं स रक्षति ॥ ४२॥

स एष सर्वामरमर्त्यलोकं
समुद्रकक्ष्यान्तरिताः पुरीश्च ।
युगे युगे मानुषं चैव वासं
पुनः पुनस्सृजते वासुदेवः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

## ॥ द्विषष्टितमोऽध्यायः ॥

भीष्मेण विश्वोपाख्यानकथने वासुदेवमाहात्म्यकथनम् ॥ १ ॥ युधिष्ठिरस्य कृष्णसमाश्रयणेन विजय इति कथनम् ॥ २ ॥

दुर्योधनः—

वासुदेवो महद्भूतं सर्वलोके गुरुश्च यः ।
तस्यागमं प्रतिष्ठां च श्रोतुमिच्छे पितामह ॥ १

भीष्मः—

वासुदेवो महद्भूतं सम्भूतमिह दैवतम् ।
[1]न परं पुण्डरीकाक्षाद् दृश्यते भरतर्षभ ॥ २

श्रुतं मे तात रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ ३

असितो देवलश्चापि वालखिल्यास्तपोधनाः ।
मार्कण्डेयश्च गोविन्दं कथयत्यद्भुतं महत् ॥ ४

सर्वभूतादिभूतात्मा महात्मा पुरुषोत्तमः ।
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ॥ ५

स सृष्ट्वा पृथिवीं देवीं सर्वलोकेश्वरः प्रभुः ।
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः ॥ ६

1. अ-क-ग—न वरं सदृशं भूतं वासुदेवस्य धीमतः । [ अधिकः पाठः ]

सर्वदेवमयो देवश् शयानश्शयने सुखम् ।
मुखतस्सोऽग्निमसृजत् प्राणाद्वायुमथापि च ॥ ७
सरस्वतीं च वेदांश्च वासुदेवो महायशाः ।
एष लोकान् ससर्जादौ देवानृषिगणैस्सह ॥ ८
निधनं चैव मृत्युं च प्रजानां प्रभवाप्ययौ ॥ ८॥
एष धर्मश्च धर्मज्ञो वरदस्सर्वकामदः ।
एष कर्ता च कार्यं च आदेरादिस्स्वयं प्रभुः ॥ ९॥
भूतं भव्यं भविष्यच्च पूर्वमेतदकल्पयत् ।
उभे सन्ध्ये दिवः खं च नियमांश्च जनार्दनः ॥ १०॥
ऋषींश्चैवापि गोविन्दस् तपश्चैवमकल्पयत् ॥ ११
[1]स्रष्टा यो जगतश्चापि महात्मा प्रभुरव्ययः ।
अग्रजस्सर्वभूतानां सङ्कर्षणमकल्पयत् ॥ १२
शेषं चाकल्पयद्देवम् अनन्तमिति यं विदुः ॥ १२॥
यो धारयति भूतानि धरां चेमां सपर्वताम् ।
ध्यानयोगेन विप्राश्च तं विदन्ति महौजसः ॥ १३॥
कर्णस्रोतोभवश्चापि मधुर्नाम महासुरः ।
तमुग्रमुग्रकर्माणम् उग्रबुद्धिं समाश्रितम् ॥ १४॥
[2]हरन्तं ब्रह्मणो वेदान् जघान ब्रह्मणः पिता ॥ १५

1. ख—अर्धद्वयं नास्ति 2. अ-क-ख—नास्तीदमर्धम्

ब्रह्मणोऽपचितिं कुर्वन् महात्मा पुरुषोत्तमः ॥ १५॥

तस्य तात वधादेव देवदानवमानवाः ।
मधुसूदनमित्याहुर् ऋषयश्च जनार्दनम् ॥ १६॥

वराहं नारसिंहं च त्रिविक्रममिति प्रभुम् ॥ १७

एष धाता विधाता च सर्वेषां प्राणिनां प्रभुः ।
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ॥ १८

असृजन्मुखतो विप्रान् बाहुभ्यां क्षत्रियांस्तथा ।
वैश्यांश्चाप्यूरुतो राजञ् शूद्रान् पद्भ्यां तथैव च ॥ १९

[1]तपसा नियतं देवम् ईशानं सर्वदेहिनाम् ।
ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ॥ २०

योगभूतं परिचरन् केशवं महदाप्नुयात् ॥ २०॥

केशवः परमं तेजस् सर्वलोकपितामहः ॥ २१

एवमाहुर्हृषीकेशं मुनयो वै नराधिप ।
एवमेनं विजानीहि आचार्यं पितरं गुरुम् ॥ २२

कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः ॥ २२॥

यश्चैनं वै भयस्थाने केशवं शरणं व्रजेत् ।
अध्यायं शृणुयाच्चैनं स्वस्तिमान् स भवेन्नरः ॥ २३॥

1. व—नास्तीदमर्धम्

ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ।
भये महति मग्नांश्च त्राति नित्यं जनार्दनः ॥ २४॥
एतद्युधिष्ठिरो ज्ञात्वा याथातथ्येन भारत ।
सर्वात्मानं महात्मानं केशवं जगदीश्वरम् ॥ २५॥
प्रपन्नश्शरणं राजन् योगिनामीश्वरं प्रभुम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

---

भीष्मेण दुर्योधनं प्रति ब्रह्मर्षिकृतकृष्णस्तवकथनम् ॥ १ ॥ तथा कृष्णस्य पाण्डवेषु प्रीतिकथनपूर्वकं तैः सह शमकरणविधानम् ॥ २ ॥

---

भीष्मः—

स्तवं वै ब्रह्मसंयुक्तं शृणु कृष्णस्य भारत ।
ब्रह्मर्षिभिश्च देवैश्च पुरा यः कथितो भुवि ॥ १
साध्यानामपि देवानां देवदेवेश्वरं प्रभुम् ।
लोकभावनभावज्ञं विदित्वा नारदोऽब्रवीत् ॥ २

नारदः—

भूतं भव्यं भविष्यच्च मार्कण्डेयोऽभ्युवाच ह ।
यज्ञानामपि यज्ञश्च तपश्च तपसामपि ॥ ३

देवानामपि देवं च त्वामाह भगवान् भृगुः ।
[1]पुराणे वैभवं रूपं विष्णोऽभूत्तव चेति वै ॥ ४
[2]वासुदेवो वसूनां त्वं शक्रं स्थापयिता तदा ॥ ४॥
देवदेवोऽसि देवानाम् इति द्वैपायनोऽब्रवीत् ॥ ५
पूर्वे प्रजानिसर्गे च दक्षमाहुः प्रजापतिम् ।
स्रष्टारं सर्वभूतानाम् अङ्गिरास्त्वामथाऽब्रवीत् ॥ ६
अव्यक्तं ते शरीरस्थं व्यक्तं ते मनसि स्थितम् ।
देवानां सम्भवश्चेति देवलस्त्वसितोऽब्रवीत् ॥ ७
शिरसा ते दिवं व्याप्तं बाहुभ्यां धरणी धृता ।
जठरं ते त्रयो लोकाः पुरुषस्त्वं सनातनः ॥ ८
देवास्त्वामभिजानन्ति तपसा भावितास्सदा ॥ ८॥
आत्मदर्शनतृप्तानाम् ऋषीणामृषिसत्तम ।
राजर्षीणामुदाराणाम् आहवेष्वनिवर्तिनाम् ॥ ९॥
सर्वभूतप्रधानानां गतिस्त्वं पुरुषोत्तम ॥ १०
एतद्द्वैपायनः प्राह स्तुत्वा वै पुरुषोत्तमम् ।
एतद्विस्तरतश्चापि संक्षेपाच्च प्रकीर्तितः ॥ ११

---

1. अ-क-ग—स्तवमेतं च कृष्णस्य ह्यसितो देवलोऽब्रवीत् ।
[ अधिकः पाठः ]
2. अ-क-ग-ङ—महिमा चैव गोविन्द विश्रुतः पृथिवीतले ।
[ अधिकः पाठः ]

केशवस्य यथातत्त्वं सुप्रीतो भव केशवे ॥ ११॥

सञ्जयः—

एतच्छ्रुत्वा तु वचनं भीष्मस्य तनयस्तव ।
केशवं बहुमेने च पाण्डवांश्च महारथान् ॥ १२॥
तमब्रवीन्महाराज भीष्मश्शान्तनवस्तदा ॥ १३

भीष्मः—

माहात्म्यं ते श्रुतं राजन् केशवस्य महात्मनः ।
नरस्य च यथातत्त्वं यन्मां त्वं परिपृच्छसि ॥ १४
यदर्थं नृषु सम्भूतौ नरनारायणावुभौ ।
अवध्यौ च यथा वीरौ संयुगेष्वपराजितौ ॥ १५
यथा च पाण्डवा राजन् न वध्या युधि कस्यचित् ॥ १५॥
[1]प्रीतिमान् हि यथा कृष्णः पाण्डवेषु महात्मसु ।
तस्माद्ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः ॥ १६॥
पृथिवीं भुङ्क्ष्व सहितो भ्रातृभिर्बलिभिर्वशी ।
नरनारायणौ देवाववज्ञाय विनङ्क्ष्यसि ॥ १७॥

सञ्जयः—

एवमुक्त्वा पिता गुह्यं तूष्णीमासीद्विशां पते ।
व्यसर्जयच्च राजानं शयनं च विवेश ह ॥ १८॥

1. अ-क-ग—कृष्णेन रक्षिता युद्धे यत्नेनापि हितैषिणा । [अधिकः पाठः]

राजा च शिबिरं प्रायात् प्रणिपत्य महात्मने ।
शिश्ये च शयने शुभ्रे तां रात्रिं भरतर्षभ ॥ १९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये १९॥ श्लोकाः]

---

## ॥ चतुष्षष्टितमोऽध्यायः ॥

कुरुपाण्डवयोर्मकरश्येनव्यूहरचनापूर्वकं युद्धारम्भः ॥

---

सञ्जयः—

तस्यां रात्र्यां व्यतीतायां निर्ययुः कुरुपुङ्गवाः ।
पुरस्कृत्य महात्मानं भीष्मं शान्तनवं युधि ॥ १
अभ्यधावन्त सङ्क्रुद्धाः परस्परजिघांसवः ।
सर्वे ते सहिता राजन् समालोक्य परस्परम् ॥ २
पाण्डवा धार्तराष्ट्राश्च राजन् दुर्मन्त्रिते तव ।
व्यूहौ च व्यूह्य संरब्धास् सम्प्रक्रुद्धाः प्रहारिणः ॥ ३
अरक्षन् मकरव्यूहं भीष्मो राजन् समन्ततः ।
तथैव पाण्डवा राजन्नरक्षन् व्यूहमात्मनः ॥ ४
अजातशत्रुश्शत्रूणां मनांसि समकम्पयत् ।

श्येनवद्व्यूह्य तं व्यूहं धौम्यस्य वचनात् स्वयम् ॥ ५
[1]स हि तस्य सुविज्ञात अग्निचित्येषु भारत ।
मकरस्तु महाव्यूहस् तव पुत्रस्य धीमतः ॥ ६
स्वयं सर्वेण सैन्येन द्रोणेनानुमतस्तदा ।
यथाव्यूहं शान्तनवस् सोऽन्ववर्तत तत् पुनः ॥ ७
स निर्ययौ महानीकात् पिता देवव्रतस्तव ।
महता रथवंशेन संवृतो बलिनां वरः ॥ ८
इतरे त्वन्वयुस्सर्वे यथास्थानमवस्थिताः ।
रथिनः पत्तयश्चापि दन्तिनस्सादिनस्तथा ॥ ९
तान् दृष्ट्वा द्रवतस्सङ्ख्ये पाण्डवा अपि भारत ।
श्येनव्यूहेन संव्यूह्य समनह्यन्त संयुगे ॥ १०
अशोभत मुखे तस्य भीमसेनो महाबलः ।
नेत्रे शिखण्डी दुर्धर्षो धृष्टद्युम्नश्च पार्षतः ॥ ११
शीर्षे तस्याभवद्वीरस् सात्यकिस्सत्यविक्रमः ।
विधून्वन् गाण्डिवं पार्थो ग्रीवायामभवत् तदा ॥ १२
[2]अक्षौहिण्या समग्राया वामपक्षोऽभवत् तदा ।
महात्मा द्रुपदश्श्रीमान् मत्स्येन सह संयुगे ॥ १३
दक्षिणे चाभवत् पक्षे कैकेयोऽक्षौहिणीपतिः ।

1. ब—अर्धद्वयं नास्ति 2. ब—नासीदमर्धम्

पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्यवान् ॥ १४
पुच्छे समभवच्छ्रीमान् स्वयं राजा युधिष्ठिरः ।
भ्रातृभ्यां सहितो वीरो यमाभ्यां चारुविक्रमः ॥ १५
प्रविश्य च तदा भीमो मकरस्सागरं यथा ।
भीष्ममासाद्य सङ्ग्रामे च्छादयामास सायकैः ॥ १६
ततो भीष्मो महास्त्राणि पातयामास संयुगे ।
मोहयन् पाण्डुपुत्राणां व्यूढं सैन्यं महारणे ॥ १७
सम्मुह्यमाने सैन्ये तु त्वरमाणो धनञ्जयः ।
भीष्मं शरसहस्रेण विव्याध रणमूर्धनि ॥ १८
प्रतिसंवार्य चास्त्राणि भीष्ममुक्तानि संयुगे ।
स्वेनानीकेन हृष्टेन युद्धाय समुपस्थितः ॥ १९
ततो दुर्योधनो राजा भारद्वाजमभाषत ।
पूर्वं दृष्ट्वा क्षयं घोरं बलस्य बलिनां वरः ॥ २०
भ्रातॄणां च वधं युद्धे स्मरमाणो महारथः ॥ २०॥

दुर्योधनः—

आचार्य सततं त्वं हि हितकामो भवान् मम ॥ २१
वयं हि त्वां समाश्रित्य भीष्मं चैव पितामहम् ।
देवानपि रणे जेतुं प्रार्थयामो न संशयः ॥ २२
किमु पाण्डुसुतान् युद्धे हीनवीर्यपराक्रमान् ॥ २२॥

सञ्जयः—

एवमुक्तस्ततो द्रोणस् तव पुत्रेण भारत ।
उवाच तत्र राजानं सङ्क्रुद्ध इव निश्वसन् ॥ २३॥

द्रोणः—

बालिशस्त्वं न जानीषे पाण्डवानां पराक्रमम् ।
न शक्या हि यथा जेतुं पाण्डवा हि महाबलाः ॥ २४॥
यथाबलं यथावीर्यं कर्म [1]कुर्यामहं हि ते ॥ २५

सञ्जयः—

इत्युक्त्वा ते सुतं राजन्नाभ्यपद्यत वाहिनीम् ।
अभिनत् पाण्डवानीकं प्रेक्षमाणस्य सात्यकेः ॥ २६
सात्यकिस्तु ततो द्रोणं वारयामास भारत ।
तयोः प्रववृते युद्धं घोररूपं भयावहम् ॥ २७
शैनेयं तु रणे क्रुद्धो भारद्वाजः प्रतापवान् ।
अविध्यन्निशितैर्बाणैर् जत्रुदेशे स्मयन्निव ॥ २८
भीमसेनस्ततः क्रुद्धो भारद्वाजमयुध्यत ।
संरक्षन् सात्यकिं राजन् द्रोणाच्छस्त्रभृतां वरात् ॥ २९
ततो द्रोणश्च भीष्मश्च तथा शल्यश्च भारत ।
भीमसेनं रणे क्रुद्धाश् छादयाञ्चक्रिरे शरैः ॥ ३०

1. घ-ङ-म—कुर्याम भारत

अथाभिमन्युस्सङ्क्रुद्धो द्रौपदेयाश्च भारत ।
[1]विव्यधुर्निशितैर्बाणैस् सर्वांस्तानुद्यतायुधान् ॥ ३१

द्रोणभीष्मौ शरैः क्रुद्धाशू छादयन्ति समन्ततः ॥ ३१॥

प्रत्युद्ययौ शिखण्डी च महेष्वासो महाहवे ।
प्रगृह्य बलवद्वीरो धनुर्जलदनिस्स्वनम् ॥ ३२॥

अभ्यवर्षच्छरैस्तूर्णं छादयानो दिवाकरम् ॥ ३३

शिखण्डिनं समासाद्य भरतानां पितामहः ।
अवर्जयत सङ्ग्रामं स्त्रीत्वं तस्यानुसंस्मरन् ॥ ३४

ततो द्रोणो महेष्वासश् शिखण्डिनमभिद्रवत् ।
रक्षमाणो रणे भीष्मं तव पुत्रेण चोदितः ॥ ३५

शिखण्डी तु समासाद्य द्रोणं शस्त्रभृतां वरम् ।
अवर्जयत सन्त्रस्तो युगान्ताग्निमिवोत्थितम् ॥ ३६

ततो बलेन महता पुत्रस्तव विशां पते ।
जुगोप भीष्ममासाद्य प्रार्थयानो महद्यशः ॥ ३७

तथैव पाण्डवा राजन् पुरस्कृत्य धनञ्जयम् ।
भीष्ममेवाभ्यवर्तन्त जये कृत्वा दृढां मतिम् ॥ ३८

1. अ-क-ख—नास्तीदमर्धम्

तद्युद्धमभवद्घोरं देवानां दानवैरिव ।
जयमाकाङ्क्षतां युद्धे यशश्च सुमहद्रणे ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ॥ पञ्चषष्टितमोऽध्यायः ॥

संकुलयुद्धवर्णनम् ॥

---

सञ्जयः—

अकरोत् तुमुलं युद्धं भीष्मश्शान्तनवस्तदा ।
भीमसेनभयाच्चैव पुत्रांस्तारयितुं तव ॥ १

पूर्वाह्णे तस्य रौद्रस्य अह्नो युद्धमवर्तत ।
कुरूणां पाण्डवानां च मुख्यशूरविनाशनम् ॥ २

तस्मिन्नाकुलसङ्ग्रामे वर्तमाने भयानके ।
अभवत् तुमुलश्शब्दस् संस्पृशन् गगनं महत् ॥ ३

नदद्भिश्च महानागैर् हेषमाणैश्च वाजिभिः ।
भेरीशङ्खमृदङ्गैश्च तुमुलस्समपद्यत ॥ ४

युयुत्सवस्ते सङ्क्रुद्धा विजयाय महीक्षितः ।

अन्योन्यमभिगर्जन्ति गोष्ठेष्विव महर्षभाः ॥ ५

शिरसां पात्यमानानां समरे निशितैश्शरैः ।
अश्मवृष्टिरिवाकाशे बभूव भरतर्षभ ॥ ६

कुण्डलोष्णीषधारीणि जातरूपोज्ज्वलानि च ।
पतितानि स्म दृश्यन्ते शिरांसि भरतर्षभ ॥ ७

विशिखोन्मथितैर्गात्रैर् बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणैश्चान्यैर् अभवच्छादिता मही ॥ ८

कवचोपहितैर्गात्रैर् हस्तैश्च समलङ्कृतैः ।
[1]मुखैश्च चन्द्रसंकाशै रक्तान्तनयनैश्शुभैः ॥ ९

गजवाजिमनुष्याणां सर्वगात्रैश्च भूषितैः ।
आसीत् सर्वा समाकीर्णा मुहूर्तेन वसुन्धरा ॥ १०

रजोमेघैश्च तुमुलैश् शस्त्रविद्युत्प्रकाशितैः ।
आयुधानां च निर्घोषस् स्तनयित्नुसमोऽभवत् ॥ ११

स सम्प्रहारस्तुमुलः कटुकश्शोणितोदकः ।
प्रावर्तत कुरूणां च पाण्डवानां च भारत ॥ १२

तस्मिन् महाहवे घोरे तुमुले रोमहर्षणे ।

---

1. अ-क-ग—शिरोभिर्दन्तदष्टोष्ठैरुद्गीर्णनयनैर्मही ।
व्याप्ता चासीन्महाराज व्याप्ता पद्मोत्करैरिव ॥
[ पाठान्तरम् ]

प्रावर्षन् शरवर्षाणि क्षत्रिया रुधिराणि च ॥ १३

प्राक्रोशन् कुञ्जरास्तत्र शरवर्षप्रतापिताः ।
तावकानां परेषां च संयुगे भरतर्षभ ॥ १४

[1]संरब्धानां च वीराणां शूराणामनिवर्तिनाम् ।
धनुर्ज्यातलशब्देन न प्राज्ञायत किञ्चन ॥ १५

उत्थितेषु कबन्धेषु सर्वतश्शोणितोदके ।
समरे पर्यधावन्त नृपा रिपुवधोद्यताः ॥ १६

शरशक्तिगदाभिस्ते खड्गैश्चामिततेजसः ।
निजघ्नुस्समरे सेनाम् अन्योन्यस्य परन्तपाः ॥ १७

बाहूनामुत्तमाङ्गानां कार्मुकाणां च भारत ।
गदानां परिघाणां च हस्तानां चोरुभिस्सह ॥ १८

पादानां भूषणानां च केयूराणां च सङ्घशः ।
राशयस्स्म प्रदृश्यन्ते भीष्मभीमसमागमे ॥ १९

बभूवुः कुञ्जरास्तत्र शरैर्विद्धास्सहस्रशः ।
अश्वाश्च पर्यधावन्त परस्परवधैषिणः ॥ २०

हतारोहा दिशो जग्मुश् शरघातप्रपीडिताः ॥ २०॥

तावकानां परेषां च योधानां राजसत्तम ।
अश्वानां कुञ्जराणां च रथानां च वरूथिनाम् ॥ २१॥

---

1. अ-क-ख-ग—एकादशार्धानि न सन्ति

राशयस्स्म प्रदृश्यन्ते तत्र तत्र विशां पते ॥ २२

गदाभिः परिघैः प्रासैर् बाणैस्सन्नतपर्वभिः ।

जघ्नुः परस्परं तत्र क्षत्रियाः कालचोदिताः ॥ २३

अपरे बाहुभिर्वीरा नियुद्धकुशला युधि ।

बाहुभिस्समसज्जन्त आयसैः परिघैरिव ॥ २४

मुष्टिभिर्जानुभिश्चैव तलैश्चैव विशां पते ।

[1]अन्योन्यं जघ्निरे वीरास् तावकाः पाण्डवैस्सह ॥ २५

दुर्योधनमते घोरे अक्षद्यूताभिदेवने ।

भीष्मे युधि पराक्रान्ते भीमसेनेन भारत ॥ २६

प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ।

सेनामध्ये च महती केशशैवलशाद्वला ॥ २७

हतारोहा हया राजन् रथिनो विरथा युधि ।

[2]विचेरुस्तत्र सङ्ग्रामे निस्त्रिंशवरधारिणः ॥ २८

पतितैः पात्यमानैश्च विचेष्टद्भिश्च भूतले ।

[3]घोरमायोधनं जज्ञे तत्र तत्र जनेश्वर ॥ २९

विरथा रथिनश्चात्र निस्त्रिंशवरधारिणः ।

---

1. अ-क-ग—आयुधैर्विविधैर्वाक्यैस्तथा क्रूरातिनिष्ठुरैः। [अधिकः पाठः]

2. अ-क—अन्योन्यं समरे जघ्नुः परस्परवधैषिणः ।
महारथा महाशूरा रथिनो विरथा अपि ॥ [अधिकः पाठः]

3. अ-क-ख-ग—अर्धद्वयं नास्ति

अन्योन्यमभिधावन्ति परस्परवधैषिणः ॥ ३०

ततो दुर्योधनो राजा कलिङ्गैर्बहुभिर्वृतः ।
परिवार्य रणे भीष्मं पाण्डवानभ्यवर्तत ॥ ३१

तथैव पाण्डवास्सर्वे परिवार्य वृकोदरम् ।
भीष्ममभ्यपतन् क्रुद्धा रणे रभसवाहनाः ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

---

## ॥ षट्षष्टितमोऽध्यायः ॥



संकुलयुद्धवर्णनम् ॥

---

सञ्जयः—

दृष्ट्वा भीष्मेण संसक्तान् भ्रातॄनन्यांश्च बान्धवान् ।
समभ्यधावद्गाङ्गेयम् उद्यतास्त्रो धनञ्जयः ॥ १

पाञ्चजन्यस्य निर्घोषं श्रुत्वा वै गाण्डिवस्य च ।
ध्वजं च दृष्ट्वा पार्थस्य सर्वान् नो भयमाविशत् ॥ २

असज्जमानं वृक्षेषु धूमराजिमिवोत्थितम् ।
बहुवर्णं विचित्रं च दिव्यं वानरलक्षणम् ॥ ३

अपश्याम रणे राजन् ध्वजं गाण्डीवधन्वनः ॥ ३॥

सुवर्णपृष्ठं गाण्डीवं रणे द्रक्ष्यामि भारत ।
विद्युतं मेघमध्यस्थां भ्राजमानामिवाम्बरे ॥ ४॥

अश्रौषं च भृशं तत्र पाण्डवस्याभिगर्जतः ।
सुघोरं तलशब्दं च निघ्नतस्तव वाहिनीम् ॥ ५॥

चण्डवातो यथा मेघस् सविद्युत्स्तनयित्नुमान् ।
दिशस्सञ्च्छादयन् सर्वाश् शरवर्षैस्समन्ततः ॥ ६॥

अभ्यधावत गाङ्गेयं भैरवास्त्रो धनञ्जयः ॥ ७

दिशं प्रतीचीं प्राचीं वा न जानीमोऽस्त्रमोहिताः ।
[1]कान्दिग्भूताश्श्रान्तपत्रा हताश्वा हतचेतसः ॥ ८

[2]अन्योन्यमभिसंश्लिष्य योधास्ते भरतर्षभ ।
भीष्ममेवाभ्यलीयन्त सह सर्वैस्तवात्मजैः ॥ ९

तेषामार्तायनमभूद् भीष्मश्शान्तनवो रणे ॥ ९॥

समुपेत्य च वित्रस्ता रथेभ्यो रथिनस्तदा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ॥ १०॥

[3]श्रुत्वा गाण्डीवनिर्घोषं विष्फूर्जितमिवाशनेः ।

---

1. अ-क—नासीदमर्धम्
2. अ-क-ग—योधा दिङ्मोहनादेव दीनवक्त्राः प्रहारिणः ।
प्रकीर्णकेशवक्त्राश्च हताश्वा हतचेतसः ॥ [अधिकः पाठः]
3. अ-क-ग—संपेतुस्सर्वयोधाश्च वित्रस्ताश्शरपीडिताः । [अधिकः पाठः]

सर्वसैन्यानि भीतानि व्यवालीयन्त सर्वशः ॥ ११॥
ततः काम्भोजमुख्याश्च ते हंसपथकर्णिकाः ।
[1]गोपासनबलौघाश्च गोपासनपतिस्तदा ॥ १२॥
मद्रसौवीरगान्धारैस् त्रिगर्तैश्च विशां पते ।
पूर्वकालिङ्गमुख्यैश्च कलिङ्गाधिपतिस्सह ॥ १३॥
नानानरगणौघाश्च दुश्शासनपुरस्सराः ।
जयद्रथश्च नृपतिस् सहितस्तैश्च राजभिः ॥ १४॥
गजारोहवराश्चैव तव पुत्रेण चोदिताः ।
चतुर्दशसहस्राणि सौबलं पर्यवारयन् ॥ १५॥
ततस्ते सहितास्सर्वे विभक्तरथवाहनाः ।
पाण्डवान् समरे जग्मुस् तावका भरतर्षभ ॥ १६॥
चेदिकाशिपदातैश्च रथैः पाञ्चालसृञ्जयैः ।
सहिताः पाण्डवास्सर्वे धृष्टद्युम्नपुरोगमाः ॥ १७॥
तावकान् समरे जघ्नुर् धर्मपुत्रेण चोदिताः ॥ १८
रथैश्च वारणैरश्वैः पदातैश्च समीरितम् ।
घोरमायोधनं जज्ञे महाभ्रसदृशं रजः ॥ १९
तोमरप्रासनाराचैर् गजैश्च गजयोधिनाम् ।
बलेन महता भीष्मस् समासक्तः किरीटिना ॥ २०

1. अ-क—नास्तीदमर्धम्

आवन्त्यः काशिराजेन भीमसेनेन सैन्धवः ।
अजातशत्रुर्मद्राणाम् ऋषभेण यशस्विना ॥ २१

सहपुत्रस्सहामात्यश् शल्येन समसज्जत ।
विकर्णस्सहदेवेन चित्रसेनश्शिखण्डिना ॥ २२

मात्स्यो दुर्योधनमगाच् छकुनिं च विशां पते ।
[1]द्रुपदश्चेकितानश्च सात्यकिश्च महारथः ॥ २३

द्रोणेन समसज्जन्त सपुत्रेण विशां पते ।
[2]कृपश्च कृतवर्मा च धृष्टकेतुमभिद्रुतौ ॥ २४

एवं प्रजविताश्वानि भ्रान्तनागरथानि च ।
सैन्यानि समसज्जन्त प्रयुद्धानि समन्ततः ॥ २५

निरभ्रे विद्युतस्तीव्रा दिशश्च रजसा वृताः ।
प्रादुरासन् महोल्काश्च सनिर्घाता विशां पते ॥ २६

चण्डा बभूवुर्वाताश्च पांसुवर्षं पपात च ।
नभस्यन्तर्दधे सूर्यस् सैन्येन रजसा वृतः ॥ २७

प्रमोहस्सर्वभूतानाम् अद्भुतस्समपद्यत ॥ २७॥

रजसा चाभिभूतानाम् अस्त्रजालैश्च मज्जताम् ।
वीरबाहुविसृष्टानां सर्वावरणभेदिनाम् ॥ २८॥
संघातश्शरजालानाम् अतीव समपद्यत ॥ २९

1. ङ—अर्धद्वयं नास्ति 2. ঘ—अर्धत्रयं नास्ति

प्रकाशं चक्रुराकाशम् उद्यतानि भुजोत्तमैः ।
नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ ॥ ३०

[1]आर्षभाणि विचित्राणि रुक्मजालावृतानि च ।
सम्पेतुर्दिक्षु सर्वासु चर्माणि भरतर्षभ ॥ ३१

सूर्यवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्वशः ।
दिक्षु सर्वास्वदृश्यन्त शरीराणि शिरांसि च ॥ ३२

भग्नचक्राक्षनीडाश्च निपातितमहाध्वजाः ।
हताश्वाः पृथिवीं जग्मुस् तत्र तत्र महारथाः ॥ ३३

परिपेतुर्हयश्रेष्ठा केचिच्छस्त्रकृतव्रणाः ।
राजन् विपरिवर्तन्तो हतेषु रथयोधिषु ॥ ३४

शराहता भग्नगात्रा बद्धयोक्त्रा हयोत्तमाः ।
युगानि पर्यकर्षन्त तत्र तत्र स्म भारत ॥ ३५

अदृश्यन्त ससूताश्च साश्वास्सरथयोधिनः ।
एकेन बलिना राजन् वारणेन हता रणे ॥ ३६

गन्धहस्तिमदस्रावम् आघ्राय बहवो रणे ।
सन्निपाते बलौघानां गजान् ममृदिरे गजाः ॥ ३७

सम्भग्नैश्च महामात्रैर् निपतद्भिर्गतासुभिः ।
बभूवायोधनं छन्नं नाराचाभिहतैर्गजैः ॥ ३८

---

1. अ-ङ—अर्धद्वयं नास्ति

सन्नद्धानां बलौघानां प्रेषितैर्वरवारणैः ।
[1]निपेतुर्युधि सम्भग्नास् सयोधास्सध्वजा रथाः ॥ ३९

नागराजोपमैर्हस्तैर् नागैराक्षिप्य संयुगे ।
अदृश्यन्त रथा राजन् सम्भग्नरथकूबराः ॥ ४०

विकीर्णशरजालाश्च केशेष्वाक्षिप्य दन्तिभिः ।
द्रुमशाखा इवाक्षिप्य निष्पिष्टा रथिनो रणे ॥ ४१

रथेषु च रथान् सक्तान् आक्षिप्य वरवारणाः ।
विक्षिपन्तो दिशस्सर्वास् सम्पेतुस्सर्वशब्दगाः ॥ ४२

तेषां तदा कर्षतां च गजानां रूपमाबभौ ।
सरस्सु नलिनीजालं विषक्तमिव कर्षताम् ॥ ४३

एवं सञ्छादितं तत्र बभूवायोधनं महत् ।
सादिभिश्च पदातैश्च सध्वजैश्च महारथैः ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये ४४ श्लोकाः]

---

1. अ-क-ग—निहता रुधिरोत्सिक्तास् सर्वाङ्गविकलीकृताः ।
[ अधिकः पाठः ]

## ॥ सप्तषष्टितमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

शिखण्डी सह मात्स्येन विराटेन विशां पते ।
भीष्ममेव महेष्वासम् आससाद सुदुर्जयम् ॥ १

द्रोणं कृपं विकर्णं च महेष्वासान् महाबलान् ।
राज्ञश्चान्यान् रणे राजन् बहूनाच्छेद्धनञ्जयः ॥ २

सैन्धवं च सहामात्यं महेष्वासं सबन्धुभिः ।
प्राच्यांश्च दाक्षिणात्यांश्च भूमिपालान् विशां पते ॥ ३

पुत्रं च तव दुर्धर्षं दुर्योधनममर्षिणम् ।
दुष्षहं चैव समरे भीमसेनोऽभ्यवर्तत ॥ ४

सहदेवस्तु शकुनिम् उलूकं च महारथम् ।
[1]पितापुत्रौ महेष्वासौ अभ्यवर्षत् सुदुर्जयौ ॥ ५

युधिष्ठिरो महाराज राजानीकं महारथः ।
समवर्तत सङ्ग्रामे पुत्रेण निकृतस्तव ॥ ६

माद्रीपुत्रस्तु नकुलश् शूरसङ्क्रन्दनो युधि ।

1. अ-क—नास्तीदमर्धम्

[1]त्रिगर्तानां रथोदारैस् समसज्जत पाण्डवः ॥ ७
[2]सात्यकिश्चेकितानश्च सौभद्रश्च महारथः ।
धृष्टकेतुश्च समरे राक्षसश्च घटोत्कचः ॥ ८
अभ्यवर्तन्त सङ्ग्रामे दुर्धर्षान् साल्वकेकयान् ॥ ८॥
नाकुलिश्च शतानीकस् समरे रथपुङ्गवः ।
पुत्राणां ते रथानीकं अभ्यवर्तत दुर्धरः ॥ ९॥
सेनापतिरमेयात्मा धृष्टद्युम्नो महाबलः ।
द्रोणेन समरे राजन् समियायेन्द्रकर्मणा ॥ १०॥
एवमेते महेष्वासास् तावकाः पाण्डवैस्सह ।
समेत्य समरे शूरास् सम्प्रहारं प्रचक्रिरे ॥ ११॥
मध्यंदिनगते सूर्ये प्रतापयति सर्वतः ।
कुरवः पाण्डवेयाश्च निजघ्नुरितरेतरम् ॥ १२॥
ध्वजिनो हेमचित्राङ्गा विचरन्तो रणाजिरे ।
सपताका रथा रेजुर् वैयाघ्रपरिवारणाः ॥ १३॥
समेतानां च समरे जिगीषूणां परस्परम् ।
बभूव तुमुलश्शब्दस् सिंहानामिव नर्दताम् ॥ १४॥
तत्राद्भुतमपश्याम सम्प्रहारं सुदारुणम् ।

1. अ-क—तथा महाबलं धीरं शूरं बाह्लीकमेव च। [अधिकः पाठः]
2. ब—नास्तीदमर्धम्

यदकुर्वन् रणे वीराः कुरवः पाण्डवैस्सह ॥ १५॥

नैव खं न दिशो राजन् न सूर्यश्शत्रुतापन ।
विदिशस्समदृश्यन्त शरैर्मुक्तैस्समन्ततः ॥ १६॥

शक्तीनां विमलाग्राणां तोमराणां तथाऽस्यताम् ।
निस्त्रिंशानां च क्षिप्तानां नीलोत्पलनिभाः प्रभाः ॥ १७॥

कवचानां विचित्राणां भूषणानां तथा प्रभाः ।
खं दिशः प्रदिशश्चैव छादयामासुरोजसा ॥ १८॥

[1]असिभिश्च नरेन्द्राणां चन्द्रसूर्यसमप्रभैः ।
विरराज तथा राजंस् तत्र तत्र रणाङ्गणम् ॥ १९॥

रथसिंहा रथव्याघ्रास् समवेताश्च संयुगे ।
[2]विरेजुस्समरे राजन् ग्रहा इव नभस्स्थले ॥ २०॥

भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलम् ।
अवारयत सङ्क्रुद्धस् सर्वसैन्यस्य पश्यतः ॥ २१॥

ततो भीष्मविनिर्मुक्ता रुक्मपुङ्खाश्शिलाशिताः ।
अभ्यघ्नन् समरे भीमं तैलधौतास्सुतेजसः ॥ २२॥

तस्य शक्तिं महावेगां भीमसेनो महाबलः ।
क्रुद्धाशीविषसङ्काशां प्रेषयामास भारत ॥ २३॥

---

1. ख-ब-रू-म—इदमर्धं नास्ति
2. ख—अत्र विरेजुस्समरे भीममिति वर्तते । मध्ये अर्धचतुष्टयं नास्ति

तामापतन्तीं सहसा रुक्मपुङ्खां सुदारुणाम् ।
चिच्छेद समरे भीष्मश् शरैस्सन्नतपर्वभिः ॥ २४॥
ततोऽपरेण भल्लेन पीतेन निशितेन च ।
कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत ॥ २५॥
अपास्य तु धनुश्छिन्नं भीमसेनो महाबलः ।
शरैर्बहुभिरानच्छेद् भीष्मं शान्तनवं युधि ॥ २६॥
सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे ।
शरैर्बहुभिरानच्छेत् पितरं ते नरेश्वर ॥ २७॥
ततस्संधाय वै तीक्ष्णं शरं परमदारुणम् ।
वार्ष्णेयस्य ततो भीष्मः पातयामास सारथिम् ॥ २८॥
तस्याश्वाः प्रद्रुता राजन् निहते रथसारथौ ।
तेन तेनैव धावन्ति मनोमारुतरंहसः ॥ २९॥
ततस्सर्वस्य सैन्यस्य निस्स्वनस्सुमहानभूत् ।
हाहाकारश्च सञ्जज्ञे पाण्डवानां महात्मनाम् ॥ ३०॥
अभिद्रवत गृह्णीत हयान् यच्छत धावत ।
[1–2]इत्यासीत् तुमुलश्शब्दो युयुधानरथं प्रति ॥ ३१॥

1. अ-क-ग—सात्यकिः पुनरायत्तो युद्धाय कृतनिश्चयः ।
तस्थौ रणे महावीरश् चिकीर्षन्कर्म दुष्करम् ॥
पश्यतां पाण्डुसैन्यानां सात्यकी रणमूर्द्धनि । [अधिकः पाठः]

2. अ-क—नास्तीदमर्धम्

एतस्मिन्नेव काले तु भीष्मश्शान्तनवस्तदा ।
न्यहनत् पाण्डवीं सेनाम् आसुरीमिव वृत्रहा ॥ ३२॥
ते वध्यमाना भीष्मेण पाञ्चालास्सह सोमकैः ।
क्रुद्धा युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ॥ ३३॥
धृष्टद्युम्नमुखाः पार्थाः भीष्मं शान्तनवं रणे ।
अभ्यधावञ्जिघांसन्तः पुत्रस्य तव वाहिनीम् ॥ ३४॥
तथैव तावका राजन् भीष्मद्रोणमुखाः परान् ।
अभ्यधावञ्जिघांसन्तः पाण्डवानां महाचमूम् ॥ ३५॥
तावकानां परेषां च ततो युद्धमवर्तत ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

## ॥ अष्टषष्टितमोऽध्यायः ॥



युद्धवर्णनम् ॥



सञ्जयः—

विराटोऽथ त्रिभिर्बाणैर् भीष्ममार्च्छन्महारथम् ।
विव्याध तुरगांश्चास्य त्रिभिर्बाणैर्महारथः ॥ १
तं प्रत्यविध्यद्दशभिर् भीष्मश्शान्तनवश्शरैः ।

रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः ॥ २
द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः ।
अविध्यदिषुभिष्षड्भिर् दृढहस्तस्तनान्तरे ॥ ३
कार्मुकं तस्य चिच्छेद फल्गुनः परवीरहा ।
अविध्यच्च पुनस्तीक्ष्णैः पत्रिभिश्शत्रुकर्शनः ॥ ४
सोऽन्यत् कार्मुकमादाय वेगवान् क्रोधमूर्च्छितः ।
अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ॥ ५
अविध्यत् फल्गुनं राजन् नवत्या निशितैश्शरैः ।
वासुदेवं च सप्तत्या विव्याध परमेषुभिः ॥ ६
ततः क्रोधाभिताम्राक्षस् सह कृष्णेन फल्गुनः ।
दीर्घमुष्णं च निश्श्वस्य चिन्तयित्वा मुहुर्मुहुः ॥ ७
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ।
गाण्डीवधन्वा सङ्क्रुद्धश् शितान् सन्नतपर्वणः ॥ ८
जीवितान्तकरान् घोरान् समधत्त शिलीमुखान् ॥ ८॥
तैस्तूर्णं समरेऽविध्यद् द्रौणिं बलवतां वरः ।
[1]कवचं घातयामास पुनस्तीक्ष्णैश्शिलीमुखैः ॥ ९॥
तस्य ते कवचं भित्त्वा पपुश्शोणितमाहवे ।
न विव्यथे च निर्भिन्नो द्रौणिर्गाण्डीवधन्वना ॥ १०॥

1. ख-घ-ङ-म—इदमर्धं नास्ति

तथैव च शरान् पार्थे प्रतिमुञ्चन्न विह्वलः ।
तस्थौ च समरे राजंस् त्रातुमिच्छन् महाव्रतम् ॥ ११॥
[1]तस्य तत् सुमहत् कर्म शशंसुः कुरुसत्तमाः ।
यत् कृष्णाभ्यां समेताभ्यां प्रयुध्यन्नात्रसद्युधि ॥ १२॥
स हि नित्यमनीकेषु युध्यतेऽभयमास्थितः ॥ १३
[2]तथाऽर्जुनोऽपि संहृष्ट अश्वत्थामानमाहवे ।
शशंस सर्वभूतानां शृण्वतामपि भारत ॥ १४
अस्त्रग्रामं ससंहारं द्रोणात् प्राप्य सुदुर्लभम् ।
ममायमाचार्यसुतो द्रोणस्यापि प्रियस्सुतः ॥ १५
ब्राह्मणश्च विशेषेण माननीयो ममेति च ॥ १५॥
समास्थाय मतिं धीरो बीभत्सुश्शत्रुतापनः ।
कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति ॥ १६॥
द्रौणिं त्यक्त्वा ततो युद्धे कौन्तेयश्शत्रुतापनः ।
युयुधे तावकान् वीरान् स्मयमानः पराक्रमी ॥ १७॥
दुर्योधनस्तु दशभिर् गृध्रपत्रैश्शिलाशितैः ।
[3]भीमसेनं महेष्वासं रुक्मपुङ्खैस्समार्पयत् ॥ १८॥
भीमसेनस्तु सङ्क्रुद्धः परासुकरणं दृढम् ।

1. अ-क-ग—अकरोत्सुमहत्कर्म युध्यन् गाण्डीवधन्वना । [पाठान्तरम्]
2. ख-घ-ङ-म—इदमर्धद्वयं नास्ति
3. अ-क—नास्तीदमर्धम्

चित्रं कार्मुकमादत्त शरान् सुनिशितान् बहून् ॥ १९॥
आकर्णप्रेषितैस्तैस्तु वेगितैस्तिग्मतेजनैः ।
अविध्यत् तूर्णमव्यग्रः कुरुराजं महोरसि ॥ २०॥
तस्य काञ्चनसूत्रस्थश् शरैः परिवृतो मणिः ।
रराजोरसि खे सूर्यो ग्रहैरिव समावृतः ॥ २१॥
पुत्रस्तु तव तेजस्वी भीमसेनेन ताडितः ।
नामृष्यत यथा नागस् तलशब्दं मदोत्कटः ॥ २२॥
ततश्शरैर्महाराज रुक्मपुङ्खैश्शिलाशितैः ।
भीमं विव्याध सङ्क्रुद्धस् त्रासयानो वरूथिनीम् ॥ २३॥
तौ युध्यमानौ समरे भृशमन्योन्यविक्षतौ ।
पुत्रौ ते देवसङ्काशौ व्यरोचेतां महाबलौ ॥ २४॥
चित्रसेनं नरव्याघ्रं सौभद्रः परवीरहा ।
अविध्यद्दशभिर्बाणैः पुरुमित्रं च सप्तभिः ॥ २५॥
सत्यव्रतं च सप्तत्या विद्ध्वा शक्रसमो युधि ।
नृत्यन्निव रणे वीरः परान् सन्तापयद्रणे ॥ २६॥
तं प्रत्यविध्यद्दशभिश् चित्रसेनश्शिलीमुखैः ।
सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः ॥ २७॥
स विद्धो विक्षरन् रक्तं देहात् सम्भिन्नकङ्कुकात् ।

चिच्छेद चित्रसेनस्य चित्रं कार्मुकमार्जुनिः ॥ २८॥
भित्त्वा तस्य तनुत्राणं शरेणोरस्यताडयत् ॥ २९

ततस्तु तावका वीरा राजपुत्रा महारथाः ।
समेत्य युधि संरब्धा विव्यधुर्निशितैश्शरैः ॥ ३०
तांश्च सर्वान् शरैस्तीक्ष्णैर् जघान परमास्त्रवित् ॥ ३०॥

तस्य दृष्ट्वा तु तत् कर्म परिवव्रुस्सुतास्तव ।
दहन्तं समरे सैन्यं वने कक्षं यथोल्बणम् ॥ ३१॥

अपेतशिशिरे काले समिद्ध इव पावकः ।
अत्यरोचत सौभद्रस् तव सैन्यानि नाशयन् ॥ ३२॥

तत् तस्य चरितं दृष्ट्वा पौत्रस्तव विशां पते ।
लक्ष्मणोऽभ्यपतद्राजन् सात्वतीपुत्रमाहवे ॥ ३३॥

अभिमन्युस्तु सङ्क्रुद्धो लक्ष्मणं शुभलक्षणम् ।
विव्याध विशिखैष्षड्भिस् सारथिं च त्रिभिश्शरैः ॥ ३४॥

तथैव लक्ष्मणो राजन् सौभद्रं निशितैश्शरैः ।
अविध्यत महाराज तदद्भुतमिवाभवत् ॥ ३५॥
[1]सौभद्रस्तु ततः क्रुद्धो लक्ष्मणं निजघान ह ॥ ३६

तस्याश्वांश्चतुरो हत्वा सारथिं च महाबलः ।

1. ख-घ-ङ-म—इदमर्धं नास्ति

[1]अभ्यद्रवत सौभद्रो लक्ष्मणं निशितैश्शरैः ॥ ३७

हताश्वे तु रथे तिष्ठँल्लक्ष्मणः परवीरहा ।
[2]शक्तिं चिक्षेप सङ्क्रुद्धस् सौभद्रस्य रथं प्रति ॥ ३८

तामापतन्तीं सहसा घोररूपां दुरासदाम् ।
अभिमन्युश्शरैस्तीक्ष्णैश् चिच्छेद भुजगोपमाम् ॥ ३९

ततस्स्वरथमारोप्य लक्ष्मणं गौतमस्तदा ।
अपोवाह रथेनाजौ सर्वसैन्यस्य पश्यतः ॥ ४०

ततस्समाकुले युद्धे वर्तमाने भयावहे ।
हयो हयं गजो नागं वीरो वीरं विशां पते ॥ ४१

अभ्यद्रवज्जिघांसन्तं सोऽहन्यत स चावधीत् ॥ ४१॥

तावकाश्च महेष्वासाः पाण्डवाश्च महारथाः ।
जुह्वन्तस्समरे प्राणान् आजघ्नुरितरेतरम् ॥ ४२॥

मुक्तकेशा विकवचा विरथा भिन्नकार्मुकाः ।
बाहुभिस्समयुध्यन्त सृञ्जयाः कुरुभिस्सह ॥ ४३॥

ततो भीष्मो महाबाहुः पाण्डवानां महात्मनाम् ।
सेनां जघान सङ्क्रुद्धो दिव्यैरस्त्रैर्महाबलः ॥ ४४॥

---

1. अ-क—नास्तीदमर्धम् 2. घ—अर्धद्वयं न दृश्यते

हतेश्वरैर्गजैस्तत्र नरैरश्वैश्च पातितैः ।
रथैर्भग्नपताकैश्च समास्तीर्यत मेदिनी ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ४५॥ श्लोकाः]

## ॥ एकोनसप्ततितमोऽध्यायः ॥

भूरिश्रवसा सात्यकिपुत्रदशकवधः ॥ १ ॥ सात्यकिभूरिश्रवसोर्युद्धम् ॥ २ ॥

सञ्जयः—

अथ राजन् महाबाहुस् सात्यकिर्युद्धदुर्मदः ।
विकृष्य चापं समरे भारसाधनमुत्तमम् ॥ १

यत् तत् सख्युस्तु पूर्वेण अर्जुनादुपशिक्षितम् ।
प्रगाढं लघु चित्रं च दर्शयन् हस्तलाघवम् ॥ २

[1]प्रामुञ्चत् पुङ्खसंयुक्तान् शरानाशीविषोपमान् ॥ २॥

तस्य विक्षिपतश्चापं शरानन्यांश्च मुञ्चतः ।
आददानस्य भूयश्च सन्दधानस्य चापरान् ॥ ३॥

क्षिपतश्चापरांस्तत्र रणे शत्रून् विनिघ्नतः ।
ददृशे रूपमत्यर्थं मेघस्येव प्रवर्षतः ॥ ४॥

1. अ-क-ख—नास्तीदमर्धम्

तमुदीर्यन्तमालोक्य राजा दुर्योधनस्ततः ।
रथानामयुतं तत्र प्रेषयामास भारत ॥ ५॥

तांस्तु सर्वान् महेष्वासान् सात्यकिस्सत्यविक्रमः ।
जघान च महेष्वासो दिव्येनास्त्रेण संयुगे ॥ ६॥

स कृत्वा दारुणं कर्म प्रगृहीतशरासनः ।
आससाद ततो वीरो भूरिश्रवसमाहवे ॥ ७॥

स दृष्ट्वा निहतां सेनां सात्यकेन निपातिताम् ।
अभ्यधावदसम्भ्रान्तः कुरूणां कीर्तिवर्धनः ॥ ८॥

इन्द्रायुधसवर्णाभं स विष्फार्य महाधनुः ।
विसृजन् वज्रसङ्काशान् शरानाशीविषोपमान् ॥ ९॥

सहस्रशो महाराज दर्शयन् पाणिलाघवम् ॥ १०
शरांस्तान् मृत्युसंस्पर्शान् सात्यकेस्तु पदानुगाः ।
विषेहिरे न ते राजन् दुद्रुवुश्च समन्ततः ॥ ११
विहाय समरे शूरं सात्यकिं युद्धदुर्मदम् ॥ ११॥

तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः ।
महारथास्समाख्याताश् चित्रवर्मायुधध्वजाः ॥ १२॥

तमासाद्य महेष्वासं भूरिश्रवसमाहवे ।
क्रुद्धास्सर्वे सुसंरब्धा आहुरेवं महाहवे ॥ १३॥

युयुधानपुत्राः—

भो भो कौरवदायाद सहास्माभिर्महाबल ।
आगच्छ युधि युध्यस्व समस्तैः पृथगेव वा ॥ १४॥

अद्य त्वस्मान् पराजित्य यशः प्राप्नुहि संयुगे ।
वयं वा त्वां पराजित्य प्रीतिं दास्यामहे पितुः ॥ १५॥

सञ्जयः—

एवमुक्तस्तथा वीरैर् वीर्यश्लाघी महाबलः ।
तानुवाच नरश्रेष्ठो दृष्ट्वा वै समुपस्थितान् ॥ १६॥

सात्यकिः—

साध्विदं कथ्यते वीरा यद्येवं मतिरद्य वः ।
युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे ॥ १७॥

सञ्जयः—

एवमुक्ता महेष्वासास् तान् वीरान् क्षिप्रकारिणः ।
महता शरवर्षेण अभ्यवर्षदरिन्दमः ॥ १८॥

सोऽपराह्णे महाराज सङ्ग्रामस्तुमुलोऽभवत् ।
एकस्य च बहूनां च समेतानां रणाजिरे ॥ १९॥

तमेकं रथिनां श्रेष्ठं शरैस्ते समवाकिरन् ।
प्रावृषीव महामेरुं सिषिचुर्जलदा यथा ॥ २०॥

तैस्तु त्यक्तान् शरौघांस्तान् यमदण्डाशनिप्रभान् ।
असम्प्राप्तानसम्प्राप्तांश् चिच्छेदाशु महारथः ॥ २१॥

तत्राद्भुतमपश्याम सौमदत्तेः पराक्रमम् ।
यदेको बहुभिर्युद्धे समासददभीतवत् ॥ २२॥
विसृज्य शरवृष्टिं तां दश राजन् महारथाः ।
परिवार्य महाबाहुं निहन्तुमुपचक्रमुः ॥ २३॥
सौमदत्तिस्ततः क्रुद्धस् तेषां चापानि भारत ।
चिच्छेद दशभिर्भल्लैर् निमेषेण महाबलः ॥ २४॥
[1]अथैषां छिन्नधनुषां शरैस्सन्नतपर्वभिः ।
चिच्छेद समरे राजन् शिरांसि भरतर्षभ ॥ २५॥
ते हता न्यपतन् भूमौ वज्रभग्ना इव द्रुमाः ॥ २६
तान् दृष्ट्वा निहतान् वीरान् रणे पुत्रान् महाबलान् ।
वार्ष्णेयोऽभ्यपतद्राजन् भूरिश्रवसमाहवे ॥ २७
रथं रथस्य वेगेन पीडयन् सौमदत्तिनः ॥ २७॥
तावन्योन्यस्य समरे निहत्य रथवाजिनः ।
विरथावभिवल्गन्तौ समेयातां महारथौ ॥ २८॥
प्रगृहीतमहाखड्गौ तौ चर्मवरधारिणौ ।
शुशुभाते नरव्याघ्रौ युद्धाय समुपस्थितौ ॥ २९॥
[2]खड्गप्रहारैस्सुभृशं जघ्नतुश्च परस्परम् ॥ ३०

1. ब-ङ-म—तत्राद्भुतमपश्याम सौमदत्तेः पराक्रमम् ।
एको बहूनां चिच्छेद धनूंषि निशितैश्शरैः ॥ [अधिकः पाठः]

2. ख-ब-ङ-म—इदमर्धचतुष्टयं नास्ति

पीडितौ खड्गघाताभ्यां स्रवद्रक्तौ क्षितौ भृशम् ।
शुशुभाते महावीर्यावुभौ समरदुर्जयौ ॥ ३१

असृगुक्षितसर्वाङ्गौ पुष्पिताविव किंशुकौ ॥ ३१॥

असह्यमसियुद्धाय भूरिश्रवसमाहवे ।
[1]मत्वा वृकोदरस्तूर्णम् अभिप्लुत्य महारथः ॥ ३२॥

ततस्तु सात्यकिं राजन् सनिस्त्रिंशं महारथम् ।
त्वरमाणो रणे भीमो रथमारोपयत् स्वकम् ॥ ३३॥

तथैव तव पुत्रोऽपि भूरिश्रवसमाहवे ।
आरोपयद्रथं तूर्णं स्वं रथं सर्वधन्विनाम् ॥ ३४॥

[2]पश्यतां युधि राजेन्द्र तदद्भुतमिवाभवत् ॥ ३५

तस्मिंस्तथा वर्तमाने रणे भीष्मं महारथम् ।
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ ॥ ३६

लोहितायति चादित्ये त्वरमाणो धनञ्जयः ।
पञ्चविंशतिसाहस्रान् निजघान महारथान् ॥ ३५

ते हि दुर्योधनादिष्टास् तदा पार्थनिबर्हणे ।
ते प्राप्यैव गता नाशं शलभा इव पावकम् ॥ ३८

ततो मात्स्याः केकयाश्च धनुर्वेदविशारदाः ।
परिवव्रू रणे पार्थं सहपुत्रं महारथम् ॥ ३९

---

1. अ-क-ख—अर्धचतुष्टयं नास्ति　　2. घ-ङ-म—नासीदमर्षम्

अस्तं गते तदाऽऽदित्ये तुमुले सङ्कुले भृशम् ।
सर्वेषामेव सैन्यानां प्रमोहस्समजायत ॥ ४०
अपहारं ततश्चक्रे पिता देवव्रतस्तव ।
संध्याकाले महाराज सैन्यानां श्रान्तवाहनः ॥ ४१
पाण्डवानां कुरूणां च परस्परसमागमे ।
ते सेने भृशसंतप्ते ययतुस्स्वं निवेशनम् ॥ ४२
ततस्ते शिबिरं गत्वा न्यविशंस्तत्र भारत ।
पाण्डवास्सृञ्जयैस्सार्धं कुरवश्च यथाविधि ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[अस्मिन्नध्याये ४३ श्लोकाः]
[ पञ्चमापहारस्समाप्तः ]

## ॥ सप्ततितमोऽध्यायः ॥

कुरुपाण्डवयोः क्रौञ्चमकरव्यूहरचनापूर्वकमायोधनम् ॥

सञ्जयः—

विहृत्य तु ततो राजन् सहिताः कुरुपाण्डवाः ।
ततो रात्र्यां व्यतीतायां पुनर्युद्धाय निर्ययुः ॥ १
ततश्शब्दो महानासीत् तव तेषां च भारत ।

[1]गच्छतां पाण्डवानां च सन्नद्धानां दृढात्मनाम् ॥ २

[2]युज्यतां रथमुख्यानां कल्प्यतां चैव दन्तिनाम् ।
संनह्यतां पदातीनां हयानां चैव भारत ॥ ३

[3]सन्नह्यतां रणे योद्धुं दृढकञ्चुकधारिणाम् ।
शङ्खदुन्दुभिनादश्च तुमुलस्सर्वतोऽभवत् ॥ ४

ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत ॥ ४॥

युधिष्ठिरः—

व्यूहं व्यूहस्व पाञ्चाल मकरं शत्रुनाशनम् ॥ ५

सञ्जयः—

एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः ।
[4]मकरं व्यूहमकरोत् पुरा भीष्मेण कारितम् ॥ ६

मकरेण तु संव्यूह्य बलं व्यूहविदां वरः ।
व्यादिदेश यथान्यायं रथिनो रथिनां वरः ॥ ७

शिरोऽभूद्द्रुपदश्चास्य पाण्डवश्च धनञ्जयः ।
[5]चक्षुषी सहदेवश्च नकुलश्च महारथः ॥ ८

1. ख-ग-ङ-म—इदमर्धं नास्ति
2. अ-क-ग—युज्यतां रथमुख्यानां युद्धभाण्डैस्सुशोभनैः ।
अलङ्कृतानां नागानाम् अश्वानां चैव भारत॥ [पाठान्तरम्]
3. ख-घ-ङ-म—इदमर्धं नास्ति
4. ख-घ-ङ-म—इदमर्धद्वयं नास्ति
5. अ-क-ग—शिरस्स्थानगतौ चोभौ तद्दले समरक्षतुः । [अधिकः पाठः]

तुण्डमासीन्महाराज भीमसेनो महाबलः ॥ ८॥
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
सात्यकिर्धर्मराजश्च व्यूहग्रीवां समाश्रिताः ॥ ९॥
पृष्ठमासीन्महाराज विराटो वाहिनीपतिः ।
धृष्टद्युम्नेन सहितो महत्या सेनया वृतः ॥ १०॥
केकया भ्रातरः पञ्च वामपार्श्वमुपाश्रिताः ॥ ११
धृष्टकेतुर्नरव्याघ्रः कनकर्षश्च वीर्यवान् ।
दक्षिणं पक्षमाश्रित्य स्थितौ व्यूहस्य रक्षणे ॥ १२
कुन्तिभोजश्शतानीको महत्या सेनया वृतः ।
शिखण्डी च महेष्वासस् सोमकैस्संवृतो बली ॥ १३
इरावांश्च नृपः पुच्छे मकरस्य व्यवस्थितौ ॥ १३॥
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
सूर्योदये महाराज पुनर्युद्धाय दंशिताः ॥ १४॥
कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः ॥ १५
समुच्छ्रितैर्ध्वजैश्छत्रैश् शस्त्रैश्च विमलैश्शितैः ।
व्यूहितं दृश्य तत् सैन्यं पिता देवव्रतस्तव ॥ १६
क्रौञ्चेन महता राजन् प्रत्यव्यूहत वाहिनीम् ॥ १६॥
तस्य तुण्डे महेष्वासो भारद्वाजो व्यरोचत ।

अश्वत्थामा कृपश्चैव चक्षुरास्तां जनेश्वर ॥ १७॥

कृतवर्मा तु सहितः काम्भोजैरथ बाह्लिकैः ।
शिरस्यासीन्नरश्रेष्ठ श्रेष्ठस्सर्वधनुष्मताम् ॥ १८॥

ग्रीवायां शूरसेनश्च तव पुत्रश्च भारत ।
दुर्योधनो महाराज राजभिर्बहुभिर्वृतः ॥ १९॥

भगदत्तो महावीरो मद्रसौवीरकेकयैः ।
उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः ॥ २०॥

पृष्ठे चास्तां महेष्वासावावन्त्यौ सपदानुगौ ॥ २१

स्वसेनया तु सहितस् सुशर्मा प्रस्थलाधिपः ।
वामं पक्षं समाश्रित्य दंशितस्समवस्थितः ॥ २२

तुषारा यवनाश्चैव शकाश्च सह चूचुपैः ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत ॥ २३

श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष ।
व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् ॥ २४

ततो युद्धाय संसक्ताः [1]कौरवाः पाण्डवैस्सह ।
सूर्योदये महाराज प्रावर्तत जनक्षयः ॥ २५

जग्मुश्च रथिनो नागान्नागाश्च रथिनो ययुः ।
हयारोहा गजारोहान् रथिनश्चापि सादिनः ॥ २६

---

1. अ-क-ग—संग्रामस्तुमुलश्चास युद्धाय कृतनिश्चयाः। [अधिकः पाठः]

सादिनो रथिनो राजन् कुञ्जराश्च विशां पते ।
हस्त्यारोहान् हयारोहान् रथिनश्चापि सादिनः ॥ २७

सादिनः पत्तिभिस्सार्धं सादिभिश्चापि पत्तयः ।
अन्योन्यं समरे राजन् प्रत्यधावन्नमर्षिताः ॥ २८

भीमसेनार्जुनयमैर् गुप्ता चान्यैर्महारथैः ।
शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्वरी ॥ २९

तथा भीष्मकृपद्रोणशल्यदुर्योधनादिभिः ।
तवापि च बभौ सेना ग्रहैर्द्यौरिव संवृता ॥ ३०

भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी ।
अभ्ययाज्जवनैरश्वैर् भारद्वाजस्य वाहिनीम् ॥ ३१

द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः ।
विव्याध त्वरितो राजन् मर्माण्युद्दिश्य भारत ॥ ३२

दृढाहतस्तदा भीमो भारद्वाजस्य संयुगे ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ३३

स सङ्गृह्य स्वयं वाहान् भारद्वाजः प्रतापवान् ।
व्यधमत् पाण्डवीं सेनां तूलराशिमिवानलः ॥ ३४

ते वध्यमाना भीष्मेण द्रोणेन च महात्मना ।
सृञ्जयाः केकयैस्सार्धं पलायनपरा भवन् ॥ ३५

[1]तथैव तावकी सेना भीमसेनपरिक्षता ।
मुह्यते तत्र तत्रैव समदेव वराङ्गना ॥ ३६

अभिद्येतां महाव्यूहौ तस्मिन् वीरवरक्षये ।
आसीद्व्यतिकरो घोरस् तव तेषां च भारत ॥ ३७

तदद्भुतमपश्याम तावकानां परैस्सह ।
एकायनगतास्सर्वे यद्युध्यन्त संयुगे ॥ ३८

प्रतिसंवार्य चास्त्राणि तेऽन्योन्यस्य विशां पते ।
युयुधुः पाण्डवाश्चैव कुरवश्च समाहिताः ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ॥ एकसप्ततितमोऽध्यायः ॥

धृतराष्ट्रेण स्वसेनाक्षयश्रवणेन शोचनम् ॥

---

धृतराष्ट्रः—

एवं बहुगुणं सैन्यम् एवं बहुविधं परम् ।
[2]व्यूढमेवं यथान्यायम् अमोघं चैव सञ्जय ॥ १

जुष्टमस्माभिरत्यन्तम् अभिरामं च नस्सदा ।

---

1. अ-क—अर्धद्वयं नास्ति 2. अ-क—नास्तीदमर्धम्

प्रहृष्टं व्यसनापेतं पुरस्ताद्दृष्टविक्रमम् ॥ २
नातिवृद्धमबालं च न कृशं न च पीवरम् ।
लघुवृत्तायतप्रायं सागराकारमव्ययम् ॥ ३
आत्तसन्नाहशस्त्रं च बहुशस्त्रपरिग्रहम् ।
असियुद्धे नियुद्धे च गदायुद्धे च सञ्जय ॥ ४
प्रासर्ष्टितोमरेष्वाजौ परिघेष्वायतेषु च ।
भिण्डिपालेषु शूलेषु मुसलेषु च सर्वशः ॥ ५
कर्षणेषु च चापेषु करणेषु च सर्वशः ।
क्षेपणीषु विचित्रासु मुष्टियुद्धेषु कोविदम् ॥ ६
अपरोक्षं च विद्यासु व्यायामेषु कृतश्रमम् ।
अस्त्रग्रहणविद्यासु सर्वासु परिनिष्ठितम् ॥ ७
[1]आरोहे पर्यवस्कन्दे सरणे सोत्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ८
नागाश्वरथयानेषु बहुशः परिनिष्ठितम् ।
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ९
न गोष्ठ्या नोपकारेण न च बन्धुनिमित्ततः ।
न सौहृदबलात्कारैर् न कुलैर्न परिग्रहैः ॥ १०
[2]कुलीनमाढ्यं वीरं च तुष्टं सत्कृतबान्धवम् ।

1. ब—अर्धेलयं नास्ति 2. अ-क—नास्तीदमर्धम्

कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च ॥ ११

अजेयैश्च जनैर्मुख्यैर् बहुशो मुख्यकर्मभिः ।
लोकपालोपमैस्तत्र पालितं लोकविश्रुतैः ॥ १२

बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां शूरसत्तमैः ।
अस्मानभिगतं कामात् सबलं सपदानुगम् ॥ १३

महोदधिमिवापूर्णम् आपगाभिस्समन्ततः ।
सपक्षगिरिसङ्काशै रथैर्नागैश्च संवृतम् ॥ १४

नानायोधबलैर्भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपणासिगदाशक्तिशरप्राससमाकुलम् ॥ १५

ध्वजभूषणसम्बाधं रत्नकुट्टिमभूषितम् ।
वाहनैः परिधावद्भिर् वायुवेगसमैर्जवे ॥ १६

[1]परिकल्पितभूयिष्ठं ग्राहैरिव जलाशयैः ।
अपारमिव गर्जन्तं सागरप्रतिमं महत् ॥ १७

द्रोणभीष्मादिभिर्गुप्तं गुप्तं च कृतवर्मणा ।
कृपदुश्शासनाभ्यां च जयद्रथमुखैस्तथा ॥ १८

भगदत्तविकर्णाभ्यां द्रौणिसौबलबाह्लिकैः ।
गुप्तं प्रवीरैर्लोकस्य सारवद्भिर्महारथैः ॥ १९

यदहन्यत सैन्यं मे दिष्टमत्र परायणम् ॥ १९॥

---

1. ख-ग-ङ-म—इदमर्धं नास्ति

नैतादृशं समुद्योगं दृष्टवन्तोऽथ मानुषाः ।
ऋषयो वा महाभागाः पुराणा भुवि सञ्जय ॥ २०॥
ईदृशो हि बलौघस्तु युक्तश्शस्त्रास्त्रसम्पदा ।
वध्यते यत्र सङ्ग्रामे किमन्यद्भागधेयतः ॥ २१॥
विपरीतमिदं सर्वं प्रतिभाति स्म सञ्जय ।
यत्रेदृशं बलं घोरं नावधीद्युधि पाण्डवान् ॥ २२॥
अथवा पाण्डवार्थाय देवास्तत्र समागताः ।
युध्येयुर्मामकं सैन्यं यथाऽहन्यत संयुगे ॥ २३॥
उक्तोऽपि विदुरेणेह हितं युक्तं च नित्यशः ।
न शृणोत्यपि तन्मन्दः पुत्रो दुर्योधनो मम ॥ २४॥
[1]तथ्यां मन्ये मतिं तस्य सर्वज्ञस्य महात्मनः ।
आसीद्यथागतं तात येन दृष्टमिदं पुरा ॥ २५॥
अथवा भाव्यमेवं हि सञ्जयैतेन सर्वथा ।
पुरा धात्रा यथा दिष्टं तत् तथा न तदन्यथा ॥ २६॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

---

1. अ-क—न श्रुतं व्यासवचनं पथ्यं हितकरं च तत् ।
हितं पथ्यं निगदितं येन दृष्टमिदं पुरा ॥ [पाठान्तरम्]

## ॥ द्विसप्ततितमोऽध्यायः ॥



भीमद्रोणपराक्रमवर्णनम् ॥



सञ्जयः—

आत्मदोषात् त्वया राजन् प्राप्तं व्यसनमीदृशम् ।
न हि दुर्योधनस्तात पश्यते भरतर्षभ ॥ १

यदिदं पश्यसे राजन् धर्मसङ्करकारणात् ।
तव दोषात् पुरा वृत्तं द्यूतमेतद्विशां पते ॥ २

तव दोषेण युद्धं हि प्रवृत्तं पाण्डवैस्सह ।
त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मना ॥ ३

आत्मना हि कृतं कर्म आत्मनैवोपभुज्यते ।
इह वा प्रेत्य वा राजन् तत् त्वां प्राप्तं यथातथम् ॥ ४

तस्माद्राजन् स्थिरो भूत्वा प्राप्येदं व्यसनं महत् ।
शृणु युद्धं यथावृत्तं शंसतो मम भारत ॥ ५

भीमसेनस्तु निशितैर् बाणैर्भित्त्वा महाचमूम् ।
आससाद ततो वीरस् सर्वान् दुर्योधनानुगान् ॥ ६

दुश्शासनं दुर्विषहं दुष्षहं दुर्जयं जयम् ।
जयत्सेनं विकर्णं च चित्रसेनं सुदर्शनम् ॥ ७

चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च ।

एतांश्चान्यांश्च सुबहून् समीपस्थान् महाबलान् ॥ ८

धार्तराष्ट्रान् सुसङ्क्रुद्धान् दृष्ट्वा भीमो महाबलः ।
भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ९

समाह्वयंस्तथाऽन्योन्यम् अयं प्राप्तो वृकोदरः ।
जीवग्राहं निगृह्णीमो वयमेनं नराधिपाः ॥ १०

[1]इत्येवं वादिनस्सर्वे परिवव्रुर्वृकोदरम् ॥ १०॥

स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः ।
प्रजासंहरणे सूर्यः क्रूरैरिव महाग्रहैः ॥ ११॥

सम्प्राप्य मध्यं [2]व्यूहस्य भित्त्वाऽरीन् सोऽहनत् तदा ।
यथा देवासुरे युद्धे महेन्द्रः प्राप्य दानवान् ॥ १२॥

ततश्शतसहस्राणि रथिनां च महात्मनाम् ।
छादयानाश्शरैर्घोरैस् तमेकं परिवव्रिरे ॥ १३॥

स तेषां प्रवरान् योधान् हस्त्यश्वरथसादिनः ।
जघान समरे शूरो धार्तराष्ट्रानचिन्तयन् ॥ १४॥

तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघांसताम् ।
समस्तानां वधे राजन् मतिं चक्रे महामनाः ॥ १५॥

ततो रथं समुत्सृज्य गदामादाय पाण्डवः ।

1. ख-घ-ङ-म—इदमर्धं नास्ति
2. ख-ग-घ-ङ-म—सैन्यस्य तेऽपि पाण्डवमाविशन् [पाठान्तरम्]

उवाच सारथिं भीमस् स्थीयतामिति भारत ॥ १६॥
यावदेतान् हनिष्यामि धार्तराष्ट्रान् सहानुगान् ॥ १७
इत्युक्त्वा भीमसेनस्तु प्रविश्य महतीं चमूम् ।
जघान धार्तराष्ट्राणां तद्बलौघमहार्णवम् ॥ १८
गदया भीमसेनेन ताडिता वारणोत्तमाः ।
भिन्नकुम्भा महाकाया भिन्नपृष्ठास्तथैवच ॥ १९
भिन्नगात्रास्सहारोहाश् शेरते पर्वता इव ।
रथाश्च भग्नास्तिलशस् सयोधाश्शतशो रणे ॥ २०
अश्वाश्च सादिनश्चैव पदातैस्सह भारत ॥ २०॥
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
यदेकस्समरे राजन् बहुभिस्समयोधयत् ॥ २१॥
अन्तकाले प्रजास्सर्वा दण्डपाणिरिवान्तकः ॥ २२
भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः ।
द्रोणमुत्सृज्य समरे ययौ येन वृकोदरः ॥ २३
विदार्य सेनां महतीं तावकानां नरर्षभः ।
आससाद रथं शून्यं भीमसेनस्य संयुगे ॥ २४
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम् ।
धृष्टद्युम्नो महाराज दुर्मना गतचेतनः ॥ २५
अपृच्छद्बाष्पसंरुद्धो गद्गदां वाचमीरयन् ।

मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ॥ २६
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः ॥ २६॥

विशोकः—

संस्थाप्य मामिह बली भीमसेनो महाबलः ।
प्रविष्टो धार्तराष्ट्राणाम् एतद्बलमहार्णवम् ॥ २७॥
मामुक्त्वा पुरुषव्याघ्रः प्रीतियुक्तमिदं वचः ।
प्रतिपालय मां सूत नियम्याश्वान् मुहूर्तकम् ॥ २८॥
यावदेतान्निहन्म्याशु य इमे मद्वधोद्यताः ।
अभ्यधावद्गदापाणिस् तद्बलं स महाबलः ॥ २९॥
ततो दृष्ट्वा सखायं ते प्रधावन्तं महाबलम् ।
सर्वेषामेव सैन्यानां सङ्घर्षस्समजायत ॥ ३०॥
तस्मिंस्तु तुमुले युद्धे वर्तमाने भयानके ।
भित्त्वा राजन् महाव्यूहं प्रविवेश सखा तव ॥ ३१॥

सञ्जयः—

विशोकस्य वचश्श्रुत्वा धृष्टद्युम्नोऽपि पार्षतः ।
प्रत्युवाच ततस्सूतं रणमध्ये महाबलः ॥ ३२॥

धृष्टद्युम्नः—

न हि मे जीविते किञ्चिद् विद्यतेऽत्र प्रयोजनम् ।
भीमसेनं रणे हित्वा स्नेहमुत्सृज्य पाण्डवैः ॥ ३३॥

यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति ।
एकायनगते भीमे मयि चावस्थिते युधि ॥ ३४॥

परत्र तस्य कुर्वन्ति देवा इन्द्रपुरोगमाः ॥ ३५

यस्सहायं परित्यज्य स्वस्तिमानाव्रजेद्गृहान् ।
रौरवे नरके मज्जेद् अप्लवे दुस्तरे नृभिः ॥ ३६

मम भीमस्सखा चैव सम्बन्धी च महाबलः ।
भक्तोऽस्मान् भक्तिमांश्चाहं तमप्यरिनिषूदनम् ॥ ३७

सोऽहं तत्र गमिष्यामि यत्र यातो वृकोदरः ।
निघ्नन्तं मामरीन् पश्य दानवानिव वासवम् ॥ ३८

सञ्जयः—

एवमुक्त्वा ततो राजन् ययौ मध्येन वाहिनीम् ।
भीमसेनस्य मार्गेषु गदाविमथितैर्गजैः ॥ ३९

[1]स ददर्श ततो भीमं दहन्तं रिपुवाहिनीम् ।
वातं वृक्षानिव बलात् प्रभञ्जन्तं रणे नृपान् ॥ ४०

ते हन्यमानास्समरे रथिनस्सादिनस्तथा ।
पदाता दन्तिनश्चैव चक्रुरार्तस्वरं पृथक् ॥ ४१

हाहाकारश्च सञ्जज्ञे तव सैन्यस्य मारिष ।
क्रोधितो भीमसेनेन क्रोधिना चित्रघातिना ॥ ४२

1. अ-क-ग—निपातितैरुल्बणानां विसृतानां समन्ततः । [अधिकः पाठः]

ततः कृतास्त्रास्ते सर्वे परिवार्य वृकोदरम् ।
अभीतास्समवर्षन्त शस्त्रवृष्ट्या समन्ततः ॥ ४३

अभिद्रुतं शस्त्रभृतां वरिष्ठं
समन्ततः पाण्डवं लोकवीरैः ।
सैन्येन घोरेण सुसंवृतेन
सुसंवृतं पार्षतो भीमसेनम् ॥ ४४

अथोपगच्छच्छरविक्षताङ्गं
पदातिनं घोरविषक्तरूपम् ।
आश्वासयन् पार्षतो भीमसेनं
गदाहस्तं कालमिवान्तकाले ॥ ४५

निश्शल्यमेनं च चकार तूर्णम्
आरोपयच्चात्मरथं महात्मा ।
भृशं परिष्वज्य च भीमसेनम्
आश्वासयामास च शत्रुमध्ये ॥ ४६

तथा तस्मिन् वर्तमानेऽतिवेलं
भ्रातृनथोपेत्य तवापि पुत्रः ।
तस्मिन् विमर्दे सहसा प्रवृत्ते
दृष्ट्वा रणे वाक्यमिदं बभाषे ॥ ४७

दुर्योधनः—

अयं दुरात्मा द्रुपदस्य पुत्रस्
समागतो भीमसेनेन सार्धम् ।
तं यात सर्वे सहसा निहन्तुं
मा वो रिपुः प्रार्थयतामनीके ॥ ४८

सञ्जयः—

श्रुत्वा च वाक्यं तममृष्यमाणा
ज्येष्ठाज्ञया चोदिता धार्तराष्ट्राः ।
वधाय निष्पेतुरुदायुधास्ते
युगक्षये केतवो यद्वदुग्राः ॥ ४९

प्रगृह्य चित्राणि धनूंषि वीरा
ज्यानेमिघोषैः परिकम्पयन्तः ।
शरैर्ववर्षुर्द्रुपदस्य पुत्रं
यथाम्बुदा भूधरमम्बुजालैः ॥ ५०

[1]स घातितश्चापि शरैस्सुतीक्ष्णैर्
न विव्यथे समरे चित्रयोधी ॥ ५०॥

समभ्युदीर्णांश्च तवात्मजांस्तदा
निशाम्य वीरानभितस्स्थितान् रणे ।

1. ख-ग-घ-ङ-म—निहत्य तांश्चापि [पाठान्तरम्]

जिघांसुरुग्रो द्रुपदात्मजो रणे
प्रमोहनास्त्रं युयुजे महारथः ॥ ५१॥
पुत्रेषु ते क्रोधवशेषु राजन्
दैत्येषु यद्वत् समरे महेन्द्रः ॥ ५२

स वै ततोऽस्त्रं सुमहाप्रभावं
प्रमोहनं द्रोणदत्तं महात्मना ।
प्रयोजयामास उदारकर्मा
तस्मिन् रणे तव सैन्यस्य राजन् ॥ ५३

तदा व्यमुह्यन्त रणे नृवीराः
प्रमोहनास्त्राहतबुद्धिसत्त्वाः ।
प्रदुद्रुवुः कुरवश्चैव सर्वे
सवाजिनागास्सरथास्समन्तात् ॥ ५४

परीतकाला इव नष्टसंज्ञा
मोहाश्रया नावगच्छन्ति किञ्चित् ॥ ५४॥

एतस्मिन्नेव काले तु भीमः प्रहरतां वरः ।
विश्रम्य च तदा राजन् पीत्वाऽमृतरसं जलम् ॥ ५५॥
पुनस्सन्नह्य सहसा योधयामास संयुगे ।
धृष्टद्युम्नेन सहितः कालयामास भारत ॥ ५६॥

एतस्मिन्नन्तरे राजन् द्रोणश्शस्त्रभृतां वरः ।
द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः ॥ ५७॥
सोऽतिविद्धस्ततो राजन् रणे द्रोणेन पार्थिव ।
अपायाद्द्रुपदो राजन् पूर्ववैरमनुस्मरन् ॥ ५८॥
जित्वा तु द्रुपदं द्रोणः प्रदध्मौ शङ्खमाहवे ।
तस्य शङ्खस्वनं श्रुत्वा वित्रेसुस्सर्वसोमकाः ॥ ५९॥
अथ शुश्राव तेजस्वी द्रोणश्शस्त्रभृतां वरः ।
प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ॥ ६०॥
ततो द्रोणो राजगृध्नुस् त्वरितोऽभिययौ रणम् ॥ ६१
तत्रापश्यन्महेष्वासो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं च भीमं च विचरन्तौ महारणे ॥ ६२
मोहाविष्टांश्च ते पुत्रान् अपश्यत् स महारथः ।
ततः प्रज्ञास्त्रमादाय मोहनास्त्रं व्यनाशयन् ॥ ६३
ततः प्रत्यागतप्राणास् तव पुत्रा महारथाः ।
पुनर्युद्धाय समरे प्रत्युद्याता जिगीषवः ॥ ६४
ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान् ॥ ६४॥

युधिष्ठिरः—

गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि ।
सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः ॥ ६५॥

प्रवृत्तिमभिगच्छन्तु न हि शुध्यति मे मनः ॥ ६६

प्रवृत्तिं भीमसेनस्य पार्षतस्य च संयुगे ।
विज्ञाय समरे शीघ्रं प्रविशध्वं रणार्णवम् ॥ ६७

गच्छन्तु परया शक्त्या भवन्त इति मे मनः । ६७॥

सञ्जयः—

बाढमित्येवमुक्त्वा तु सर्वे पुरुषमानिनः ।
मध्यंदिनगते सूर्ये प्रययुस्ते महारथाः ॥ ६८॥

केकया द्रौपदेयाश्च धृष्टकेतुश्च वीर्यवान् ।
अभिमन्युं पुरस्कृत्य महत्या सेनया वृताः ॥ ६९॥

ते कृत्वा समरे व्यूहं सूचीमुखमरिन्दमाः ।
बिभिदुर्धार्तराष्ट्राणां तद्रथानीकमाहवे ॥ ७०॥

तान् प्रयातान् महेष्वासान् अभिमन्युपुरोगमान् ।
भीमसेनभयाविष्टा धृष्टद्युम्नेन मोहिता ॥ ७१॥

[1-2]मोहिता मदमूर्च्छाभिर् नारीव विवशा तथा ।
न च सन्धारयितुं सेहे तव सेना नराधिप ॥ ७२॥

ततो गत्वा महेष्वासास् सुवर्णविकृतध्वजाः ।
परीप्सन्तोऽभ्यधावन्त धृष्टद्युम्नवृकोदरौ ॥ ७३॥

1. अ-क—आसीत्तदा गतान् दृष्ट्वा ह्यभिमन्युपुरोगमान् ।
2. ङ—अर्धद्वयं नास्ति [अधिकः पाठः]

तौ च दृष्ट्वा महेष्वासावभिमन्युपुरोगमान् ।
बभूवतुर्मुदा युक्तौ निघ्नन्तौ तव वाहिनीम् ॥ ७४॥
द्रोणमिष्वस्त्रकुशलं सर्वविद्यासु पारगम् ।
दृष्ट्वा तु सहसाऽऽयान्तं पाञ्चाल्यो गुरुमात्मनः ॥ ७५॥
नाशंसत वधं वीरः पुत्राणां तव पार्षतः ॥ ७६
ततो रथं समारोप्य कैकेयस्य वृकोदरम् ।
अभ्यधावत् सुसङ्क्रुद्धो द्रोणमिष्वस्त्रपारगम् ॥ ७७
तस्याभिपततस्तूर्णं भारद्वाजः प्रतापवान् ।
क्रुद्धश्चिच्छेद समरे तद्धनुश्शत्रुसूदनः ॥ ७८
[1]अन्यांश्च शतशो बाणान् प्रेषयामास पार्षते ।
दुर्योधनहितार्थाय भर्तृपीडामनुस्मरन् ॥ ७९
अथान्यद्धनुरादाय पार्षतः क्रोधमूर्च्छितः ।
द्रोणं विव्याध सप्तत्या रुक्मपुङ्खैश्शिलाशितैः ॥ ८०
तस्य द्रोणः पुनश्चापं चिच्छेदामित्रकर्शनः ॥ ८०॥
हयांश्च चतुरस्तूर्णं चतुर्भिस्सायकोत्तमैः ।
वैवस्वतक्षयं घोरं प्रेषयामास भारत ॥ ८१॥
सारथिं चास्य भल्लेन प्रेषयामास मृत्यवे ॥ ८२
हताश्वात् स रथात् तूर्णम् अवप्लुत्य महारथः ।

---

1. अ-क—अर्धचतुष्टयं नास्ति

आरुरोह महाबाहुर् अभिमन्योर्महारथम् ॥ ८३

ततस्सरथनागाश्वा समकम्पत वाहिनी ।
पश्यतो भीमसेनस्य पार्षतस्य च पश्यतः ॥ ८४

तत् प्रभग्नं बलं दृष्ट्वा द्रोणेनामित्रकर्शिना ।
नाशक्नुवन् धारयितुं समस्तास्ते महारथाः ॥ ८५

वध्यमानं तु समरे द्रोणेन निशितैश्शरैः ।
व्यभ्रमत्तत्र तत्रैव क्षोभ्यमाण इवार्णवः ॥ ८६

तथा तु दृष्ट्वा तत् सैन्यं जहृषे तावकं बलम् ॥ ८६॥

दृष्ट्वाऽऽचार्यं च सङ्क्रुद्धं तपन्तं रिपुवाहिनीम् ।
तुष्टुवुस्सर्वतो योधास् साधु साध्विति भारत ॥ ८७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये ८७॥ श्लोकाः ]

---

## ॥ त्रिसप्ततितमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

---

सञ्जयः—

ततो दुर्योधनो राजा मोहात् प्रत्यागतस्तदा ।
शरवर्षैः पुनर्भीमं पर्यवारयदच्युतम् ॥ १

एकीभूताः पुनश्चैव तव पुत्रा महारथाः ।
समेत्य समरे वीरं योधयामासुरुद्यताः ॥ २

भीमसेनोऽपि सङ्ग्रामे प्राप्य वै स्वरथं पुनः ।
समारुह्य महाबाहुर् ययौ तेन तवात्मजान् ॥ ३

प्रगृह्य च महावेगं परासुकरणं दृढम् ।
चित्रं शरासनं सङ्ख्ये शरैर्विव्याध ते सुतान् ॥ ४

ततो दुर्योधनो राजा भीमसेनं महाबलम् ।
नाराचेन सुतीक्ष्णेन भृशं मर्मण्यताडयत् ॥ ५

सोऽतिविद्धो महेष्वासस् तव पुत्रेण धन्विना ।
क्रोधसंरक्तनयनो वेगेनोत्क्षिप्य कार्मुकम् ॥ ६

दुर्योधनं त्रिभिर्बाणैर् बाह्वोरुरसि चार्पयत् ॥ ६॥
स तदाऽभिहतो राजा नाचलद्गिरिराडिव ॥ ७

तौ दृष्ट्वा समरे क्रुद्धौ विनिघ्नन्तौ परस्परम् ।
दुर्योधनानुजास्सर्वे शूरास्संत्यक्तजीविताः ॥ ८

सस्मरुर्मन्त्रितं पूर्वं निग्रहे भीमकर्मणः ॥ ८॥
निश्चयं मनसा कृत्वा निग्रहे समुपाक्रमन् ॥ ९

तानापतत एवाजौ भीमसेनो महाबलः ।
प्रत्युद्ययौ महाराज गजः प्रतिगजानिव ॥ १०

भृशं क्रुद्धस्स तेजस्वी नाराचेन समर्पयत् ।
चित्रसेनं महाराज तव पुत्रं महायशाः ॥ ११

तथेतरांस्तव सुतांस् ताडयामास भारत ।
शरैर्बहुविधैस्सङ्ख्ये रुक्मपुङ्खैस्सुतेजनैः ॥ १२

ततस्सम्प्रेक्ष्य पुत्रैस्ते भीमसेनं समावृतम् ।
अभिमन्युप्रभृतयस् ते द्वादश महारथाः ॥ १३

प्रेषिता धर्मपुत्रेण भीमसेनपदानुगाः ।
प्रतिजग्मुर्महाराज तव पुत्रान् महाबलान् ॥ १४

दृष्ट्वा प्राप्तान् रथस्थांस्तान् सूर्याग्निसमतेजसः ।
सर्वानेव महेष्वासान् भ्राजमानान् श्रिया वृतान् ॥ १५

महाहवे दीप्यमानान् सुवर्णकटकोज्ज्वलान् ।
[1]तत्यजुस्समरे भीमं तव पुत्रा महाबलाः ॥ १६

तान् नामृष्यत कौन्तेयो जीवमाना गता इति ।
अन्वीय च पुनस्सर्वास् तव पुत्रानपीडयत् ॥ १७

तथाऽभिमन्युस्समरे भीमसेनेन सङ्गतः ।
पार्षतेन च ते सर्वे कैकया द्रौपदीसुताः ॥ १८

---

1. अ-क-ग—तानागतान्पाण्डवेयान् अभिमन्युपुरोगमान् ।
[अधिकः पाठः]

[1]समेत्य सङ्घशस्सर्वे संस्थितास्स्युः परस्परम् ॥　　१८॥

तान् दृष्ट्वा समरे क्रुद्धांस् तव सैन्ये महारथाः ।
दुर्योधनप्रभृतयः प्रगृहीतशरासनाः ॥　　१९॥

[2]भृशमश्वैः प्रजवितैः प्रययुर्यत्र ते रथाः ॥　　२०

अपराह्णे महाराज प्रावर्तत जनक्षयः ।
तावकानां च समरे परेषां चैव भारत ॥　　२१

अभिमन्युर्विकर्णस्य हयान् हत्वा महामृधे ।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥　　२२

हताश्वं रथमुत्सृज्य विकर्णस्तु महारथः ।
आरुरोह रथं भ्रातुश् चित्रसेनस्य भास्वरम् ॥　　२३
योधयामास समरे तदद्भुतमिवाभवत् ॥　　२३॥

[3]स्थितावेकरथे तौ तु भ्रातरौ कुरुवर्धनौ ।
आर्जुनिं शरजालेन च्छादयामासतू रणे ॥　　२४॥

दुर्जयोऽथ विकर्णश्च कार्ष्णिं पञ्चभिरायसैः ।
विद्ध्वा नाकम्पयत् राजन् मैनाकमिव पर्वतम् ॥　　२५॥

दुश्शासनस्तु समरे केकयान् पञ्च मारिष ।
योधयामास समरे तदद्भुतमिवाभवत् ॥　　२६॥

---

1. ख-घ-ङ-म—इदमर्धं नास्ति　　2. घ—इदमर्धं नास्ति
3. ख—अर्धषट्कं नास्ति

द्रौपदेया रणे क्रुद्धा दुर्योधनमुपाद्रवन् ।
शरैराशीविषाकारैः पुत्रं तव विशां पते ॥ २७॥

पुत्रोऽपि तव दुर्धर्षो द्रौपद्यास्तनयान् रणे ।
एकैकं त्रिभिरानर्च्छेष् छरैरग्निशिखोपमैः ॥ २८॥

तैश्चापि विद्धश्शुशुभे रुधिरेणावसेचितः ।
गिरिः प्रस्रवणो यद्वद् गिरिधातुविचित्रितः ॥ २९॥

भीष्मोऽपि समरे राजन् पाण्डवानामनीकिनीम् ।
कालयामास बलवान् पालः पशुगणानिव ॥ ३०॥

ततो गाण्डीवनिर्घोषः प्रादुरासीद्विशां पते ।
दक्षिणेन वरूथिन्याः कुरून् राजन् विनिघ्नतः ॥ ३१॥

उत्तस्थुस्समरे तत्र कबन्धानि सहस्रशः ।
कुरूणां चैव सैन्येषु पाण्डवानां च भारत ॥ ३२॥

[1]शोणितोदं रथावर्तं गजद्वीपं हयोर्मिणम् ।
रथनौभिर्नरव्याघ्राः प्रतेरुस्सैन्यसागरम् ॥ ३३॥

[2]भिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः ।
अदृश्यन्त रणे तत्र पतिताश्च सहस्रशः ॥ ३४॥

निहतैर्मत्तमातङ्गैश् शोणितौघपरिप्लुतैः ।

---

1. अ-क-ग—प्रादृश्यन्त महाराज शतशोऽथसहस्रशः । [अधिकः पाठः]
2. घ—नास्तीदमर्धम्

भूर्भाति भरतश्रेष्ठ पर्वतैराचिता यथा ॥ ३५॥
तत्राद्भुतमपश्याम तव तेषां च भारत ।
[1]न तत्रासीत् पुमान् कश्चिद् यो युद्धं नाभिकाङ्क्षति ३६॥
[2]कश्चिद्योद्धा रणे तत्र योद्धुमिच्छन् स्वशत्रुणा ।
अन्येन युद्धं कुर्वाणं पुमांसं नाभिकाङ्क्षते ॥ ३७॥
एवं युयुधिरे वीराः प्रार्थयाना महद्यशः ।
तावकाः पाण्डवैस्सार्धं काङ्क्षमाणा रणे जयम् ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

1. अ-क—नासीदमर्धम् 2. ख-घ-ङ-म—इदमर्धद्वयं नास्ति

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

ततो दुर्योधनो राजा लोहितायति भास्करे ।
सङ्ग्रामे सहसा भीमं हन्तुकामोऽभ्यधावत ॥ १

तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणम् ।
भीमसेनस्सुसङ्क्रुद्ध इदं वचनमब्रवीत् ॥ २

भीमः—

अयं स कालस्सम्प्राप्तो वर्षपूगाभिकाङ्क्षितः ।
अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणम् ॥ ३

अहं कुन्त्याः परिक्लेशं वनवासं च कृत्स्नशः ।
द्रौपद्याश्च परिक्लेशं प्रणेष्यामि हते त्वयि ॥ ४

यत् त्वं पुरा कृतं स्मृत्वा पाण्डवानवमन्यत ।
तस्य पापस्य गान्धारे पश्य व्यसनमागतम् ॥ ५

कर्णस्य मतमास्थाय सौबलस्य च यत् पुरा ।
अचिन्त्य पाण्डवान् कामाद् यथेष्टं कृतवानसि ॥ ६

याचमानं च यन्मोहाद् दाशार्हमवमन्यसे ।
[1]तस्य पापस्य गान्धारे पश्य व्यसनमागतम् ॥ ७

---

1. ख-घ-म—इदमर्धं नास्ति

उलूकस्य च संदेशं यद्दासि च हृष्टवत् ॥ ७॥
त्वां निहत्याद्य समरे सानुबन्धं सबान्धवम् ।
समीकरिष्ये तत् पापं यत् पुरा कृतवानसि ॥ ८॥

सञ्जयः—

एवमुक्त्वा धनुर्घोरं विकृष्यानम्य चासकृत् ।
समाधत्त शरान् घोरान् महाशनिसमप्रभान् ॥ ९॥
षड्विंशत्तरसा क्रुद्धो मुमोचाशु सुयोधने ।
ज्वलिताग्निशिखाकारान् वज्रकल्पानजिह्मगान् ॥ १०॥
ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्यामथावधीत् ।
चतुर्भिरश्वांश्च तथा ह्यनयद्यमसादनम् ॥ ११॥
द्वाभ्यां चाशु विकृष्टाभ्यां शराभ्यामरिमर्दनः ।
चिच्छेद समरे छत्रं राज्ञस्तस्य रथोत्तमात् ॥ १२॥
[1]त्रिभिश्च तस्य चिच्छेद चऊद्ध्वजमनुत्तमम् ॥
छित्त्वाऽथ च ननादोच्चैस् तव पुत्रस्य पश्यतः ॥ १३॥
रथाच्च स ध्वजश्श्रीमान् नानारत्नविभूषितः ।
पपात सहसा राजन् विद्युज्जलधरादिव ॥ १४॥
ज्वलन्तं सूर्यसङ्काशं नागं मणिमयं शुभम् ।
ध्वजं कुरुपतेश्छिन्नं ददृशुस्सर्वपार्थिवाः ॥ १५॥

1. अ-क—नास्तीदमर्धम्

अथैनं दशभिर्बाणैस् तोत्त्रैरिव महाद्विपम् ।
आजघान रणे भीमस् स्मयन्निव महारथः ॥ १६॥

स गाढविद्धो व्यथितो भीमसेनेन संयुगे ।
निषसाद रथोपस्थे मूर्च्छाभिहतचेतनः ॥ १७॥

ततस्तु राजा सिन्धूनां रथिश्रेष्ठो महाबलः ।
दुर्योधनस्य जग्राह पार्ष्णिं स्वपुरुषैस्सह ॥ १८॥

कृपश्च रथिनां श्रेष्ठस् तव पुत्रमचेतनम् ।
आरोपयद्रथं राजन् दुर्योधनमथ स्वकम् ॥ १९॥

परिवार्य ततो भीमं हन्तुकामो जयद्रथः ।
रथैरनेकसाहस्रैर् भीमस्यावारयद्दिशः ॥ २०॥

धृष्टकेतुस्ततो राजन्नभिमन्युश्च वीर्यवान् ।
केकया द्रौपदेयाश्च तव पुत्रानयोधयन् ॥ २१॥

चित्रसेनस्सुमित्रश्च चित्राङ्गश्चित्रदर्शनः ।
चारुचित्रस्सुबाहुश्च तथा नन्दोपनन्दकौ ॥ २२॥

अष्टावेते महेष्वासास् तक्ष्माणाश्शिलाशतैः ।
अभिमन्युरथं राजन् समन्तात् पर्यवारयन् ॥ २३॥

आजघान ततस्तूर्णम् अभिमन्युर्महारथान् ।
एकैकं पञ्चभिर्बाणैश् शितैस्सन्नतपर्वभिः ॥ २४॥

वज्रमृत्युप्रतीकाशैर् विचित्रायुधनिस्स्वनैः ।
अमृष्यमाणास्ते सर्वे सौभद्रं रथिसत्तमम ॥ २५॥

ववृषुर्मार्गणैस्तीक्ष्णैर् गिरिं मेरुमिवाम्बुदाः ॥ २६

स पीड्यमानस्समरे कृतास्त्रो युद्धदुर्मदः ।
अभिमन्युर्महाराज तावकान् समकम्पयत् ॥ २७

पुरा देवासुरे युद्धे वज्रपाणिरिवासुरान् ॥ २७॥

विकर्णाय ततो भल्लान् प्रेषयामास भारत ।
चतुर्दश रथश्रेष्ठश् शरानाशीविषोपमान् ॥ २८॥

[1]पुनश्चतुर्दश शरान् शितानाशीविषोपमान् ।
प्रेषयामास सङ्क्रुद्धो विकर्णस्य रथं प्रति ॥ २९॥

तैश्शरैर्निशिताग्रैश्च युद्धमार्गविशारदः ।
ध्वजं सूतं हयांश्चापि छित्त्वा नृत्यन्निवाहवे ॥ ३०॥

पुनश्चान्यान्शरान स्फीतान् अकुण्ठाग्राञ्शिलाशितान् ।
प्रेषयामास सौभद्रो विकर्णाय महाबलः ॥ ३१॥

ते विकर्णं समासाद्य कङ्कबर्हिणवाससः ।
भित्त्वा देहं गता भूमिं ज्वलन्त इव पन्नगाः ॥ ३२॥

ते शरा हेमपुङ्खाग्राः प्रत्यदृश्यन्त भूतले ।

1. ख-घ-ङ-म—अर्धद्वयं नास्ति

विकर्णरुधिराक्लिन्ना वमन्त इव शोणितम् ॥ ३३॥

[1]विकर्णं प्रेक्ष्य निर्भिन्नं तव सैन्ये सहोदराः ।
अभ्यद्रवन्त सङ्क्रुद्धाः किरन्तश्शतशश्शरान् ॥ ३४॥

तानर्जुनश्शरैस्तूर्णं निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर् दावं दग्ध्वा हिमात्यये ॥ ३५॥

तयोस्सेनामतिक्रम्य कृच्छ्रान्निघ्नन् धनञ्जयः ।
विबभौ जलदान् भित्त्वा दिवाकर इवोदितः ॥ ३६॥

तं दृष्ट्वा कुरवस्सर्वे प्रहृष्टाश्चाभवन् पुनः ।
अभ्यद्रवन्त समरे सौभद्रप्रमुखान् रथान् ॥ ३७॥

प्रत्युद्ययुस्तेऽपि रथांस् तथा तान् सूर्यवर्चसः ।
अविध्यन् समरेऽन्योन्यं संरब्धा युद्धदुर्मदाः ॥ ३८॥

दुर्मुखश्श्रुतवर्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजमेकेन चिच्छेद सारथिं चास्य सप्तभिः ॥ ३९॥

अश्वाञ्जाम्बूनदैर्बाणैस् सञ्छन्नान् वातरंहसः ।
[2]जघान षड्भिरासाद्य सारथिं च न्यबर्हयत् ॥ ४०॥

स हताश्वे रथे तिष्ठन् श्रुतवर्मा महाबलः ।
शक्तिं चिक्षेप समरे महोल्कां ज्वलितामिव ॥ ४१॥

---

1. अर्धषट्कं-क-कोश एव दृश्यते नान्यत्र
2. अ-क—नास्तीदमर्धम्

सा दुर्मुखस्य विपुलं वर्म भित्त्वा महात्मनः ।
विदार्य प्राविशद्भूमिं दीप्यमाना स्वतेजसा ॥ ४२॥
दुर्मुखो विह्वलस्तत्र निषसाद रथे विभो ।
[1]विसंज्ञं प्रेक्ष्य ते सर्वे भ्रातरः पर्यवारयन् ॥ ४३॥
तं दृष्ट्वा विरथं तत्र [2]श्रुतवर्माणमाहवे ।
तत्रागत्य तथा चाशु सुतसोमो महाबलः ॥ ४४॥
पश्यतां सर्वसैन्यानां रथमारोपयत् स्वकम् ॥ ४५
श्रुतकीर्तिस्ततो वीरो जयत्सेनं सुतं तव ।
अभ्ययात् समरे राजन् हन्तुकामो यशस्विनम् ॥ ४६
तस्य विक्षिपतश्चापं श्रुतकीर्तेर्महात्मनः ।
चिच्छेद समरे चापं जयत्सेनस्सुतस्तव ॥ ४७
क्षुरप्रेण सुतीक्ष्णेन प्रहसन्निव भारत ॥ ४७॥
[3]तं दृष्ट्वा भीमधन्वानं शतानीकस्सहोदरम् ।
अभ्यपद्यत तेजस्वी सिंहवन्निनदन् रणे ॥ ४८॥
शतानीकस्तु समरे दृढं विष्फार्य कार्मुकम् ।
विव्याध दशभिस्तूर्णं जयत्सेनं शिलीमुखैः ॥ ४९॥
ननाद च महानादं प्रावृषीव बलाहकः ॥ ५०

---

1. घ—अर्धद्वयं नास्ति
2. ख-घ-ङ-म—अयं पादोऽनन्तरश्च न स्तः
3. अ-क—अर्धषट्कं नास्ति

अथान्येन सुतीक्ष्णेन सर्वावरणभेदिना ।
शतानीको जयत्सेनं विव्याध हृदये भृशम् ॥ ५१
तथा तस्मिन् विनिर्भिन्ने दुष्कर्णो भ्रातुरन्तिके ।
मुमोचास्मै शितान् बाणांस् तीक्ष्णानाशीविषोपमान् ॥ ५२
चिच्छेद स तदा चापं नाकुलेः क्रोधमूर्च्छितः ॥ ५२॥
अथान्यद्धनुरादाय भारसाधनमुत्तमम् ।
समधत्त शितान् बाणान् शतानीको महाबलः ॥ ५३॥
तिष्ठ तिष्ठेति चामन्त्र्य दुष्कर्णं भ्रातुरग्रतः ।
मुमोच स शितान् बाणाञ् ज्वलितानिव पावकान् ॥ ५४॥
ततोऽस्य धनुरेकेन द्वाभ्यां सूतं च मारिष ।
चिच्छेद समरे राजंस् तं च विव्याध सप्तभिः ॥ ५५॥
अश्वान् मनोजवांश्चास्य कल्माषान् वीतकल्मषः ।
जघान निशितैस्तूर्णं सर्वान् द्वादशभिश्शितैः ॥ ५६॥
अथापरेण बाणेन सुमुक्तेनाशुपातिना ।
दुष्कर्णं नाकुलिः क्रुद्धो विव्याध समरे भृशम् ॥ ५७॥
स विह्वलो रथोपस्थे निषसाद सुतस्तव ॥ ५८
दुष्कर्णं मोहितं दृष्ट्वा राजन् पञ्च महारथाः ।
जिघांसन्तश्शतानीकं सर्वतः पर्यवारयन् ॥ ५९
छाद्यमानं शतानीकं शरव्रातैर्यशस्विनम् ॥

अभ्यपद्यन्त सङ्क्रुद्धाः केकयाः पञ्च सोदराः ॥ ६०

तानभ्यापततः प्रेक्ष्य तव पुत्रा महारथाः ।
प्रत्युद्ययुर्महाराज गजा इव महागजान् ॥ ६१

दुर्मुखो दुष्षहश्चैव तथा दुर्मर्षणो युवा ।
शत्रुञ्जयश्शत्रुसहस् सर्वे क्रुद्धा यशस्विनः ॥ ६२

प्रत्युद्ययुर्महाराज केकयान् भ्रातृभिस्सह ।
रथैर्नगरसङ्काशैर् हययुक्तैर्महारथाः ॥ ६३

नानावर्णविचित्राभिः पताकाभिरलङ्कृतैः ।
शरचापधरा वीरा विचित्रकवचध्वजाः ॥ ६४

विविशुस्ते परं सैन्यं सिंहा इव वनाद्वनम् ॥ ६४॥

तेषां सुतुमुलं युद्धं व्यतिषक्तरथद्विपम् ।
अवर्तत महारौद्रं निघ्नतामितरेतरम् ॥ ६५॥

अन्योन्यागस्कृतानां तु यमराष्ट्रविवर्धनम् ।
मुहूर्तास्तमिते सूर्ये चक्रुर्युद्धं सुदारुणम् ॥ ६६॥

रथिनस्सादिनश्चैव व्यवकीर्यन्त सर्वशः ॥ ६७

ततश्शान्तनवः क्रुद्धश् शरैस्सन्नतपर्वभिः ।
नाशयामास तां सेनां पाण्डवानां महात्मनाम् ॥ ६८

पञ्चालानां च सैन्यानि शरैर्निन्ये यमक्षयम् ॥ ६८॥

एवं हत्वा महेष्वासः पाण्डवानामनीकिनीम् ।
कृत्वाऽपहारं सैन्यानां ययौ स्वशिबिराय वै ॥ ६९॥

नाशयामासतुर्वीरौ धृष्टद्युम्नवृकोदरौ ।
कौरवाणामनीकानि शरैस्सन्नतपर्वभिः ॥ ७०॥

धर्मराजोऽपि सम्प्रेक्ष्य धृष्टद्युम्नवृकोदरौ ।
मूर्ध्नि चैवमुपाघ्राय नृपस्स्वशिबिरं ययौ ॥ ७१॥

अर्जुनो वासुदेवश्च कौरवाणामनीकिनीम् ।
हत्वा विद्राव्य च शरैश् शिबिरायैव जग्मतुः ॥ ७२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये ७२॥ श्लोकाः ]
[ षष्ठापहारः समाप्तः ]

---

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

---

भीष्मदुर्योधनसंवादः ॥

---

सञ्जयः—

क्षत्रियास्ते महाराज परस्परकृतागसः ।
जग्मुस्स्वशिबिराण्येव रुधिरेण समुक्षिताः ॥ १

[1]विश्रम्य च यथान्यायं पूजयित्वा परस्परम् ।
सन्नद्धास्समदृश्यन्त भूयो युद्धचिकीर्षवः ॥ २

ततस्तव सुतो राजंश् चिन्तयाभिपरिप्लुतः ।
अस्रवद्रुधिरेणाक्तः पप्रच्छेदं पितामहम् ॥ ३

दुर्योधनः—

सैन्यानि रौद्राणि भयावहानि
व्यूढानि सम्यग्बहुलध्वजानि ।
विदार्य हत्वा च निपीड्य शूरांस्
ते पाण्डवा लब्धजयाः प्रहृष्टाः ॥ ४

सम्मोह्य सर्वान् युधि कीर्तिमन्तो
व्यूहं चैतं मकरं मृत्युकल्पम् ।
प्रविश्य भीमेन निबर्हितोऽस्मि
घोरैश्शरैर्मृत्युदण्डप्रकाशैः ॥ ५

क्रुद्धं तमुत्प्रेक्ष्य भयेन राजन्
सम्मूर्च्छितो न लभे शान्तिमद्य ।
इच्छे प्रसादात् तव सत्यसन्ध
प्राप्तुं जयं पाण्डवांश्चैव हन्तुम् ॥ ६

1. घ—नास्तीदमर्धम्

सञ्जयः—

तेनैवमुक्तः प्रहसन् महात्मा
दुर्योधनं जातमन्युं विदित्वा ।
तं प्रत्युवाचाविमनास्तरस्वी
गङ्गासुतश्शस्त्रभृतां वरिष्ठः ॥ ७

भीष्मः—

परेण यत्नेन विगाह्य सेनां
सर्वात्मनाऽहं तव राजपुत्र ।
इच्छामि दातुं विजयं सुखं च
न चात्मानं गूहयेऽहं त्वदर्थे ॥ ८

एते स्म रौद्रा बहवो महारथा
यशस्विनः क्रूरतमाः कृतास्त्राः ।
ये पाण्डवानां समरे सहाया
जितक्लमाः क्रोधविषं वमन्ति ॥ ९

केनेह शक्यास्समरे विजेतुं
वीर्योन्नताः कृतवैरास्त्वया च ।
अहं ह्येतान् प्रतियोत्स्यामि राजन्
सर्वात्मना जीवितं त्यज्य वीर ॥ १०

तथा तवार्थाय महानुभाव
न जीवितं रक्षितव्यं ममाद्य ।
सर्वांस्तवार्थाय सदेवदैत्याँ-
ल्लोकान् दहेयं किमु शत्रुसङ्घान् ॥ ११
सोऽहं पाण्डून् योधयिष्यामि राजन्
प्रियं च ते सर्वमहं करिष्ये ॥ ११॥

सञ्जयः—
श्रुत्वा पितुस्ते वचनं प्रतीतो
दुर्योधनश्शान्तमना बभूव ।
सर्वाणि सैन्यानि ततः प्रहृष्टो
निर्गच्छतेत्याह नृपांश्च सर्वान् ॥ १२॥

तदाज्ञया तानि विनिर्ययुर्द्रुतं
रथाश्वपादातगजायुतानि ।
[1]प्रहर्षयुक्तानि तु तानि राजन्
महान्ति नानाविधवीर्यवन्ति ॥ १३॥
स्थिराणि नागाश्वपदातिमन्ति
विरेजुराजौ तव राजन् बलानि ॥ १४
ते तत्र तत्रैव तु सम्प्रयुक्ताश्
चकाशिरे दन्तिगणास्समन्तात् ।

1. अ-क—नासीदमर्धंचतुष्टयम्

शस्त्रास्त्रविद्भिर्नरवीरयोधैर्
अधिष्ठितास्सैन्यगणास्त्वदीयाः ॥ १५

[1]रथाश्व्यपादातगजाश्वसङ्घैर्
ययुस्तदाऽऽजौ विधिवत् प्रयुक्ताः ॥ १५॥

रथोत्थितं शामितदिक्प्रकाशं
रजो बभौ च्छादयत् सूर्यरश्मीन् ।
रेजुः पताका रथदन्तिसंस्थाः
वातेरिता भ्राम्यमाणास्समन्तात् ॥ १६॥

ध्वजा विरेजू रथदन्तिसंस्थाः
मेघैर्युता विद्युतः खे यथैव ॥ १७

धनूंषि विष्फारयतां नृपाणां
बभूव शब्दस्तुमुलोऽतिघोरः ।
विमथ्यतो देवमहासुरौघैर्
यथाऽर्णवस्यादियुगे तदानीम् ॥ १८

तदुग्रनादं बहुरूपवर्णं
तवात्मजानां समुदीर्णकोपम् ।

---

1. अ-क—रथाश्व्यपादातगजाकुलानि वै
महारथक्षितिपतिरक्षितानि । [पाठान्तरम्]

बभूव सैन्यं रिपुसैन्यहन्तृ
युगान्तमेघौघनिभं तदानीम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ षट्सप्ततितमोऽध्यायः ॥

---

भीष्मेण दुर्योधनसंहर्षणम् ॥ १ ॥ राज्ञां द्वन्द्वीभूय मेलनम् ॥ २ ॥ अर्जुनपराक्रमवर्णनम् ॥ ३ ॥

---

सञ्जयः—

गाङ्गेयस्तु सुतं तुभ्यं निश्वसन्तं यथोरगम् ।
अब्रवीद्भरतश्रेष्ठस् सम्प्रहर्षकरं वचः ॥ १

भीष्मः—

अहं द्रोणश्च कर्णश्च कृतवर्मा च सात्वतः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च सैन्धवः ॥ २

विन्दानुविन्दावावन्त्यौ बाह्लीकस्सह बाह्लिकैः ।
त्रिगर्तराजा बलवान् मागधश्च सुदुर्धरः ॥ ३

बृहद्बलश्च शल्यश्च चित्रसेनो विविंशतिः ।
कृपश्च सह सोदर्यैस् तव राजन् पदानुगाः ॥ ४

रथाश्वबहुसाहस्राश् शोभमाना महाध्वजाः ।
देशजाश्च हया राजन् स्वारूढा हयसादिभिः ॥ ५

गजेन्द्राश्च मदोद्रिक्ताः प्रभिन्नकरटामुखाः ।
पादाताश्च दृढा राजन् नानाप्रहरणा युधि ॥ ६

नानादेशसमुत्पन्नास् त्वदर्थे योद्धुमुद्यताः ।
एते चान्ये च बहवस् त्वदर्थे त्यक्तजीविताः ॥ ७
देवानपि रणे जेतुं समर्था इति मे मतिः ॥ ७॥

अवश्यं तु महाराज तव वाच्यं हितं सदा ॥ ८

[1]न शक्याः पाण्डवा जेतुं देवैरपि सवासवैः ।
वासुदेवसहायाश्च महेन्द्रसमविक्रमाः ॥ ९

सर्वथाऽहं तु राजेन्द्र करिष्ये वचनं तव ।
पाण्डवान् वा रणे जेष्ये मां वा जेष्यन्ति पाण्डवाः ॥ १०

सञ्जयः—

एवमुक्त्वा ततस्तस्मै विशल्यकरणीं शुभाम् ।
ओषधीं वीर्यसम्पन्नां राज्ञे शान्तनवो ददौ ॥ ११

[2]तदोषधिप्रभावेन विशल्योऽभूत् तदा नृपः ॥ ११॥

---

1. अ-क-ग—करिष्यन्ति महद्युद्धं पाण्डवैस्सह भारत ।
2. ख-ग-घ-ङ-म—इदमर्धं नास्ति [अधिकः पाठः]

ततः प्रभाते विमले स्वेन सैन्येन वीर्यवान् ।
[1]ययौ शान्तनवो धीमान् युद्धाय समुपस्थितः ॥ १२॥

अयोजयत् स्वयं व्यूहं भीष्मो व्यूहविशारदः ।
मण्डलं मनुजश्रेष्ठ नानाशस्त्रसमाकुलम् ॥ १३॥

सम्पूर्णं योधमुख्यैश्च तथा दन्तिपदातिभिः ।
रथैरनेकसाहस्रैस् समन्तात् परिवारितम् ॥ १४॥

[2]रथिनो रथमुख्याश्च समन्तात् पर्यवारयन् ॥ १५

अश्ववृन्दैर्महद्भिश्च [3]रथेभनिकरैस्तथा ।
धनुर्धरैः पदातैश्च यष्टितोमरधारिभिः ॥ १६

नागे नागे रथास्सप्त सप्ताश्वाश्च रथे रथे ।
अश्वेऽश्वे चर्मिणस्सप्त धानुष्कास्सप्तचर्मिणाम् ॥ १७

[4]एवं व्यूहं महाराज तव सैन्यस्य दंशितम् ।
स्थितं रणाय महते भीष्मेण परिपालितम् ॥ १८

दश चाश्वसहस्राणि द्विपानां हि तथैव च ।
रथानामयुतं चैव तव पुत्राश्च दंशिताः ॥ १९

1. ख-घ-ङ-म—इदमर्धं नास्ति
2. ख-घ-ङ-म—इदमर्धं नास्ति
3. ख-घ-ङ-म—अयं पादोऽनन्तरश्च न स्तः
4. अ-क-ग—सप्ताश्वाश्चर्मिणस्सप्त नागे नागे तथा भवन् ।
[अधिकः पाठः]

चित्रसेनादयश्शूरा अभ्यरक्षन् पितामहम् ।
रक्ष्यमाणस्तु तैश्शूरैस् [1]सन्नद्धोऽभूत् पितामहः ॥ २०
[2]ते शूरा गोप्यमानाश्च तेन भीष्मेण धीमता ।
सन्नद्धास्समदृश्यन्त राजानश्च महाबलाः ॥ २१
दुर्योधनस्स्वसोदर्यैर् दंशितो रथमास्थितः ।
विरराज श्रिया युक्तो महेन्द्रस्त्रिदिवे यथा ॥ २२
ततश्शब्दो महानासीत् पुत्राणां तत्र भारत ।
रथघोषश्च तुमुलो वादित्राणां च निस्स्वनः ॥ २३
भीष्मेण धार्तराष्ट्राणां सह प्रत्यङ्मुखे युधि ।
मण्डलस्स महाव्यूहस् सुदुर्गोऽमित्रघातनः ॥ २४
सर्वतश्शुशुभे राजन् रणेऽरीणां दुरासदः ॥ २४॥
मण्डलं तु समालोक्य व्यूहं भीष्मेण कल्पितम् ।
स्वयं युधिष्ठिरो राजा व्यूहं वज्रमकल्पयत् ॥ २५॥
तथा व्यूढेष्वनीकेषु योद्धुकामा महारथाः ।
रथिनस्सादिनश्चैव सिंहनादमथानदन् ॥ २६॥
बिभित्सवस्ततो व्यूहान् निर्ययुस्तावका नृपाः ।
रथस्था युद्धसन्नद्धाः पाण्डवैर्युद्धकाङ्क्षिणः ॥ २७॥
भारद्वाजो ययौ मात्स्यं द्रौणिश्चापि शिखण्डिनम् ।

1. ख-ब-ङ-म—गोप्यमानश्च तेन ते [पाठान्तरम्]
2. ख-ब-ङ-म—इदमर्धं नास्ति

स्वयं दुर्योधनो राजा पार्षतं समुपाद्रवत् ॥ २८॥
नकुलस्सहदेवश्च राजन् मद्रेशमीयतुः ।
विन्दानुविन्दावावन्त्यौ युधामन्युमभिद्रुतौ ॥ २९॥
सर्वे नृपास्तु समरे धनञ्जयमयोधयन् ।
भीमसेनं रणे यत्तो हार्दिक्यस्समवारयत् ॥ ३०॥
चित्रसेनं विकर्णं च तथा दुश्शासनं विभुः ।
आर्जुनिस्समरे राजंस् तव पुत्रानयोधयत् ॥ ३१॥
प्राग्ज्योतिषं महेष्वासं हैडिम्बो राक्षसोत्तमः ।
अभिदुद्राव वेगेन मत्तो मत्तमिव द्विपम् ॥ ३२॥
अलम्बुसस्तदा राजन् सात्यकिं युद्धदुर्मदम् ।
ससैन्यं समरे क्रुद्धो राक्षसस्समुपाद्रवत् ॥ ३३॥
भूरिश्रवा रणे यत्तो धृष्टकेतुमयोधयत् ॥ ३४
श्रुतायुषं तु राजानं धर्मपुत्रो युधिष्ठिरः ।
चेकितानस्तु समरे कृपमेवान्वयोधयत् ॥ ३५
ये चान्येऽपि नृपा यत्ता भीष्ममेव महारथम् ।
[1]प्रययुर्युद्धसम्मत्ता युधि तं वै जिगीषवः ॥ ३६
ततो राजसहस्राणि परिवव्रुर्धनञ्जयम् ।
शक्तितोमरनाराचगदापरिघपाणयः ॥ ३७

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

अर्जुनोऽथ भृशं क्रुद्धो वार्ष्णेयमिदमब्रवीत् ॥ ३७॥

अर्जुनः—

पश्य माधव सैन्यानि धार्तराष्ट्रस्य संयुगे ।
व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना ॥ ३८॥

युद्धाभिकामाञ् शूरांश्च पश्य माधव दंशितान् ।
त्रिगर्तराजं सहितं भ्रातृभिः पश्य माधव ॥ ३९॥

अद्यैतान्नाशयिष्यामि पश्यतस्ते जनार्दन ।
य इमे मां यदुश्रेष्ठ योद्धुकामा रणाजिरे ॥ ४०॥

सञ्जयः—

एतावदुक्त्वा कौन्तेयो धनुर्ज्यामवमृज्य च ।
ववर्ष शरवर्षाणि नराधिपगणान् प्रति ॥ ४१॥

तेऽपि तं परमेष्वासं शस्त्रवर्षैरवारयन् ।
तटाकमिव धाराभिर् यथा प्रावृषि तोयदाः ॥ ४२॥

हाहाकारो महानासीत् तव सैन्ये विशां पते ॥ ४३

छाद्यमानौ रणे कृष्णौ शरैर्दृष्ट्वा महारथैः ।
देवा देवर्षयश्चैव गन्धर्वाश्च महोरगाः ॥ ४४

विस्मयं परमं जग्मुर् दृष्ट्वा कृष्णौ तथाऽऽगतौ ॥ ४४॥

ततः क्रुद्धो रणे पार्थो ह्यैन्द्रमस्त्रमवासृजत् ॥ ४५

तत्राद्भुतमपश्याम विजयस्य पराक्रमम् ।

शरवृष्टिं परैरस्तां शरौघैः पर्यवारयत् ॥ ४६

न च तत्राप्यनिर्भिन्नः कश्चिदासीद्विशां पते ॥ ४६॥

तेषां राजसहस्राणां हयानां दन्तिनां तथा ।
द्वाभ्यां त्रिभिश्शरैश्चान्यान् पार्थो विव्याध मारिष ॥ ४७॥

ते हन्यमानाः पार्थेन भीष्मं शान्तनवं ययुः ।
अगाधे मज्जतां तेषां भीष्मस्त्राता तदाऽभवत् ॥ ४८॥

आपतद्भिस्तु तैस्तत्र प्रभग्नं तावकं बलम् ।
सञ्चुक्षुभे महाराज वातेनेव महार्णवः ॥ ४९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
॥ भीष्मपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये ४९॥ श्लोकाः ]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

---

द्रोणेन विराटसूनोः शङ्खस्य वधः ॥ १ ॥ द्वन्द्वयुद्धम् ॥ २ ॥

---

सञ्जयः—

प्रवृत्तमात्रे सङ्ग्रामे निवृत्ते च सुशर्मणि ।
प्रभग्नेषु च वीरेषु पाण्डवेन महात्मना ॥ १

क्षोभ्यमाणे बले तूर्णं सागरप्रतिमे तव ।

प्रत्युद्याते च गाङ्गेये त्वरितं विजयं प्रति ॥ २

दृष्ट्वा दुर्योधनो राजा रणे पार्थस्य विक्रमम् ।
त्वरमाणस्समभ्येत्य सर्वांस्तानब्रवीन्नृपान् ॥ ३

तेषां च प्रमुखे वीरं सुशर्माणं महाबलम् ।
मध्ये सर्वस्य सैन्यस्य भृशं संहर्षयन् वचः ॥ ४

दुर्योधनः—

एष शान्तनवो भीष्मो योद्धुकामो धनञ्जयम् ।
सर्वात्मना कुरुश्रेष्ठस् त्यक्त्वा जीवितमात्मनः ॥ ५

तं प्रयान्तं पुरो वीरास् सर्वसैन्येन भारतम् ।
संयुक्तास्समरे सर्वे पालयध्वं पितामहम् ॥ ६

सञ्जयः—

बाढमित्येवमुक्त्वा तु तान्यनीकानि सर्वशः ।
नरेन्द्राणां महाराज जग्मुस्सर्वे पितामहम् ॥ ७

ततः प्रयातस्सहसा भीष्मश्शान्तनवोऽर्जुनम् ।
रणे भारतमायान्तम् आससाद महाबलम् ॥ ८

ततश्श्वेतपताकेन श्वेतवर्महयेन च ।
महता मेघनादेन रथेन सुविराजता ॥ ९

पश्यतां सर्वसैन्यानाम् उपायातो धनञ्जयः ॥ ९॥

अभवत् तुमुलो नादो हयान् दृष्ट्वा किरीटिनः ॥ १०

अभीशुहस्तं कृष्णं च दृष्ट्वाऽऽदित्यमिवापरम् ।
मध्यंदिनगतं सङ्ख्ये न शेकुः प्रतिवीक्षितुम् ॥ ११
ततश्शान्तनवं भीष्मं श्वेताश्वं श्वेतकार्मुकम् ।
न शेकुः पाण्डवा द्रष्टुं श्वेतं ग्रहमिवापरम् ॥ १२
स सर्वतः परिवृतस् त्रिगर्तैस्तु महात्मभिः ।
भ्रातृभिस्सह पुत्रैश्च तथाऽन्यैश्च महारथैः ॥ १३
[1]पृष्ठतस्तु जुगोपात्र भीष्मं युधि सुयोधनः ॥ १३॥
भारद्वाजस्तु समरे मात्स्यं विव्याध पत्रिणा ॥ १४
ध्वजमेकेन [2]वाणेन पातयामास भूतले ।
[3]धनुश्चिच्छेद राजेन्द्र शितेनैकेन पत्रिणा ॥ १५
तदपास्य धनुश्छिन्नं विराटो वाहिनीपतिः ।
अन्यदादत्त वेगेन धनुर्भारसहं दृढम् ॥ १६
शरांश्चाशीविषाकाराञ् ज्वलितान् पन्नगानिव ॥ १६॥
द्रोणं त्रिभिः प्रविव्याध चतुर्भिश्चास्य वाजिनः ।
ध्वजमेकेन विव्याध सारथिं चास्य पञ्चभिः ॥ १७॥
धनुश्चैकेषुणाऽविध्यत् [4]ततोऽविध्याद्द्विजर्षभम् ॥ १८

---

1. ख-घ-ङ-म—इदमर्धं नास्ति
2. ख-ग-घ-ङ-म—चिच्छेद धनुरेकेन पत्रिणा [पाठान्तरम्]
3. ख-घ-ङ-म—इदमर्धं नास्ति
4. ख-ग-घ—ततः क्रुध्यद्द्विजर्षभः ङ-म—क्रुद्धस्तस्य द्विजर्षभः

[1]ततः क्रुद्धो द्विजश्रेष्ठश् चापमुद्यम्य वै दृढम् ।
तस्य द्रोणोऽवधीदश्वान् शरैस्सन्नतपर्वभिः ।। १९
अच्छिनद्भरतश्रेष्ठ सूतमेकेन पत्रिणा ।। १९।।
स हताश्वादवप्लुत्य स्यन्दनाद्धतसारथेः ।
आरुरोह रथं तूर्णं पुत्रस्य रथिनां वरः ।। २०।।
ततस्तौ तु पितापुत्रौ भारद्वाजं रथे स्थितौ ।
महता शरवर्षेण वारयामासतुर्बलात् ।। २१।।
भारद्वाजस्ततः क्रुद्धश् शरमाशीविषोपमम् ।
चिक्षेप समरे राजन् शङ्खं प्रति जनेश्वरः ।। २२।।
स तस्य कवचं भित्त्वा पीत्वा शोणितमाहवे ।
जगाम धरणीं बाणो लोहितार्द्रवरच्छदः ।। २३।।
स पपात रथात् तूर्णं भारद्वाजशराहतः ।
धनुस्त्यक्त्वा शरांश्चैव पितुरेव समीपतः ।। २४।।
हतं तमात्मजं दृष्ट्वा विराटः प्राद्रवद्भयात् ।
उत्सृज्य समरे द्रोणं व्यात्ताननमिवान्तकम् ।। २५।।
भारद्वाजस्ततस्तूर्णं पाण्डवानां महाचमूम् ।
दारयामास समरे शतशोऽथ सहस्रशः ।। २६।।
शिखण्ड्यपि समासाद्य द्रौणिमाहवशोभिनम् ।

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

आजघान भ्रुवोर्मध्ये नाराचैस्त्रिभिराशुगैः ॥ २७॥
प्रबभौ नरशार्दूलो ललाटे संस्थितैस्त्रिभिः ।
शिखरैः काञ्चनमयैर् मेरुस्त्रिभिरिवोच्छ्रितैः ॥ २८॥
अश्वत्थामा ततः क्रुद्धो निमेषार्धाच्छिखण्डिनः ।
सूतं ध्वजमथो राजंस् तुरगानायुधानि च ॥ २९॥
शरैर्बहुभिराहत्य पातयामास संयुगे ॥ ३०
स हताश्वादवप्लुत्य रथान्निहतसारथेः ।
खड्गमादत्त वेगेन विपुलं चर्म चापरम् ॥ ३१
श्येनवद्व्यचरत् क्रुद्धश् शिखण्डी शत्रुतापनः ॥ ३१॥
सखड्गस्य महाराज चरतस्तस्य संयुगे ।
नान्तरं ददृशे द्रौणिस् तदद्भुतमिवाभवत् ॥ ३२॥
ततश्शरसहस्राणि बहूनि भरतर्षभ ।
प्रेषयामास समरे द्रौणिस्समरकोपनः ॥ ३३॥
तामापतन्तीं सहसा [1]शरवृष्टिं सुदारुणाम् ।
असिना तीक्ष्णधारेण चिच्छेद बलिनां वरः ॥ ३४॥
ततोऽस्य विपुलं द्रौणिश् शरचन्द्रामलप्रभम् ।
चर्माच्छिनदसिं चापि लघुहस्तश्च संयुगे ॥ ३५॥
शितैस्तं बहुशो राजन् तदा विव्याध मार्गणैः ॥ ३६

1. अ—इतस्सप्तार्धानि न सन्ति

शिखण्डी तु ततः खड्गं खण्डितं द्रौणिसायकैः ।
आविध्य व्यसृजत् तूर्णं द्रोणपुत्राय वेगितः ॥ ३७

तमापतन्तं सहसा कालानलसमप्रभम् ।
शरैरचूर्णयद्द्रौणिर् दर्शयन् हस्तलाघवम् ॥ ३८
शिखण्डिनं च विव्याध शरैर्बहुभिराशुगैः ॥ ३८॥

शिखण्डी तु भृशं राजंस् ताड्यमानोऽनिशं शरैः ।
आरुरोह रथं तूर्णं माधवस्य महात्मनः ॥ ३९॥

सात्यकिस्त्वथ सङ्क्रुद्धो राक्षसं क्रूरमाहवे ।
अलम्बुसं शरैर्घोरैर् विव्याध बलिनं बली ॥ ४०॥

राक्षसेन्द्रस्ततस्तस्य धनुश्चिच्छेद मारिष ।
अर्धचन्द्रेण समरे तं च विव्याध सायकैः ॥ ४१॥
मायां च राक्षसीं कृत्वा शरवर्षैरवाकिरत् ॥ ४२

तत्राद्भुतमपश्याम शैनेयस्य पराक्रमम् ।
नासम्भ्रमत् स समरे वध्यमानश्शितैश्शरैः ॥ ४३

ऐन्द्रमस्त्रं च वार्ष्णेयो योजयामास वीर्यवान् ।
विजयाद्यदनुप्राप्तं माधवेन यशस्विना ॥ ४४

तदस्त्रं भस्मसात्कृत्वा मायां तां राक्षसीं तदा ।
अलम्बुसं रणे राजन् शितैरस्त्रैरवाकिरत् ॥ ४५
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ ४५॥

[1]स तु सम्पीडितस्तेन माधवेन यशस्विना ।
प्रदुद्राव भयाद्रक्षो हित्वा सात्यकिमाहवे ॥ ४६॥

तमजय्यं मघवता जित्वा भारत सात्यकिः ।
शैनेयः प्रणदन्नादं योधानां तव पश्यताम् ॥ ४७॥

न्यहनत् तावकांश्चापि सात्यकिस्सत्यविक्रमः ।
निशितैर्बहुभिर्बाणैः प्राद्रवन्त भयार्दिताः ॥ ४८॥

एतस्मिन्नेव काले तु द्रुपदस्यात्मजो बली ।
धृष्टद्युम्नो महाराज तव पुत्रं जनेश्वरम् ॥ ४९॥

छादयामास समरे शरैस्सन्नतपर्वभिः ॥ ५०

छाद्यमानोऽपि विशिखैर् धृष्टद्युम्नेन भारत ।

विव्यथे नैव राजेन्द्र पुत्रस्ते भरतर्षभ ॥ ५१

धृष्टद्युम्नस्तु सङ्क्रुद्धो राजन् [2]विव्याध पत्रिभिः ।
नवत्या त्ववनीपालस् तदद्भुतमिवाभवत् ॥ ५२

तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद मारिष ।
हयांश्च चतुरश्शीघ्रं निजघान महारथः ॥ ५३

शरैश्चैनं सुनिशितैश् शीघ्रं विव्याध सप्तभिः ॥ ५३॥

1. घ—अर्धत्रयं नास्ति
2. ख—विव्याध सप्तभिः । स हताश्वादित्यादि
वर्तते । मध्ये अर्धचतुष्टयं नास्ति

स हताश्वान्महाबाहुर् अवप्लुत्य रथाद्बली ।
पदातिरसिमुद्यम्य प्राद्रवत् पार्षतं प्रति ॥ ५४॥

शकुनिस्तं समभ्येत्य राजगृध्नुर्महाबलः ।
राजानं सर्वलोकस्य रथमारोपयत् स्वकम् ॥ ५५॥

ततो नृपं पराजित्य पार्षतः परवीरहा ।
न्यहनत् तावकं सैन्यं वज्रपाणिरिवासुरान् ॥ ५६॥

कृतवर्मा रणे भीमं शरैराच्छेन्महारथम् ।
प्रच्छादयामास च तं महामेघो रविं यथा ॥ ५७॥

ततः प्रहस्य समरे भीमसेनः परंतपः ।
प्रेषयामास सङ्क्रुद्धस् सायकान् कृतवर्मणि ॥ ५८॥

तैरर्द्यमानोऽतिरथस् सात्वतश्शस्त्रकोविदः ।
नाकम्पत महाराज भीमं चाच्छैच्छितैश्शरैः ॥ ५९॥

तस्याश्वांश्चतुरो हत्वा भीमो भीमपराक्रमः ।
सारथिं पातयामास ध्वजं च सुपरिष्कृतम् ॥ ६०॥

शरैर्बहुविधैश्चैनम् आच्छिन्नः परवीरहा ।
शकलीकृतसर्वाङ्गश् श्वाविट् तु शललैरिव ॥ ६१॥

हताश्वात् तु रथात् तूर्णं सौबलस्य रथं ययौ ।
स्यालस्य ते महाराज तव पुत्रस्य पश्यतः ॥ ६२॥

भीमसेनोऽपि सङ्क्रुद्धो गजानीकमुपाद्रवत् ।
निजघान गजांश्चैव दण्डपाणिरिवान्तकः ॥ ६३॥
[1]अन्तकाले महाराज प्रजा इव जनेश्वर ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये ६४ श्लोकाः ]

## ॥ अष्टसप्ततितमोऽध्यायः ॥

द्वन्द्वयुद्धवर्णनम् ॥

धृतराष्ट्रः—

बहूनि सुविचित्राणि द्वैरथानि स्म सञ्जय ।
पाण्डूनां मामकैस्सार्धम् अश्रौषं जल्पतस्तव ॥ १

न चैव मामकं कञ्चिद् धृष्टं शंससि संयुगे ।
नित्यं पाण्डुसुतान् हृष्टान् अभग्नांश्चैव शंससि ॥ २

हीयमानान् विमनसो मामकान् विगतौजसः ॥ २॥
[2-3]मानुषं न परं मन्ये दिष्टमत्र न संशयः ॥ ३

1. ख-च-ङ-म—इदमर्धं नास्ति
2. अ-क-ग—प्रथमे संयुगे तात प्रनष्टानपि शंससि । [अधिकः पाठः]
3. ख-ग-घ-ङ-म—वदसे संयुगे तात दिष्टमेव न

सञ्जयः—

यथाशक्ति यथोत्साहं युद्धे चेष्टन्ति तावकाः ।
दर्शयन्तः परं शक्त्या पौरुषं पुरुषर्षभ ॥ ४

गङ्गायास्सुरनद्या वै स्वादुभूतं यथोदकम् ।
[1]महोदधिं समभ्येत्य लवणत्वं निगच्छति ॥ ५

तथा तत् पौरुषं राजंस् तावकानां महात्मनाम् ।
प्राप्य पाण्डुसुतान् वीरान् व्यर्थं भवति संयुगे ॥ ६

यतमानान् यथाशक्ति कुर्वाणान् कर्म दुष्करम् ।
न दोषेण कुरुश्रेष्ठ कौरवान् गन्तुमर्हसि ॥ ७

तवापराधात् सुमहान् सपुत्रस्य विशां पते ।
पृथिव्याः प्रक्षयो घोरो यमराष्ट्रविवर्धनः ॥ ८

आत्मदोषात् समुत्पन्नं शोचितुं नार्हसे नृप ॥ ८॥
[2]न हि रक्षन्ति राजानस् सर्वार्थेनापि जीवितम् ॥ ९

युद्धेन स्वार्जिताँ लोकान् इच्छन्तो वसुधाधिपाः ।
चमूं विगाह्य युद्ध्यन्ते नित्यं स्वर्गपरायणाः ॥ १०

पूर्वाह्णे तु महाराज प्रावर्तत जनक्षयः ।
तन्ममैकमना भूत्वा शृणु देवासुरोपमम् ॥ ११

1. ख-ग-घ-ङ-म—महोदधिसमभ्याशे
2. अ-क—नास्तीदमर्धम्

आवन्त्यौ तु महात्मानौ महेष्वासौ महाबलौ ।
युधामन्युमभिप्रेक्ष्य समीयतुररिन्दमौ ॥ १२
[1]तेषां प्रववृते युद्धं सुमहद्रोमहर्षणम् ॥ १२॥
युधामन्युस्सुसङ्क्रुद्धो भ्रातरौ देवरूपिणौ ।
विव्याध निशितैस्तूर्णं शरैस्सन्नतपर्वभिः ॥ १३॥
तावेनं प्रत्ययुध्येतां समरे चित्रयोधिनौ ॥ १४
युध्यतां हि यथा राजन् विशेषो न व्यदृश्यत ।
यततां शत्रुनाशाय कृतप्रतिकृतैषिणाम् ॥ १५
युधामन्यू रणे राजन्ननुविन्दस्य सायकैः ।
चतुर्भिश्चतुरो वाहान् अनयद्यमसादनम् ॥ १६
भल्लाभ्यां च सुतीक्ष्णाभ्यां धनुः केतुं च मारिष ।
चिच्छेद समरे राजंस् तदद्भुतमिवाभवत् ॥ १७
त्यक्त्वाऽनुविन्दोऽथ रथं विन्दस्य रथमास्थितः ।
धनुर्गृह्य तथा चित्रं भारसाधनमुत्तमम् ॥ १८
तावेकरथमारूढावावन्त्यौ बलिनां वरौ ।
शरान् मुमुचतुस्तूर्णं युधामन्यौ महात्मनि ॥ १९
ताभ्यां मुक्ता महावेगाश् शराः काञ्चनभूषणाः ।
दिवाकरपथं प्राप्य च्छादयामासुरम्बरम् ॥ २०

---

1. अ-क—अर्धचतुष्टयं न दृश्यते

युधामन्युरसम्भ्रान्तो भ्रातरौ तौ महारथौ ।
ववर्ष शरवर्षेण सारथिं च न्यपातयत् ॥ २१
तस्मिन् निपतिते भूमौ गतसत्त्वे तु सारथौ ।
रथः प्रदुद्राव दिशस् तुरगैरनिवारितैः ॥ २२
[1]तौ तु दृष्ट्वा महेष्वासौ पुत्रौ तु विमुखीकृतौ ।
धृष्टद्युम्नो महाराज यज्ञसेनसुतः प्रभुः ॥ २३
पौरुषं ख्यापयंस्तूर्णं व्यधमत् तव वाहिनीम् ॥ २३॥
सा वध्यमाना समरे धार्तराष्ट्री महाचमूः ।
वेदनां परमां प्राप्ता विषं पीत्वेव मानवः ॥ २४॥
हैडिम्बो राक्षसः क्रुद्धः प्राग्ज्योतिषमुपाद्रवत् ।
रथेनादित्यवर्णेन स जगाम महाबलः ॥ २५॥
ततः प्राग्ज्योतिषो राजा नागराजं समास्थितः ।
यथा वज्रधरः पूर्वं सङ्ग्रामे तारकामये ॥ २६॥
[2]ऐरावतं समास्थाय ह्ययुध्यत महाबलः ॥ २७
[3]तत्र देवास्सगन्धर्वा ऋषयश्च समागताः ।
विशेषं तत्र न विदुर् हैडिम्बभगदत्तयोः ॥ २८
यथा सुरपतिश्शक्रस् त्रासयामास दानवान् ।

1. ख-घ-ङ-म—इदमर्धं नास्ति 2. ख-घ-ङ-म—इदमर्धं नास्ति
3. अ-क-ख—अर्धद्वयं नास्ति

तथा स समरे राजंस् त्रासयामास पाण्डवान् ॥ २९

तेन विद्राव्यमाणास्ते पाण्डवास्सर्वतो दिशम् ।
त्रातारं नाभ्यविन्दन्त स्वेष्वनीकेषु भारत ॥ ३०

[1]भैमसेनिं रथस्थं तु तत्रापश्याम भारत ।
शेषा विमनसो भूत्वा प्राद्रवन्त महारथाः ॥ ३१

निवृत्तेषु तु पाण्डूनां पुनस्सैन्येषु भारत ।
आसीन्निष्ठानको घोरस् तव सैन्यस्य संयुगे ॥ ३२

घटोत्कचस्ततो राजन भगदत्तं महारणे ।
शरैः प्रच्छादयामास मेरुं गिरिमिवाम्बुदः ॥ ३३

निहत्य तान् शरान् राजन् राक्षसस्य धनुश्च्युतान् ।
भैमसेनिं रणे तूर्णं भृशं मर्मस्वताडयत् ॥ ३४

स ताड्यमानो बहुभिश् शरैस्सन्नतपर्वभिः ।
न विव्यथे राक्षसेन्द्रो भिद्यमान इवाचलः ॥ ३५

[2]भगदत्तं राक्षसेन्द्रो हैडिम्बोऽपि महाबलः ।
निजघान शरैस्तीक्ष्णैर् हेमपुङ्खैस्सुदारुणैः ॥ ३६
न विव्यथे भिद्यमानो भगदत्त इवाचलः ॥ ३६॥

पुनः प्राग्ज्योतिषः क्रुद्धस् तोमरान् वै चतुर्दश ।

---

1. अ-क—अर्धचतुष्टयं न दृश्यते
2. ख-घ-ङ-म—इदमर्धत्रयं नास्ति

प्रेषयामास समरे तांस्तु चिच्छेद राक्षसः ॥ ३७॥
स तांश्छित्त्वा महाबाहुस् तोमरान् निशितैश्शरैः ।
भगदत्तं तु विव्याध सप्तत्या कङ्कपत्रिभिः ॥ ३८॥
तत्र देवास्सगन्धर्वा ऋषयश्च समागताः ।
विशेषं तत्र न विदुर् हैडिम्बभगदत्तयोः ॥ ३९॥
ततः प्राग्ज्योतिषो राजा प्रहसन्निव भारत ।
तस्याश्वांश्चतुरो राजन् पातयामास सायकैः ॥ ४०॥
हताश्वे तु रथे तिष्ठन् राक्षसेन्द्रः प्रतापवान् ।
शक्तिं चिक्षेप वेगेन प्राग्ज्योतिषगजं प्रति ॥ ४१॥
तामापतन्तीं सहसा हेमदण्डां सुवेगिताम् ।
त्रिधा चिच्छेद नृपतिस् सा व्यकीर्यत मेदिनीम् ॥ ४२॥
शक्तिं विनिहतां दृष्ट्वा हैडिम्बः प्राद्रवद्भयात् ।
यथेन्द्रस्य भयात् पूर्वं नमुचिर्दैत्यसत्तमः ॥ ४३॥
तं विजित्य रणे शत्रुं विख्यातः ख्यातपौरुषम् ।
अजय्यं समरे राजन् यमेन वरुणेन च ॥ ४४॥
पाण्डवीं समरे सेनां संममर्द स कुञ्जरः ।
यथा वनगजो राजन् मृद्नंश्चरति पद्मिनीम् ॥ ४५॥
मद्रेश्वरस्तु समरे यमाभ्यां सह सङ्गतः ।
स्वस्रीयौ छादयाञ्चक्रे सायकैः पाण्डुनन्दनौ ॥ ४६॥

सहदेवस्तु समरे मातुलं प्रेक्ष्य सङ्गतम् ।
अवारयच्छरौघेण मेघो यद्वद्दिवाकरम् ॥ ४७॥
[1]सञ्छाद्यमानस्तु शरैर् हृष्टरूपधरोऽभवत् ।
तयोश्चास्याभवत् प्रीतिर् अतुला मातृकारणात् ॥ ४८॥
ततः प्रहस्य समरे नकुलस्य महारथः ।
ध्वजं चिच्छेद बाणेन धनुश्चैकेन मारिष ॥ ४९॥
अथैनं छिन्नधन्वानं छादयन्निव भारत ।
निजघान रणे तं तु सूतं चास्य न्यपातयत् ॥ ५०॥
[2]अश्वांश्च चतुरो राजंश् चतुर्भिस्सायकोत्तमैः ।
प्रेषयामास मद्रेशो यमस्य सदनं प्रति ॥ ५१॥
हताश्वात् तु रथात् तूर्णम् अवप्लुत्य महारथः ।
आरुरोह ततो यानं भ्रातुरेव नराधिपः ॥ ५२॥
एकस्थौ तु ततश्शूरौ दृढविक्षिप्तकार्मुकौ ।
मद्रराजरथं तूर्णं छादयामासतू रुषा ॥ ५३॥
सञ्छाद्यमानो बहुभिश् शरैस्सन्नतपर्वभिः ।
स्वस्रीयाभ्यां नरव्याघ्रो नाकम्पत यथाऽचलः ॥ ५४॥
पृषत्कानां सहस्राणि प्रहसन्निव तावपि ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—ततः प्रसह्य समरे नकुलस्य महारथः । [ अधिकः पाठः ]

सृजन् रुरोध समरे मेघो वृष्ट्या यथाऽचलम् ॥ ५५॥

सहदेवस्ततः क्रुद्धस् शरमुत्क्षिप्य वीर्यवान् ।
मद्रराजमभिप्रेक्ष्य प्रेषयामास संयुगे ॥ ५६॥

स शरः प्रेषितस्तेन गरुडानिलवेगवान् ।
मद्रराजं विनिर्भिद्य निपपात महीतले ॥ ५७॥

स गाढविद्धो व्यथितो रथोपस्थे महारथः ।
निषसाद महाराज कश्मलं च जगाम ह ॥ ५८॥

तं विसंज्ञं निपतितं सूतस्सम्प्रेक्ष्य संयुगे ।
अपोवाह रथेनाजौ यमाभ्यामतिपीडितम् ॥ ५९॥

दृष्ट्वा मद्रेश्वररथं धार्तराष्ट्राः पराङ्मुखाः ।
सर्वे विमनसो भूत्वा नेदमस्तीत्यचिन्तयन् ॥ ६०॥

निर्जित्य मातुलं सङ्ख्ये माद्रीपुत्रौ महारथौ ।
दध्मतुर्मुदितौ शङ्खौ सिंहनादं च नेदतुः ॥ ६१॥

हृष्टौ चाद्रवतां क्षिप्रं तव सैन्यं विशां पते ।
यथा दैत्यचमूं राजन्निन्द्रोपेन्द्रावरिन्दमौ ॥ ६२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये ६२॥ श्लोकाः ]

## ॥ ऊनाशीतितमोऽध्यायः ॥

युधिष्ठिरादियुद्धवर्णनम् ॥

सञ्जयः—

ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे ।
श्रुतायुषमभिप्रेक्ष्य चोदयामास वाजिनः ॥ १

[1]ततस्तु त्वरितो राजा श्रुतायुषमरिन्दमम् ।
निजघ्ने सायकैस्तीक्ष्णैर् नवभिर्नतपर्वभिः ॥ २

स संवार्य ततो राजन् प्रेषितान् धर्मसूनुना ।
शरान् सप्त महेष्वासः कौन्तेयाय समर्पयत् ॥ ३

ते तस्य कवचं भित्त्वा पपुश्शोणितमाहवे ।
असूनिव विचिन्वन्तो देहे तस्य महात्मनः ॥ ४

[2]पाण्डवस्तु भृशं विद्धस् तेन राज्ञा महात्मना ।
रणे वराहकर्णेन राजानं हृद्यविध्यत ॥ ५

अथापरेण भल्लेन केतुं तस्य महात्मनः ।
रथश्रेष्ठो रथात् तूर्णं भूमौ पार्थो न्यपातयत् ॥ ६

[3]धर्मराजः पुनः केतुं तस्य राज्ञश्श्रुतायुषः ।

---

1. ङ-म—अर्धद्वयं नास्ति 2. अ-क—नास्तीदमर्धम्
3. ख-ब-ङ-म—इदमर्धद्वयं नास्ति

छित्त्वा स पातयामास योधानां पश्यतां भुवि ॥ ७
केतुं निपतितं दृष्ट्वा श्रुतायुस्तं तु पार्थिवः ।
पाण्डवं निशितैर्बाणै राजन् विव्याध सप्तभिः ॥ ८
ततः क्रोधात् प्रजज्वाल धर्मराजो युधिष्ठिरः ।
यथा युगान्ते भूतानि धक्ष्यन्निव हुताशनः ॥ ९
क्रुद्धं तु पाण्डवं दृष्ट्वा देवगन्धर्वदानवाः ।
प्रविव्यथुर्महाराज व्याकुलं चाप्यभूज्जगत् ॥ १०
सर्वेषां चापि भूतानाम् इदमासीन्मनोगतम् ।
त्रींल्लोकानद्य सङ्क्रुद्धो नृपोऽयं धक्ष्यतीति वै ॥ ११
महर्षयश्चैव देवाश्च चक्रुस्स्वस्त्ययनं महत् ।
लोकानां नृप शान्त्यर्थं क्रोधिते पाण्डवे तथा ॥ १२
ततः क्रोधसमाविष्टस् सृक्किणी परिलेलिहन् ।
दधारात्मवपुर्घोरं युगान्ताग्निसमप्रभम् ॥ १३
ततस्सैन्यानि सर्वाणि तावकानि विशां पते ।
निराशान्यभवंस्तत्र जीवितं प्रति भारत ॥ १४
[1]स तु धैर्येण तं कोपं सन्निवार्य महायशाः ।
श्रुतायुषः प्रचिच्छेद मुष्टिदेशे महद्धनुः ॥ १५
अथैनं छिन्नधन्वानं नाराचेन स्तनान्तरे ।

1. घ—अर्धचतुष्टयं नास्ति

निर्बिभेद तदा राजा सर्वसैन्यस्य पश्यतः ॥ १६
सत्वरं च रणे राजन् वाहांस्तस्य महात्मनः ।
निजघान शरैः क्षिप्रं सूतं च स महाबलः ॥ १७
हताश्वं तु रथं त्यक्त्वा दृष्ट्वा राज्ञश्च विक्रमम् ।
स प्रदुद्राव वेगेन श्रुतायुस्समरात् तदा ॥ १८
तस्मिञ्जिते महेष्वासे धर्मपुत्रेण संयुगे ।
दुर्योधनबलं राजन् सर्वमासीत् पराङ्मुखम् ॥ १९
एवं जित्वा रणे राजन् धर्मपुत्रो युधिष्ठिरः ।
व्यात्ताननो यथा व्याघ्रस् तव सैन्यं जघान तत् ॥ २०
चेकितानस्तु वार्ष्णेयो गौतमं रथिनां वरम् ।
प्रेक्षतां सर्वसैन्यानां छादयामास सायकैः ॥ २१
सन्निवार्य शरांस्तांस्तु कृपश्शारद्वतो युधि ।
चेकितानं रणे यत्तो राजन् विव्याध पत्रिभिः ॥ २२
अथापरेण भल्लेन धनुश्चिच्छेद मारिष ।
सारथिं चास्य समरे क्षिप्रहस्तो न्यपातयत् ॥ २३
हयांश्चास्यावधीद्राजंस् तथोभौ पार्ष्णिसारथी ।
सोऽवप्लुत्य रथात् तूर्णं गदां जग्राह सात्वतः ॥ २४
स तया वीरघातिन्या गदया रथिनां वरः ।
गौतमस्य हयान् हत्वा सारथिं स न्यपातयत् ॥ २५

भूमिष्ठो गौतमस्तस्य शरांश्चिक्षेप षोडश ॥
ते शरास्सात्त्वतं भित्त्वा प्राविशंस्तरसा तलम् ॥ २६
चेकितानस्ततः क्रुद्धः पुनश्चिक्षेप तां गदाम् ।
गौतमस्य वधाकाङ्क्षी वृत्रस्येव पुरन्दरः ॥ २७
तामापतन्तीं विमलाम् अश्मगर्भोपमां गदाम् ।
शरैरनेकसाहस्रैर् वारयामास गौतमः ॥ २८
चेकितानस्ततः क्रुद्धो गदां दृष्ट्वा निपातिताम् ।
खड्गमादाय वेगेन गौतमं समुपाद्रवत् ॥ २९
गौतमोऽपि धनुस्त्यक्त्वा प्रगृह्यासिं सुसंशितम् ।
वेगेन महता राजंश् चेकितानमुपाद्रवत् ॥ ३०
तावुभौ रथिनां श्रेष्ठौ निस्त्रिंशवरधारिणौ ।
निस्त्रिंशाभ्यां सुतीक्ष्णाभ्याम् अन्योन्यं सन्ततक्षतुः ॥ ३१
निस्त्रिंशवेगाभिहतौ ततस्तौ पुरुषर्षभौ ।
धरणीं समनुप्राप्तौ पश्यतां सर्वधन्विनाम् ॥ ३२
मूर्च्छयाऽभिपरीताङ्गौ व्यायामेन च मोहितौ ॥ ३२॥
ततोऽभ्यधावद्वेगेन करूषस्सुहृत्तया ।
चेकितानं तथाभूतं दृष्ट्वा समरदुर्मदम् ॥ ३३॥
रथमारोपयच्चैनं सर्वसैन्यस्य पश्यतः ॥ ३४
तथैव शकुनिश्शूरस् स्यालस्तव विशां पते ।

आरोपयद्रथं तूर्णं गौतमं रथिनां वरम् ॥ ३५

सौमदत्तिं ततः क्रुद्धो धृष्टकेतुर्महाबलः ।
नवत्या सायकैस्तीक्ष्णै राजन् विव्याध वक्षसि ॥ ३६

[1]सौमदत्तिरुरस्थैस्तैर् भृशं बाणैरशोभत ।
मध्यंदिने महाराज रश्मिभिस्तपनो यथा ॥ ३७

भूरिश्रवास्तु समरे धृष्टकेतुं महारथम् ।
हतसूतहयं चक्रे विरथं सायकोत्तमैः ॥ ३८

विरथं तु समालोक्य हताश्वं हतसारथिम् ।
महता शरवर्षेण च्छादयामास संयुगे ॥ ३९

स च तं रथमुत्सृज्य धृष्टकेतुर्महामनाः ।
आरुरोह रथं तूर्णं शतानीकस्य भारत ॥ ४०

चित्रसेनो विकर्णश्च राजन् दुर्मर्षणस्तथा ।
रथिनो हेमसन्नाहास् सौभद्रमभिदुद्रुवुः ॥ ४१

अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्तत ।
शरीरस्य यथा राजन् वातपित्तकफैस्त्रिभिः ॥ ४२

विरथांस्तव पुत्रांस्तु कृत्वा राजन् महाहवे ।
निजघान नरव्याघ्रस् स्मृत्वा भीमवचस्तदा ॥ ४३

1. अ-क—सौमदत्तिर्हृदिस्थैस्तै रश्मिभिस्तपनो यथा ।
[मध्ये पादद्वयं गलितम्]

ततो राज्ञां बहुशतैर् गजाश्वरथसादिभिः ।
संवृतं समरे भीष्मं देवैरपि दुरासदम् ॥ ४४
प्रयान्तं शीघ्रमुद्वीक्ष्य परित्रातुं सुतांस्तव ।
अभिमन्युं समुद्वीक्ष्य बालमेनं महाबलम् ॥ ४५
वासुदेवमुवाचेदं कौन्तेयश्श्वेतवाहनः ॥ ४५॥

अर्जुनः—
चोदयाश्वान् हृषीकेश यत्रैते बहुला ध्वजाः ॥ ४६
एते हि बहवश्शूराः कृतास्त्रा युद्धदुर्मदाः ।
यथा न हन्युर्नस्सैन्यं तथा माधव चोदय ॥ ४७

सञ्जयः—
एवमुक्तस्तु वार्ष्णेयः कौन्तेयेन महात्मना ।
रथं श्वेतहयैर्युक्तं प्रेषयामास संयुगे ॥ ४८
निष्टानको महानासीत् तव सैन्यस्य मारिष ।
यदर्जुनो रणे क्रुद्धः प्रयातस्तावकान् प्रति ॥ ४९
समासाद्य तु कौन्तेयो राज्ञस्तान् भीषयन् युधि ।
अर्जुनस्तु सुशर्माणम् इदं वचनमब्रवीत् ॥ ५०

अर्जुनः—
जानामि त्वां युधि श्रेष्ठम् अत्यन्तं पूर्ववैरिणम् ।
पर्यायस्याद्य सम्पक्कं फलं पश्य सुदारुणम् ॥ ५१
अद्य त्वां दर्शयिष्यामि पूर्वप्रेतान् पितामहान् । ५१॥

सञ्जयः—

एवं सञ्जल्पतस्तस्य बीभत्सोश्शत्रुतापनः ।

श्रुत्वाऽपि परुषं वाक्यं सुशर्मा रथयूथपः ॥ ५२॥

न चैनमब्रवीत् किञ्चिच् छुभं वा यदि वाऽशुभम् ॥ ५३

अभि गत्वाऽर्जुनं वीरं राजभिर्बहुभिर्वृतः ।

पुरस्तात् पृष्ठतश्चैव पार्श्वतश्चैव सर्वतः ॥ ५४

परिवार्यार्जुनं सङ्ख्ये तव पुत्रैस्सहानघः ।

शरैस्सञ्छादयामास मेघैरिव दिवाकरम् ॥ ५५

ततः प्रववृते घोरस् सङ्ग्रामश्शोणितोदकः ।

तावकानां परेषां च दारुणो रोमहर्षणः ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

---

## ॥ अशीतितमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

स तुद्यमानस्तु शरैर्धनञ्जयः

पदाहतो नाग इव श्वसन् बली ।

बाणेन बाणांश्च महारथानां

चिच्छेद चापानि रणे प्रसह्य ॥ १

सञ्छिद्य चापानि च तानि राज्ञां
तेषां रणे वीर्यवतां क्षणेन ।
विव्याध बाणैर्युगपन्महात्मा
विशेषतस्तेष्वथ मन्यमानः ॥ २

निपेतुराजौ रुधिरोक्षिताङ्गास्
ते ताडितास्शक्रसुतेन राजन् ।
विभिन्नगात्राः पतितोत्तमाङ्गा
गतासवश्छिन्नतनुत्रकायाः ॥ ३

महीं गताः पार्थबलाभिभूता
विचित्ररूपा युगपन्महारथाः ।
दृष्ट्वा हतांस्तान् युधि राजपुत्रांस्
त्रिगर्तराजः प्रययौ क्षणेन ॥ ४

तेषां रथानामथ पृष्ठगोपा
द्वात्रिंशदन्येऽभ्यपतन्त पार्थम् ॥ ४॥

तथैव ते तं परिवार्य पार्थं
विकृष्य चापानि महारवाणि ।
सिषेचिरे बाणमहौघवृष्ट्या
यथा गिरिं तोयधरा जलौघैः ॥ ५॥

सम्पीड्यमानस्तु शरौघवृष्ट्या
धनञ्जयस्तान् युधि जातरोषः ।
षष्ट्या शरैस्संयति तैलधौतैर्
जघान तानप्यथ पृष्ठगोपान् ॥ ६॥

षष्टिं रथांस्तानवजित्य सङ्ख्ये
धनञ्जयः प्रीतमना यशस्वी ।
प्रतत्वरे भीष्मवधाय जिष्णुर्
बलानि राज्ञां समरे निपात्य ॥ ७॥

त्रिगर्तराजो निहतान् समीक्ष्य
महात्मना तानथ बन्धुवर्गान् ।
रणे पुरस्कृत्य नराधिपांस्तान्
जगाम पार्थं त्वरितो वधाय ॥ ८॥

अभिद्रुतं चास्त्रभृतां वरिष्ठं
धनञ्जयं वीक्ष्य शिखण्डिमुख्याः ।
अभिद्रुताश्शस्त्रशरौघवृष्ट्या
समन्ततः पार्थरथं ररक्षुः ॥ ९॥

पार्थोऽपि तानापततस्समीक्ष्य
त्रिगर्तराज्ञा सहितान् नृवीरान् ।

विध्वंसयित्वा स महाधनुष्मान्
गाण्डीवमुक्तैर्निशितैः पृषत्कैः ॥ १०॥

भीष्मं यियासुर्युधि सन्ददर्श
दुर्योधनं सैन्धवादींश्च राज्ञः ।
आवारयिष्णूनथ सम्प्रवार्य
मुहूर्तमासाद्य बलेन वीरः ॥ ११॥

उत्सृज्य राजानमनन्तवीर्यो
जयद्रथादींश्च नृपान् महौजाः ।
ततो ययौ भीमबलो यशस्वी
गाङ्गेयमाजौ शरचापपाणिः ॥ १२॥

[1]भीष्मोऽपि दृष्ट्वा समरे कृतास्त्रान्
स पाण्डवानां रथिनोह्युदारान् ।
विहाय सङ्ग्राममुखे धनञ्जयं
जवेन पार्थं पुनराजगाम ॥ १३॥

युधिष्ठिरश्चोग्रबलो महात्मा
[2]समाययौ त्वरितो जातकोपः ।

---

1. अ-क—अर्धद्वयं विच्छिन्नम्
2. ङ-म—इत आरभ्य पञ्च पादा न सन्ति – समाययौ शान्तनवं रणाय – इति वर्तते

मद्राधिपं समभित्यज्य सङ्ख्ये
　　सहानुगं यान्तमनन्तकीर्तिः ॥　　१४॥

सार्धं स माद्रीसुतभीमसेनैर्
　　[1]भीष्मं ययौ शान्तनवं रणाय ॥　　१५

तैस्सम्प्रयुक्तैस्स महारथाग्र्यैर्
　　गङ्गासुतस्समरे चित्रयोधी ।
न विव्यथे शान्तनवो महात्मा
　　समागतैः पाण्डुसुतैस्समस्तैः ॥　　१६

अथैत्य राजा युधि सत्यसन्धो
　　जयद्रथोऽत्युग्रबलो मनस्वी ।
चिच्छेद चापानि महारथानां
　　प्रसह्य तेषां बलिनां महौजाः ॥　　१७

युधिष्ठिरं भीमसेनं यमौ च
　　पार्थानथो युधि सञ्जातकोपः ।
दुर्योधनः क्रोधविषो महात्मा
　　जघान बाणैरनलप्रकाशैः ॥　　१८

कृपेण शल्येन शलेन चैव
　　तथा विभो चित्रसेनेन चाजौ ।

---

1. ख-च-ङ-म—समाययौ

विद्धाश्शरैस्तेविनिबद्धकोपैर्
देवा यथा दैत्यगणैस्समेतैः ॥ १९
छिन्नायुधश्शान्तनवेन राजा
शिखण्डिनं प्रेक्ष्य च जातकोपः ।
अजातशत्रुस्समरे महात्मा
शिखण्डिनं क्रुद्ध उवाच वाक्यम् ॥ २०

युधिष्ठिरः—
उक्त्वा तथा त्वत्पितुरग्रतो माम्
अहं हनिष्यामि महाव्रतं तम् ।
भीष्मं शरौघैर्विमलार्कवर्णैस्
सत्यं वदामीति कृता प्रतिज्ञा ॥ २१
त्वया च नैषा सफला कृता च
देवव्रतं यन्न निहंसि युद्धे ।
मिथ्याप्रतिज्ञो भव मा नृवीर
रक्षस्व धर्मं स्वकुलं यशश्च ॥ २२
प्रेक्षस्व भीष्मं युधि भीमवेगं
सर्वांस्तपन्तं मम सैन्यसङ्घान् ।
शरौघजालैरतितिग्मवेगैः
कालं यथा कालकृतं क्षणेन ॥ २३
निकृत्तचापस्समरानपेक्षः
पराजितश्शान्तनवेन राज्ञा ।

विहाय बन्धूनथ सोदरांश्च
क्व यास्यसे नानुरूपं तवेदम् ॥ २४

दृष्ट्वा हि भीष्मं तमनन्तवीर्यं
भग्नं च सैन्यं द्रवमाणमेवम् ।
भीतोऽसि नूनं द्रुपदस्य पुत्र
तथा हि ते मुखवर्णोऽप्रहृष्टः ॥ २५

अज्ञायमाने हि धनञ्जये तु
महाहवे संप्रसक्ते तु घोरे ।
कथं हि भीष्मात् प्रथितः पृथिव्यां
भयं त्वमद्य प्रकरोषि वीर ॥ २६

सञ्जयः—

स धर्मराजस्य वचो निशम्य
रूक्षाक्षरं विप्रलापानुबन्धम् ।
प्रत्यादेशं मन्यमानो महात्मा
प्रतत्वरे भीष्मवधाय राजन् ॥ २७

तमापतन्तं महता जवेन
शिखण्डिनं भीष्मरथं तदानीम् ।
निवारयामास हि शल्य एनम्
अस्त्रेण घोरेण सुदुर्जयेन ॥ २८

स चापपृष्ठात् समुदीर्यमाणम्
अस्त्रं युगान्ताग्निसमप्रकाशम् ।
नाकम्पताथ द्रुपदस्य पुत्रो
वीरो महेन्द्रप्रतिमप्रकाशः ॥ २९

तस्थौ च तत्रैव महाधनुष्मान्
शरैस्तदस्त्रं प्रतिबाधमानः ।
अथाददे वारुणमन्यदस्त्रं
अग्र्यं शिखण्डी च वधाय तस्य ॥ ३०

तदस्त्रमस्त्रेण विदार्यमाणं
शल्यं तदा ददृशुः पार्थिवाश्च ।
[1]खस्थास्सुरौघाश्च तथैव यक्षा
गन्धर्वसिद्धा ऋषिभिस्समन्तात् ॥ ३१

भीष्मस्तु राजन् समरे महात्मा
धनुस्सुचित्रं ध्वजमेव चापि ।
छित्त्वाऽनदत् पाण्डुसुतस्य वीरो
युधिष्ठिरस्यातिरथस्य राज्ञः ॥ ३२

ततस्समुत्सृज्य धनुस्सबाणं
[2]वृकोदरः कोपपरीतचेता ।

1. ख-ङ-च-म—इदं पादद्वयं नास्ति
2. ख-च-ङ-म—अयं पादो नास्ति

युधिष्ठिरं वीक्ष्य भयाभिभूतं
[1]तदन्तिके सिन्धुराजं ददर्श ॥ ३२

गदां प्रगृह्याथ पपात सङ्ख्ये
जयद्रथं भीमसेनः पदातिः ॥ ३३॥

तमापतन्तं महता जवेन
जयद्रथस्सगदं भीमसेनम् ।
विव्याध घोरैर्यमदण्डकल्पैश्
शितैश्शरैः पञ्चशतैस्समन्तात् ॥ ३४॥

अचिन्तयित्वा स शरांस्तरस्वी
वृकोदरः कोपपरीतचेताः ।
जघान वाहान् समरे समस्तान्
सुसम्मतान् सिन्धुराजस्य सङ्ख्ये ॥ ३५॥

ततोऽभिवीक्ष्याप्रतिमप्रभावस्
तवात्मजस्त्वरमाणो रथेन ।
अभ्याययौ भीमसेनं निहन्तुं
समुद्यतास्त्रस्सुरराजकल्पम् ॥ ३६॥

जयद्रथो भग्नवाहो रथं तं
त्यक्त्वा ययौ यत्र राजा कुरूणाम् ।

1. ख-घ-ङ-म—नास्त्ययं पादः

[1]ससौबलस्सानुगस्सानुजश्च
दृष्ट्वा भीमं मूढचेता भयार्तः ॥ ३७॥

भीमोऽप्यथैनं सहसा विनद्य
प्रत्युद्ययौ गदया हन्तुकामः ।
[2]ससौबलं तव पुत्रं निरीक्ष्य
दुर्योधनं सानुजं रोषयुक्तः ॥ ३८॥

समुद्यतां तां यमदण्डकल्पां
दृष्ट्वा गदां ते कुरवस्समन्तात् ।
[3]विहाय सर्वे तव पुत्रमुग्रां
गतिं गदायाः परिहर्तुकामाः ॥ ३९॥

अपक्रान्तास्तुमुले सम्प्रमर्दे
[4]सुदारुणे भारत मोहनीये ॥ ४०

अमूढचेतास्त्वथ चित्रसेनो
महागदामापतन्तीं निरीक्ष्य ।

---

1. ख-ग-ङ-म—भयेन भीमस्य स मूढचेताः ससौबलस्तत्र युद्धस्य भीतः
2. ख-ङ-म—अर्धमिदं नास्ति [पाठान्तरम्]
3. अ-क—नास्त्ययं पादः
4. अ-क—नास्त्ययं पादः

[1]स्वयं स्थित्वा भीमसेनस्य चाग्रे
गतिं गदायाः परिहर्तुकामः ॥ ४१
रथं समुत्सृज्य पदातिराजौ
प्रगृह्य खड्गं विपुलं च चर्म ।
अवप्लुतस्सिंह इवाचलाग्राज्
जगाम चान्यं भूमिप भूमिदेशम् ॥ ४२
गदाऽपि सा तस्य रथं सुचित्रं
साश्वं ससूतं विनिहत्य सङ्ख्ये ।
जगाम भूमिं ज्वलिता महोल्का
भ्रष्टाऽम्बराद्गामिव सम्पतन्ती ॥ ४३
आश्चर्यभूतं सुमहत् त्वदीया
दृष्ट्वैव तद्भारत सम्प्रहृष्टाः ।
सर्वे विनेदुस्सहितास्समन्तात्
पुपूजिरे तव पुत्रस्य योधाः ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
॥ ६४ ॥ भीष्मवधपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

## ॥ एकाशीतितमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

विरथं तं समासाद्य चित्रसेनं महारथम् ।
रथमारोपयामास विकर्णस्तनयस्तव ॥ १

तस्मिंस्तथा वर्तमाने तुमुले सङ्कुले भृशम् ।
भीष्मश्शान्तनवस्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ २

ततस्सरथनागाश्वास् समकम्पन्त सृञ्जयाः ।
मृत्योरास्यमनुप्राप्तं मेनिरे च युधिष्ठिरम् ॥ ३

युधिष्ठिरोऽपि कौरव्य यमाभ्यां सहितः प्रभुः ।
महेष्वासं नरव्याघ्रं भीष्मं शान्तनवं ययौ ॥ ४

[1]ततश्शरसहस्राणि प्रमुञ्चन् पाण्डवो युधि ।

1. अ-क—कोशयोः इत आरभ्य ३९॥ तमश्लोकपर्यन्तस्थानेऽयं पाठो दृश्यते

सप्रासांश्च सतूणीरान् सशरान् सशरासनान् ।
साङ्कुशान् सपताकांश्च तत्र तत्रार्जुनो नृणाम् ॥
न्यकृन्तत रणे क्रुद्धो बिभ्रद्रौद्रं वपुस्तदा ॥
परिघाणां विकीर्णानां मुद्गराणां च भारत ।
प्रासानां भिण्डिपालानां निस्त्रिंशानां च पार्थिव ॥
परश्वधानां तीक्ष्णानां तोमराणां विशां पते ।
चर्मणां चापविद्धानां कवचानां च संयुगे ॥
ध्वजानां च रथानां च व्यजनानां विशां पते ।
छत्राणां हेमदण्डानां चामराणां च भारत ॥

भीष्मं सञ्छादयामास यथा मेघो दिवाकरम् ॥ ५
तेन सम्यक् प्रणीतानि शरजालानि मारिष ।
प्रतिजग्राह गाङ्गेयश् शतशोऽथ सहस्रशः ॥ ६
तथैव शरजालानि भीष्मेणास्तानि भारत ।

---

प्रतोदानामङ्कुशानां योक्त्राणां चैव भारत ।
राशयस्सम्प्रदृश्यन्ते विकीर्णानां विशां पते ॥
न तत्रासीत् पुमान् कश्चित् तव सैन्येषु भारत ।
योऽर्जुनं समरे वीरं प्रत्युदीयाद्विशां पते ॥
स स तैर्विशिखैस्तीक्ष्णैः परलोकाय नीयते ॥
ततो विभ्राम्यमाणेषु तव योधेषु सर्वतः ।
अर्जुनो वासुदेवश्च शङ्खौ दध्मतुरुत्तमौ ॥
तं प्रभग्नबलं दृष्ट्वा पिता देवव्रतस्तव ।
अब्रवीत् समरे शूरो भारद्वाजं यशस्विनम् ॥

भीष्मः—

एष पाण्डुसुतो वीरः कृष्णेन सहितो बली ।
व्याकुलानि च सैन्यानि चकार स धनञ्जयः ॥
न ह्येष समरे शक्यो जेतुमन्यैः कथञ्चन ।
एतस्य दृश्यते रूपं क्रुद्धस्येव पिनाकिनः ॥
न निवर्तयितुं चास्य शक्येयं भारती चमूः ।
अन्योन्यप्रेक्षया चापि द्रवतीयं वरूथिनी ॥
एष चास्तं गिरिश्रेष्ठं भानुमान् प्रत्यपद्यत ।
श्रमं वै सर्वलोकस्य संहरन्निव भारत ॥
तेनापहारं सम्प्राप्तं मन्येऽहं पुरुषर्षभ ॥
आयासजश्रमप्राप्ता न योत्स्यन्ति कथञ्चन ।
तावकानां परेषां च योधा घर्मजलप्लुताः ॥

सञ्जयः—

एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यमुत्तमम् ।
अपहारमथो चक्रे परेषां च महारथः ॥

आकाशे समदृश्यन्त खगमानां व्रजा इव ॥ ७
निमेषार्धाच्च कौन्तेयं भीष्मश्शान्तनवो युधि ।
अदृश्यं समरे चक्रे शरजालेन भारत ॥ ८
ततो युधिष्ठिरो राजा कौरवस्य महात्मनः ।
नाराचान् प्रेषयामास क्रुद्धो ह्याशीविषोपमान् ॥ ९
असम्प्राप्तांस्ततस्तांस्तु क्षुरप्रेण महायशाः ।
[1]चिच्छेद समरे भीष्मः पाण्डवस्य धनुश्च्युतान् ॥ १०
तांस्तु च्छित्त्वा रणे भीष्मो नाराचान् कालसम्मितान् ।
निजघ्ने कौरवेन्द्रस्य हयान् काञ्चनभूषणान् ॥ ११
हताश्वे तु रथे तिष्ठन् शक्तिं चिक्षेप धर्मराट् ॥ ११॥
तामापतन्तीं सहसा कालपाशोपमां शिताम् ।
चिच्छेद समरे भीष्मश्श् शरैस्सन्नतपर्वभिः ॥ १२॥
हताश्वं तु रथं त्यक्त्वा धर्मराजो युधिष्ठिरः ।
आरुरोह रथं तूर्णं नकुलस्य महात्मनः ॥ १३॥
यमावपि हि सङ्क्रुद्धस् समासाद्य रणे तदा ।
शरैस्सञ्छादयामास भीष्मः परपुरञ्जयः ॥ १४॥
तौ तु दृष्ट्वा महाराज भीष्मबाणप्रपीडितौ ।
जगामाथ परां चिन्तां भीष्मं प्रति युधिष्ठिरः ॥ १५॥

---

1. घ—अर्धसयं नास्ति

ततो धर्मात्मजो वश्यांस् तान् राज्ञस्समचोदयत् ।
भीष्मं शान्तनवं सङ्ख्ये निहतेति सुहृद्गणम् ॥ १६॥
ततस्ते पार्थिवास्सर्वे श्रुत्वा तस्य प्रभाषितम् ।
महता रथवंशेन परिवव्रुः पितामहम् ॥ १७॥
स समन्तात् परिवृतः पिता देवव्रतस्तव ।
चिक्रीड धनुषा राजन् पातयानो महारथान् ॥ १८॥
तं चरन्तं रणे पार्था ददृशुः कौरवं युधि ।
मृगमध्यं प्रविश्येव यथा सिंहशिशुं वने ॥ १९॥
तर्जयानं रणे शूरांस् त्रासयानं च सायकैः ।
दृष्ट्वा त्रेसुर्महाराज सिंहं मृगगणा यथा ॥ २०॥
तस्य भारत भीष्मस्य ददृशुः क्षत्रिया गतिम् ।
अग्नेर्वायुसहायस्य यथा काष्ठं दिधक्षतः ॥ २१॥
शिरांसि रथिनां भीष्मः पातयामास संयुगे ।
तालेभ्य इव पक्वानि फलानि कुशलो नरः ॥ २२॥
पतद्भिश्च ततो राजन् शिरोभिर्धरणीतले ।
बभूव तुमुलश्शब्दः पततामश्मनामिव ॥ २३॥
तस्मिंस्तु तुमुले युद्धे वर्तमाने भयावहे ।
सर्वेषामेव सैन्यानाम् आसीद्व्यतिकरो महान् ॥ २४॥
भग्नेषु तेषु व्यूहेषु क्षत्रिया इतरेतरम् ।

एकमेकं समाहूय युद्धायैवोपतस्थिरे ॥ २५॥

शिखण्डी तु समाहूय भारतानां पितामहम् ।
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् ॥ २६॥

अनादृत्य ततो भीष्मस् तं शिखण्डिनमाहवे ।
प्रययौ सृञ्जयान् क्रुद्धस् स्त्रीत्वं चिन्त्य शिखण्डिनः ॥ २७॥

सृञ्जयास्तु ततो दृष्ट्वा भीष्मं युद्धे महारथम् ।
सिंहनादं बहुविधं चक्रुश्शङ्खविमिश्रितम् ॥ २८॥

ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
अपरां दिशमास्थाय स्थिते सवितरि प्रभो ॥ २९॥

धृष्टद्युम्नोऽथ पाञ्चालः सात्यकिश्च महारथः ।
पीडयन्तौ भृशं सैन्यं शक्तितोमरवृष्टिभिः ॥ ३०॥
अस्त्रैश्च बहुलै राजन् जघ्नतुस्तावकान् रणे ॥ ३१

ते हन्यमानास्सङ्ग्रामे तावका भरतर्षभ ।
आर्यां युद्धे मतिं कृत्वा न त्यजन्ति स्म संयुगम् ॥ ३२
यथोत्साहं तु समरे जघ्नुर्लोकमहारथाः ॥ ३२॥

अत्राक्रन्दो महानासीत् तावकानां महात्मनाम् ।
वध्यतां समरे राजन् पार्षतेन महात्मनाम् ॥ ३३॥

तं श्रुत्वा निनदं घोरं तावकानां विशां पते ।
विन्दानुविन्दावावन्त्यौ पार्षतं समुपस्थितौ ॥ ३४॥

ततोऽस्य तुरगान् हत्वा त्वरमाणौ महारथौ ।
छादयामासतुरुभौ शरवर्षेण पार्षतम् ॥ ३५॥

अवप्लुत्य ततो यानाद्धताश्वाद्भरतर्षभ ।
आरुरोह रथं तूर्णं सात्वतस्य महात्मनः ॥ ३६॥

ततो युधिष्ठिरो राजा महत्या सेनया वृतः ।
आवन्त्यौ समरे क्रुद्धौ समभ्यायात् तरस्विनौ ॥ ३७॥

तथैव तव पुत्रोऽपि सर्वोद्योगेन भारत ।
विन्दानुविन्दौ समरे परिवार्योपतस्थिवान् ॥ ३८॥

अर्जुनश्चापि सङ्क्रुद्धः क्षत्रियान् क्षत्रियर्षभः ।
अयोधयत सङ्ग्रामे वज्रपाणिरिवासुरान् ॥ ३९॥

द्रोणस्तु समरे क्रुद्धः पुत्रस्य प्रियकृत् तव ।
व्यधमत् सर्वपाञ्चालांस् तूलराशिमिवानलः ॥ ४०॥

दुर्योधनपुरोगास्तु पुत्रास्तव विशां पते ।
परिवार्य रणे भीष्मं युयुधुः पाण्डवैस्सह ॥ ४१॥

ततो युधिष्ठिरो राजा लोहितायति भास्करे ।
[1]अब्रवीत् स्वान् नृपान् क्रुद्धो युध्यध्वमिति भारत ॥ ४२॥

युध्यतां तु ततस्तेषां कुर्वतां कर्म दुष्करम् ।
अस्तं गिरिमथारूढे न प्रकाशति भास्करे ॥ ४३॥

---

1. ङ—अर्धंद्वयं नास्ति

ततः प्रावर्तत नदी शोणितौघतरङ्गिणी ।
गोमायुगणसङ्कीर्णा क्षणेन रजनीमुखे ॥ ४४॥

शिवाभिरशिवाभिश्च रुदन्तीभिस्समन्ततः ।
घोरमायोधनं जज्ञे भूतसङ्घसमाकुलम् ॥ ४५॥

राक्षसाश्च पिशाचाश्च तत्रान्ये पिशिताशनाः ।
समन्ततो व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ ४६॥

अर्जुनोऽथ सुशर्मादीन् राज्ञस्तान् सपदानुगान् ।
विजित्य पृतनामध्ये ययौ स्वशिबिरं प्रति ॥ ४७॥

[1]युधिष्ठिरोऽपि कौरव्य भ्रातृभ्यां सहितो वशी ।
ययौ स्वशिबिरं रात्रौ निजया सेनया वृतः ॥ ४८॥

भीमसेनो महाराज सिन्धुराजमुखान् रथान् ।
पराजित्य ततस्संख्ये ययौ स्वशिबिरं प्रति ॥ ४९॥

[2]दुर्योधनोऽपि नृपतिः परिवार्य महारणे ।
भीष्मं शान्तनवं तूर्णं प्रायात् स्वशिबिरं प्रति ॥ ५०॥

द्रोणो द्रौणिः कृपश्शल्यः कृतवर्मा च सात्वतः ।
परिवार्य चमूस्सर्वा प्रययुश्शिबिराणि वै ॥ ५१॥

तथैव सात्यकी राजन् धृष्टद्युम्नश्च पार्षतः ।
परिवार्य रणे योधान् जग्मतुश्शिबिरं प्रति ॥ ५२॥

1. अ-क—अर्धषट्कं नास्ति 2. ब—अर्धचतुष्टयं नास्ति

[1]ततस्सरथनागाश्वजयं प्राप्य ससोमकाः ।
पाञ्चालाः पाण्डवाश्चैव प्रणेदुश्च पुनः पुनः ॥ ५३॥
प्रययुश्शिबिरायैव धनञ्जयपुरस्कृताः ।
वादित्रघोषैस्संहृष्टाः प्रनृत्यन्तो महारथाः ॥ ५४॥
एवमेते महाराज तावकाः पाण्डवैस्सह ।
पर्यवर्तन्त सहिता निशाकाले परन्तप ॥ ५५॥
यथास्वशिबिरं गत्वा पाण्डवाः कुरुभिस्सह ।
न्यविशन्त महाराज पूजयन्तः परस्परम् ॥ ५६॥
रक्षां कृत्वाऽऽत्मनश्शूरा न्यस्तगुल्मा यथाविधि ।
अपनीय च शल्यानि स्नात्वा च विविधैर्जलैः ॥ ५७॥
कृतस्वस्त्ययनास्सर्वे स्तूयमानाश्च वन्दिभिः ।
गीतवीादत्रशब्दैश्च क्रीडन्तो वै यशस्विनः ॥ ५८॥
[2]शयानास्तेऽपि शय्यासु महार्हासु विशां पते ।
निद्रां प्राप्य सुखाविष्टाः क्षणमात्रं विजह्रिरे ॥ ५९॥
[3]मुहूर्तमिव तं सर्वे महत् स्वप्नं समाश्रिताः ।
तस्मात् समुत्थाय नृपाः कथाश्चक्रुश्च सर्वशः ॥ ६०॥

---

1. ख-घ-ङ-म—इदमर्धचतुष्टयं नास्ति
2. ख-ग-घ-ङ-म—इदमर्धद्वयं नास्ति
3. ख-ग-घ-ङ-म—मुहूर्तमिव तत् सर्वमभवत् स्वर्गसन्निभम् ।
न हि युद्धकथाः केचित्तत्र चक्रुर्महारथाः ।
ते प्रसुप्ते बले राजन् परिश्रान्ते जने निशि ।
[पाठान्तरम्]

सङ्ग्रामसंश्रिताश्चान्याः बह्वीर्विक्रमजाश्शुभाः ॥ ६१
ते प्रसुप्तजने सेने परिश्रान्ते उभे निशि ।
हस्त्यश्वबहुले घोरे प्रेक्षणीये बभूवतुः ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[अस्मिन्नध्याये ६२ श्लोकाः]
[ सप्तमापहारस्समाप्तः ]

## ॥ द्व्यशीतितमोऽध्यायः ॥



उभयसेनयोर्व्यूहरचनापूर्वकं परस्पराभियानम् ॥

सञ्जयः—

परिणाम्य निशां तां तु सुखसुप्ता जनेश्वराः ।
कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः ॥ १
ततश्शब्दो महानासीत् सेनयोरुभयोर्नृप ।
निर्गच्छमानयोस्सङ्ख्ये यथा सागरयोरिव ॥ २
ततो दुर्योधनो राजा चित्रसेनो विविंशतिः ।
भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वै द्विजः ॥ ३
एकीभूतास्सुसंयत्ताः कौरवाणां महाचमूम् ।
व्यूहाय विदधू राजन् पाण्डवान् प्रति दंशिताः ॥ ४
ऊर्मिव्यूहं ततः कृत्वा पिता देवव्रतस्तव ।
सागरप्रतिमं घोरं वाहनोर्मितरङ्गिणम् ॥ ५

अग्रतस्सर्वसैन्यानां भीष्मश्शान्तनवो ययौ ।
मालवैर्दाक्षिणात्यैश्च ह्यावन्त्यैश्च समावृतः ॥ ६

तदनन्तरमेवासीद् भारद्वाजः प्रतापवान् ।
पुलिन्दैर्दरदैश्चैव तथा क्षुद्रकमालवैः ॥ ७

द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान् ।
मागधैश्च कलिङ्गैश्च पिशाचैश्च विशां पते ॥ ८

प्राग्ज्योतिषादनु नृपः कौसल्योऽथ बृहद्बलः ।
मेखलैस्त्रिपुरैश्चैव बर्बरैश्च समन्ततः ॥ ९

बृहद्बलादनु नृपस् त्रिगर्तः प्रस्थलाधिपः ।
[1]काम्भोजैर्बहुभिस्सार्धं यवनैश्च सहस्रशः ॥ १०

द्रौणिस्तु रभसश्शूरस् त्रिगर्तादनु भारत ।
प्रययौ सिंहनादेन नादयानो नभस्स्थलम् ॥ ११

तथा सर्वेण सैन्येन राजा दुर्योधनस्तदा ।
द्रौणेरनन्तरं प्रायात् सोदरैः परिवारितः ॥ १२

दुर्योधनादनु ययौ कृपश्शारद्वतो युधि ।
एवमेव महाव्यूहः प्रययौ सागरोपमः ॥ १३

रेजुस्तत्र पताकाश्च श्वेतच्छत्राणि भारत ।
[2]चामराणि च शुभ्राणि व्यजनानि च सर्वशः ॥ १४

---

1. अ-क—नास्तीदमर्धम्　　2. ख-घ-ङ-म—इदमर्धं नास्ति

[1]आयुधानि च दिव्यानि महार्हाणि धनूंषि च ॥ १४॥
तं तु दृष्ट्वा महाव्यूहं तावकानां महारथः ।
युधिष्ठिरोऽब्रवीत् तूर्णं पार्षतं पृतनापतिम् ॥ १५॥
[2]पश्य व्यूहं महेष्वास निर्मितं सागरोपमम् ।
प्रतिव्यूहं रणे शूर कुरु क्षिप्रं महारथ ॥ १६॥
ततस्स पार्षतश्शूरो व्यूहं चक्रे सुदारुणम् ।
शृङ्गाटकं महाराज तव व्यूहविदारणम् ॥ १७॥
शृङ्गेऽभूद्भीमसेनश्च सात्यकिश्च महारथः ।
रथैरनेकसाहस्रैस् तथा हयपदातिभिः ॥ १८॥
नाभावभून्नरश्रेष्ठश् श्वेताश्वो वानरध्वजः ।
मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ॥ १९॥
अभिमन्युस्ततः पश्चाद् विराटश्च महारथः ।
द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कचः ॥ २०॥
अथेतरे महेष्वासास् सर्वसैन्यैर्नराधिपाः ।
व्यूहं तं पूरयामासुर् व्यूहशास्त्रविशारदाः ॥ २१॥
एवमेतं महाव्यूहं व्यूह्य भारतपाण्डवाः ।
अतिष्ठन् समरे शूरा योद्धुकामा जयैषिणः ॥ २२॥

---

1. ख-ग-घ-ङ-म—अङ्गदान्यथ शुभ्राणि [पाठान्तरम्]
2. अ-क—अर्धद्वयस्थाने—प्रतिव्यूहं महेष्वास कुरु क्षिप्रं महारथ । इति वर्तते

भेरीशब्दाश्च तुमुला विमिश्राश्शङ्खनिस्स्वनैः ।
क्ष्वेलितास्फोटितोद्घुष्टैस् तुमुलास्सर्वतो दिशः ॥ २३॥
ततश्शूरास्समासाद्य समरे ते परस्परम् ।
नेत्रैरनिमिषै राजन् प्रेक्षाञ्चक्रुः परस्परम् ॥ २४॥
मनोभिस्ते मनुष्येन्द्र युद्धं योधाः प्रचक्रिरे ।
पुनराहूय तेऽन्योन्यं शरैरपि च चक्रिरे ॥ २५॥
ततः प्रववृते युद्धं घोररूपं सुदारुणम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ २६॥
नाराचा निशितास्सङ्ख्ये सम्पतन्ति स्म भारत ।
व्यात्तानना भयकरा उरगा इव सङ्घशः ॥ २७॥
निष्पेतुर्विमलाश्शक्त्यस् तैलधौता महाप्रभाः ।
अम्बुदेभ्यो यथा राजन् भ्राजमानाश्शतह्रदाः ॥ २८॥
गदाश्च विमलैः पट्टैः पिनद्धा रुक्मभूषिताः ।
आपतन्त्यस्स्म दृश्यन्ते गिरिशृङ्गोपमाश्शुभाः ॥ २९॥
निस्त्रिंशाश्च व्यराजन्त विमलाम्बरसन्निभाः ।
आर्षभाणि च चर्माणि शतचन्द्राणि भारत ॥ ३०॥
अशोभन्त रणे राजन् पतमानानि सर्वशः ॥ ३१
तेऽन्योन्यं समरे सैन्ये युध्यमाने नराधिप ।
अशोभेतां यथा सेने देवदैत्यसमुद्यते ॥ ३२
अभ्यद्रवन्त समरे तेऽन्योन्यं वै समन्ततः ॥ ३२॥

रथास्तु रथिभिस्तूर्णं प्रेषिताः परमाहवे ।
युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः ॥ ३३॥
दन्तिनां युध्यमानानां सङ्घर्षात् पावकोऽभवत् ।
दन्तेभ्योऽपि नरश्रेष्ठ सधूमस्सर्वतो दिशम् ॥ ३४॥
प्रासैरभिहताः केचित् [1]तत्र योधास्सहस्रशः ।
पतमानास्स्म दृश्यन्ते गिरिशृङ्गान्नगा इव ॥ ३५॥
पादातास्समदृश्यन्त विनिघ्नन्तः परस्परम् ।
चित्ररूपधराश्शूराः परिघप्रासयोधिनः ॥ ३६॥
अन्योन्यं ते समासाद्य कुरुपाण्डवसैनिकाः ।
शस्त्रैर्नानाविधैर्घोरै रणे निन्युर्यमक्षयम् ॥ ३७॥
ततश्शान्तनवो भीष्मो रथघोषेण नादयन् ।
अभ्यद्रवद्रणे पार्थान् धनुश्शब्देन मोहयन् ॥ ३८॥
तं पाण्डवा महाराज नदन्तो भैरवं रवम् ।
अभ्यद्रवन्त सङ्ग्रामे धृष्टद्युम्नपुरोगमाः ॥ ३९॥
ततः प्रववृते युद्धं तव तेषां च भारत ।
नराश्वरथमातङ्गप्रतियानं सुदर्शनम् ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[अस्मिन्नध्याये ४०॥ श्लोकाः]

---

1. ग-घ-ङ-म—सादिनस्तत्र सहस्रशः

## ॥ त्र्यशीतितमोऽध्यायः ॥

भीमेन सुनाभादिदुर्योधनानुजाष्टकहननम् ॥

सञ्जयः—

भीष्मं तु समरे क्रुद्धं प्रतपन्तं समन्ततः ।
न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् ॥ १

ततस्सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।
अभ्यद्रवन्त गाङ्गेयम् अर्दयन्तश्शितैश्शरैः ॥ २

स तु भीष्मो रणश्लाघी सोमकान् सह सृञ्जयैः ।
पाञ्चालांश्च महेष्वासान् पातयामास सायकैः ॥ ३

ते वध्यमाना भीष्मेण पाञ्चालास्सह पाण्डवैः ।
भीष्ममेवाययुस्तूर्णं त्यक्त्वा मृत्युकृतं भयम् ॥ ४

स तेषां रथसिंहानां भीष्मश्शान्तनवो युधि ।
चिच्छेद समरे राजन् बाहून्यथ शिरांसि च ॥ ५

विरथान् रथिनश्चक्रे पिता देवव्रतस्तव ।
पतितान्युत्तमाङ्गानि हयेभ्यो हयसादिनाम् ॥ ६

निर्मनुष्यांश्च मातङ्गान् शयानान् पर्वतोपमान् ।
अपश्याम महाराज भीष्मास्त्रेण प्रमाथितान् ॥ ७

न तत्रासीत् पुमान् कश्चित् पाण्डवानां विशां पते ।
अन्यत्र रथिनां श्रेष्ठाद् भीमसेनान्महाबलात् ॥ ८
स हि भीष्मं समासाद्य छादयामास सायकैः ॥ ८॥
ततो निष्टानको घोरे भीष्मभीमपराक्रमे ।
बभूव सर्वसैन्यानां घोररूपो भयानकः ॥ ९॥
तथैव पाण्डवा हृष्टास् सिंहनादमथानदन् ॥ १०
ततो दुर्योधनो राजा सोदरैः परिवारितः ।
भीष्मं जुगोप समरे वर्तमाने भयावहे ॥ ११
भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः ।
[1]द्रवमाणेन महता रथेनादित्यवर्चसा ॥ १२
चचार युधि राजेन्द्र भीमो भीमपराक्रमः ॥ १२॥
सुनाभस्तव पुत्रो वै भीमसेनमुपाद्रवत् ।
जघान निशितैर्बाणैर् भीमं विव्याध सप्तभिः ॥ १३॥
भीमसेनस्सुसङ्क्रुद्धश् शरेण नतपर्वणा ।
[2]विप्रद्रुते रथे तस्य द्रवमाणे समन्ततः ॥ १४॥
सुनाभस्य नरश्रेष्ठ शिरश्चिच्छेद भारत ।
क्षुरप्रेण सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ १५॥
हते तस्मिन् महाराज तव पुत्रे महारथे ।

1. ख-घ-ङ-म—इदमर्धपञ्चकं नास्ति 2. अ-क—नास्तीदमर्धम्

नामृष्यन्त रणे शूराश् सोदरास्सप्त संयुगे ॥ १६॥
आदित्यकेतुर्बह्वाशी कुण्डधारो महोदरः ।
अपराजितः पण्डितको विशालाक्षश्च दुर्जयः ॥ १७॥
पाण्डवं चित्रसन्नाहा विचित्रकवचध्वजाः ।
अभ्यवर्तन्त सङ्ग्रामे योद्धुं युद्धाभिनन्दिनः ॥ १८॥
महोदरस्तु समरे भीमं विव्याध पत्रिभिः ।
नवभिर्वज्रसङ्काशैर् नमुचिं वृत्रहा यथा ॥ १९॥
आदित्यकेतुस्सप्तत्या बह्वाशी पञ्चभिस्तथा ।
नवत्या कुण्डधारस्तु विशालाक्षस्तु पञ्चभिः ॥ २०॥
अपराजितो महाराज पराजिष्णुर्महारथः ।
शरैर्बहुभिरानच्छेद् भीमसेनं महाबलम् ॥ २१॥
रणे पण्डितकश्चैनं त्रिभिर्बाणैस्समर्पयत् ।
स तन्न ममृषे भीमश् शत्रोर्विजयलक्षणम् ॥ २२॥
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ।
अपराजितस्य राजेन्द्र भीमसेनो महाबलः ॥ २३॥
शिरश्चिच्छेद समरे शरेणानतपर्वणा ॥ २४
तच्छिरस्तव पुत्रस्य [1]कृत्तं गामगमच्छिरः ॥ २४॥

---

1. ख-ग-व-ङ-म—संयुगे ह्यपराजितः
अपराजितस्य भीमेन कृत्तं गामपतच्छिरः ॥
[अधिकः पाठः]

अथापरेण भल्लेन कुण्डधारं महाबलम् ।
प्राहिणोन्मृत्युलोकाय सर्वलोकस्य पश्यतः ॥ २५॥

ततः पुनरमेयात्मा प्रसन्धाय शिलीमुखम् ।
प्रेषयामास समरे पण्डितस्य रथं प्रति ॥ २६॥

स शरः पण्डितं हत्वा विवेश धरणीतलम् ।
यथा नरं निहत्याशु भुजगः कालचोदितः ॥ २७॥

विशालाक्षशिरश्छित्त्वा पातयामास भूतले ।
शरैस्त्रिभिरमेयात्मा स्मरन् क्लेशान् पुरातनान् ॥ २८॥

महोदरं महेष्वासो नाराचेन स्तनान्तरे ।
विव्याध समरे राजन् स हतो न्यपतद्भुवि ॥ २९॥

आदित्यकेतोः केतुं च च्छित्त्वा बाणेन संयुगे ।
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत ॥ ३०॥

बह्वाशिनं तथा वीरश् शरेणानतपर्वणा ।
प्रेषयामास समरे यमस्य सदनं प्रति ॥ ३१॥

[1]वित्रेसुस्तनयाश्चान्ये भयाद्भीमसमुद्भवात् ।
मन्यमाना रणे भीमं कालान्तकमिति ब्रुवन् ॥ ३२॥

एवमेते महेष्वासाः पुत्रास्तव विशां पते ।

---

1. ख-ग-घ-ङ-म—प्रदुद्रुवुस्ततस्सैन्ये पुत्रास्तव विशां पते ।
मन्यमाना हि तत् सत्यं सभायां तस्य भाषितम् ॥
[पाठान्तरम्]

भ्रातॄन् संदृश्य निहतान् प्रास्मरन्त हि तद्वचः ॥ ३३॥

यदुक्तवान् महाप्राज्ञः क्षत्ता हितमनामयम् ।
तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः ॥ ३४॥

लोभमोहसमाविष्टः पुत्रप्रीत्या जनाधिप ।
न बुध्यसे पुरा यत् तत् तथ्यमुक्तं हितं वचः ॥ ३५॥

तथैव हि वधार्थाय पुत्राणां पाण्डवो बली ।
नूनं जातो महावीर्यो यथा हन्ति स्म कौरवान् ॥ ३६॥

ततो दुर्योधनो राजा भ्रातृव्यसनकर्शितः ।
अब्रवीत् तावकान् योधान् [1]भीमोऽयं वध्यतामिति ॥ ३७॥

ततो दुर्योधनो राजा भीष्ममासाद्य मारिष ।
शोकेन महताऽऽविष्टो विललाप सुदुःखितः ॥ ३८॥

दुर्योधनः—

निहता भ्रातरश्शूरा भीमसेनेन मे युधि ।
यतमानास्तथाऽन्येऽपि हन्यन्ते मम सैनिकाः ॥ ३९॥

भवांश्च मध्यस्थतया नित्यमस्मानुपेक्षते ।
सोऽहं कापथमारूढः पश्य दैवमिदं मम ॥ ४०॥

सञ्जयः—

एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव ।

1. अ-क—पादद्वयं नास्ति

दुर्योधनमिदं वाक्यम् अश्रुपूर्णेक्षणोऽब्रवीत् ॥ ४१॥

भीष्मः—

उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च ।
गान्धार्या च यशस्विन्या तत् त्वं तात न बुद्धवान् ॥ ४२॥

समयश्च मया पूर्वं कृतोऽयं शत्रुकर्शन ।
नाहं युधि विमोक्तव्यो नह्याचार्यः कथञ्चन ॥ ४३॥

यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे ।
हनिष्यति रणे तं तं सत्यमेतद्ब्रवीमि ते ॥ ४४॥

स त्वं राजन् स्थिरो भूत्वा दृढां कृत्वा रणे मतिम् ।
योधय त्वं रणे पार्थान् स्वर्गं कृत्वा परायणम् ॥ ४५॥

न शक्याः पाण्डवा जेतुं देवैरपि सवासवैः ।
तस्माद्युधि स्थिरां कृत्वा बुद्धिं युद्ध्यस्व भारत ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

---

## ॥ चतुरशीतितमोऽध्यायः ॥



धृतराष्ट्रेण पुत्रवधश्रवणात् शोचनम् ॥



धृतराष्ट्रः—

दृष्ट्वा मम हतान् पुत्रान् बहूनेकेन सञ्जय ।
भीष्मो द्रोणः कृपश्चैव किमकुर्वत संयुगे ॥ १

अहन्यहनि मे पुत्राः क्षयं गच्छन्ति सञ्जय ।
मन्येऽहं सर्वथा पुत्रान् दैवेनोपहतान् भृशम् ॥ २

तत्र मे तनयास्सर्वे जीयन्ते न जयन्त्युत ।
यत्र द्रोणस्य भीष्मस्य कृपस्य च महात्मनः ॥ ३

सौमदत्तेश्च शूरस्य भगदत्तस्य चोभयोः ।
अश्वत्थाम्नस्तथा तात शूराणामनिवर्तिनाम् ॥ ४

तथा सर्वस्य सैन्यस्य मध्यस्थास्तनया मम ।
यदहन्यन्त सङ्ग्रामे किमन्यद्भागधेयतः ॥ ५

न हि दुर्योधनो मन्दः पुरा ह्येतदबुध्यत ।
वार्यमाणो मया तात भीष्मेण विदुरेण च ॥ ६

गान्धार्या चैव दुर्मेधास् सततं हितकाम्यया ।
नावबुध्यत् पुरा मोहात् तस्य प्राप्तमिदं फलम् ॥ ७

यद्भीमसेनस्समरे मम पुत्रान् विचेतसः ।
अहन्यहनि सङ्क्रुद्धो नयते यमसादनम् ॥ ८

इदं तत् समनुप्राप्तं क्षत्तुर्वचनमुत्तमम् ।
न बुद्धवानस्मि विभो प्रोच्यमानमिदं तदा ॥ ९

निवारय सुतान् द्यूतात् पाण्डवान् मा द्रुहेति च ।
सुहृदां हितकामानां ब्रुवतां तत्तदेव च ॥ १०
न श्रृणोमि परं वाक्यं मर्तुकाम इवौषधम् ॥ १०॥

तदिदं समनुप्राप्तं वचनं साधु भाषितम् ।
विदुरद्रोणभीष्माणां तथाऽन्येषां मनीषिणाम् ॥ ११॥

अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः ।
तदेतत् समतिक्रान्तं पूर्वमेव हि सञ्जय ॥ १२॥

[1]तस्मान्मे वद धर्मज्ञ यथा युद्धमवर्तत ।
[2]के केऽयुध्यन्त समरे ब्रूहि त्वं मम सञ्जय ॥ १३॥

सञ्जयः—

मध्याह्ने तुमुलो घोरस् सङ्ग्रामस्समपद्यत ।
जनक्षयकरो राजंस् तन्मे निगदतश्श्रृणु ॥ १४॥

ततस्सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।

---

1. ख-ग-घ-ङ-म—इदमर्धं नास्ति
2. अ-क-ग—प्रावर्तत कथं युद्धं मम पुत्रक्षयावहम् । [पाठान्तरम्]

अभ्यद्रवन्त सङ्ग्रामे भीष्ममेव जिघांसया ॥ १५॥

धृष्टद्युम्नश्शिखण्डी च सात्यकिश्च महारथः ।
युक्तानीका महाराज भीष्ममेव समभ्ययुः ॥ १६॥

[1]अर्जुनो द्रौपदेयाश्च चेकितानश्च संयुगे ।
दुर्योधनसमादिष्टान् राज्ञस्सर्वान् समभ्ययुः ॥ १७॥

अभिमन्युस्तथा शूरो हैडिम्बश्च महारथः ।
भीमसेनश्च सङ्क्रुद्धस् तेऽभ्यधावन्त कौरवान् ॥ १८॥

त्रिधाभूतैरवध्यन्त कौरवाः पाण्डवैर्युधि ।
तथैव पाण्डवा राजन्नवध्यन्त परै रणे ॥ १९॥

द्रोणस्तु रथिनां श्रेष्ठस् सोमकान् सह सृञ्जयैः ।
अभ्यद्रवत सङ्क्रुद्धः प्रेषयानो यमक्षयम् ॥ २०॥

तत्राक्रन्दो महानासीत् सृञ्जयानां महात्मनाम् ।
वध्यतां समरे राजन् भारद्वाजेन धन्विना ॥ २१॥

[2]द्रोणेन निहतास्तत्र क्षत्रिया बहवो रणे ।
विवेष्टन्तोऽभ्यदृश्यन्त व्याधिक्लिष्टा नरा इव ॥ २२॥

कूजतां क्रन्दतां चैव स्तनतां चैव संयुगे ।
अनिशं श्रूयते शब्दः क्षुत्कृशानां नृणामिव ॥ २३॥

---

1. ख—इदमर्धद्वयं नास्ति  2. घ—अर्धद्वयं नास्ति

तथैव कौरवेयाणां भीमसेनो महाबलः ।
चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ २४॥
वध्यतां तत्र सैन्यानाम् अन्योन्येन महारणे ।
वर्धते प्रेतराजस्य विषयस्स विशां पते ॥ २५॥
स सङ्ग्रामो महाराज घोररूपोऽभवत् तदा ।
कुरूणां पाण्डवानां च यमराष्ट्रविवर्धनः ॥ २६॥
ततो भीमो रणे क्रुद्धो गदां गृह्य शितां दृढाम् ।
गजानीकं समासाद्य प्रेषयामास संयमीम् ॥ २७॥
तत्र भारत भीमेन ताडिताः पतिता गजाः ।
[1]विनेदुश्च भृशं घोरं भ्रमन्तो दिक्षु सर्वतः ॥ २८॥
भिन्नहस्ता महानागा भिन्नकुम्भाश्च मारिष ।
क्रौञ्चवद्व्यनदन् भीताः पृथिवीमनुशिश्यिरे ॥ २९॥
नकुलस्सहदेवश्च हयानीकमभिद्रुतौ ॥ ३०
ते हयाः काञ्चनापीडा रुक्मभाण्डपरिष्कृताः ।
वध्यमानाः प्रदृश्यन्त शतशोऽथ सहस्रशः ॥ ३१
पतद्भिश्च हयौघैश्च समास्तीर्यत मेदिनी ॥ ३१॥
निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च गतासुभिः ।
हयैर्बभौ महाराज नानारूपधरैर्धरा ॥ ३२॥

1. च—अर्धद्वयं नास्ति

अर्जुनेन हतैस्सङ्ख्ये तथा भारत वाजिभिः ।
प्रबभौ वसुधा घोरा तत्र तत्र विशां पते ॥ ३३॥

रथैर्भिन्नैर्ध्वजैश्छिन्नैश् छत्रैश्च सुमहाप्रभैः ।
हारैर्निष्कैस्सकेयूरैश् शिरोभिश्च सकुण्डलैः ॥ ३४॥

उष्णीषैरपविद्धैश्च पताकाभिश्च सर्वशः ।
अनुकर्षैश्शुभै राजन् योक्त्रैश्चैव सरश्मिभिः ॥ ३५॥

सञ्छन्ना वसुधा भाति वसन्ते कुसुमैरिव ॥ ३६

एवमेष क्षयो वृत्तः पाण्डूनामपि भारत ।
क्रुद्धे शान्तनवे भीष्मे द्रोणे च रथसत्तमे ॥ ३७

अश्वत्थाम्नि कृपे चैव तथैव कृतवर्मणि ।
तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

अर्जुनात्मजेन इरावता शकुनेरनुजानां वधः ॥ १ ॥ आर्श्यश्रृङ्गिनाम्ना राक्षसेन इरावतो वधः ॥ २ ॥

सञ्जयः—

वर्तमाने तथा रौद्रे राजन् वीरवरक्षये ।
शकुनिस्सौबलश्श्रीमान् पाण्डवान् समुपाद्रवत् ॥ १

तथैव सात्वतो राजन् हार्दिक्यः परवीरहा ।
अभ्यद्रवत सङ्ग्रामे पाण्डवानां वरूथिनीम् ॥ २

ततः काम्भोजमुख्यानां नदीजानां च वाजिनाम् ।
आरट्टानां महीजानां सिन्धुजानां च सर्वशः ॥ ३

वनायुजानां शुभ्राणां तथा पर्वतवासिनाम् ।
[1]समूहैर्वाजिमुख्यानां मनोमारुतरंहसाम् ॥ ४

ये चापरे तित्तिरिजा जवना हेममालिनः ।
सुवर्णालङ्कृतैरेव वर्मभिश्च सुकल्पितैः ॥ ५

हयैर्वातजवैर्युक्तः पाण्डवस्य सुतो बली ।
अभ्यवर्तत तत् सैन्यं हृष्टरूपः परन्तपः ॥ ६

अर्जुनस्य सुतश्श्रीमान् इरावान्नाम वीर्यवान् ।

1. ख-घ-ङ-म—इदमर्धं नास्ति

सुतायां नागराजस्य जातः पार्थेन धीमता ॥ ७
ऐरावतेन सा दत्ता अनपत्या महात्मना ।
पत्यौ हते सुपर्णेन कृपणा दीनचेतना ॥ ८
कार्यार्थं तां च जग्राह पार्थः कामवशानुगाम् ।
एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः ॥ ९
स नागलोके संवृद्धो मात्रा च परिरक्षितः ।
पितृव्येन परित्यक्तः पार्थद्वेषाद्दुरात्मना ॥ १०
[1]इत्येष ब्रुवता राजन् मात्रा स हि विसर्जितः ॥ १०॥
खमुत्पत्य महाराज नागराट् सत्यविक्रमः ।
इन्द्रलोकं जगामाशु मातुश्श्रुत्वाऽर्जुनं गतम् ॥ ११॥
सोऽभिवाद्य महात्मानं पितरं सत्यविक्रमम् ।
कृताञ्जलिरुवाचेदं विनयेनाभिगम्य च ॥ १२॥

इरावान्—

इरावानस्मि भद्रं ते पुत्रश्चास्मि तवास्मि भो ॥ १३

सञ्जयः—

मातुस्समागमो यश्च तत् सर्वं प्रत्यवेदयत् ।
तच्च सर्वं यथावृत्तम् अनुसस्मार पाण्डवः ॥ १४
परिष्वज्य सुतं चापि स्वात्मनस्सदृशं गुणैः ।
प्रीतिमाननयत् पार्थो देवराजनिवेशनम् ॥ १५
सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप ।

---

1. घ-ङ-म—नास्तीदमर्धम्

प्रीतिपूर्वं महाबाहुस् स्वकार्ये प्रति भारत ॥ १६
स चापि नरशार्दूलश् शार्दूलसमविक्रमः ।
अब्रवीच्च तदा पार्थम् अयमस्मि तवाभि भो ॥ १७

स्थितः प्रेष्यश्च पुत्रश्च सर्वथा त्वं प्रशाधि माम् ।
किं करोमि च ते कामं किं वा कामं त्वमिच्छसि ॥ १८
परिष्वज्य सुतं प्रेम्णा वासविः प्रत्युवाच तम् ॥ १८॥

प्रीतिपूर्वं त्वया कार्यं कार्या प्रीतिश्च मानद ।
युद्धकाले तु साहाय्यं दातव्यं नो भवेदिति ॥ १९॥

बाढमित्येवमुक्त्वा तु ययौ सत्यपराक्रमः ।
कृष्णवर्णैश्शुभैरश्वैस् सर्वतश्शुशुभे वृतः ॥ २०॥

ते हयाः काञ्चनापीडा नानावर्णा मनोजवाः ।
उत्पेतुस्सहसा राजन् हंसा इव महोदधौ ॥ २१॥

ते त्वदीयान् समासाद्य हयसङ्घान् मनोजवान् ।
क्रोडैः क्रोडानभिघ्नन्तो घोणाभिश्च परस्परम् ॥ २२॥
निपेतुस्सहसा राजन् हंसा इव नगोत्तमान् ॥ २३

निपतद्भिस्तदा तैश्च हयसङ्घैः परस्परम् ।
शुश्रुवे दारुणश्शब्दस् सुपर्णपतने यथा ॥ २४
तथैव च महाराज समेत्यान्योन्यमाहवे ।

परस्परवधं घोरं चक्रुस्ते हयसादिनः ॥ २५
तस्मिंस्तथा वर्तमाने सङ्कुले तुमुले भृशम् ।
उभयोस्सेनयोश्शान्ता हयैघाश्च समन्ततः ॥ २६
प्रक्षीणसायकाश्शूरा निहताश्वाश्श्रमातुराः ।
विलयं समनुप्राप्तास् तक्ष्माणाः परस्परम् ॥ २७
ततः क्षीणे हयानीके किञ्चिच्छिष्टे च संयुगे ।
सौबलस्यात्मजाश्शूरा निर्गता रणमूर्धनि ॥ २८
[1]वायुवेगसमस्पर्शान् जवे वायुसमांश्च ते ।
आरुह्य शैलसङ्काशान् वयस्थांस्तुरगोत्तमान् ॥ २९
गजो गवाक्षो वृषकश् चर्मवानर्जवश्शुकः ।
षडेते बलसम्पन्ना निर्ययुर्महतो बलात् ॥ ३०
वार्यमाणाश्शकुनिना स्वैश्च योधैर्महाबलैः ।
सन्नद्धा युद्धकुशला रौद्ररूपा महाबलाः ॥ ३१
तदनीकं महाबाहो भित्त्वा परमदुर्धरम् ।
बलेन महता युक्ता निर्ययुर्विजयैषिणः ॥ ३२
विविशुस्ते तदा हृष्टा गान्धारा युद्धदुर्मदाः ॥ ३२॥
तान् प्रविष्टांस्तदा दृष्ट्वा फाल्गुनिः परवीरहा ।
अब्रवीत् समरे सैन्यान् स्वान् विचित्रहयस्थितान् ॥ ३३॥

1. अ-क—नास्तीदमर्धम्

इरावान्—

यथैते धार्तराष्ट्रस्य योधास्सानुगवाहनाः ।
हन्यन्ते समरे सर्वे तथा नीतिर्विधीयताम् ॥ ३४॥

सञ्जयः—

बाढमित्येवमुक्त्वा तु सर्वे योधा इरावतः ।
जघ्नुस्तेषां ह्यानीकान् दुर्धर्षान् समरे परैः ॥ ३५॥
तदनीकमनीकेन समरे वीक्ष्य पातितम् ।
अमृष्यमाणास्ते सर्वे सुबलस्यात्मजा रणे ॥ ३६॥
[1]इरावन्तमभिद्रुत्य समन्तात् पर्यदारयन् ॥ ३७
ताडयन्तश्शितैः प्रासैश् चोदयन्तश्च वाजिनः ।
ते शूराः पर्यधावन्त कुर्वन्तो महदाकुलम् ॥ ३८
इरावानपि निर्भिन्नः प्रासैस्तीक्ष्णैर्महारथः ।
रौद्रेण रुधिरेणाक्तस् तोत्रैर्भिन्न इव द्विपः ॥ ३९
उरस्यपि च बाह्वोश्च पार्श्वयोश्च भृशाहतः ।
एको बहुभिरत्यर्थं धैर्याद्राजन्न विव्यथे ॥ ४०
इरावानपि सङ्क्रुद्धस् सर्वांस्तान् निशितैश्शरैः ।
मोहयामास समरे वीर्यात् परपुरञ्जयः ॥ ४१
प्रासानुत्कृष्य तेषां तु हस्तेभ्यो ह्यरिमर्दनः ।

1. अ—एकादशार्धानि न सन्ति

तैरेव ताडयामास सुबलस्यात्मजान् रणे ॥ ४२

विकृष्य च शितं खड्गं गृहीत्वा च शरासनम् ।
पदातिर्द्रुतमागच्छत् ताडयन् सुबलात्मजान् ॥ ४३

ततः प्रत्यागतप्राणास् सर्वे ते सुबलात्मजाः ।
भूयः क्रोधसमाविष्टा इरावन्तमुपाद्रवन् ॥ ४४

इरावानपि खड्गेन दर्शयन् हस्तलाघवम् ।
अत्यवर्तत देवांश्च मानुषांश्चैव संयुगे ॥ ४५

लाघवं दर्शयानस्य सर्वे ते सुबलात्मजाः ।
अन्तरं नाधिगच्छन्ति हयानारुह्य शीघ्रगान् ॥ ४६

[1]न चापि शीघ्रहस्तस्य ह्यश्वारूढस्य योधिनः ।
भूमिष्ठमथ तं सङ्ख्ये ह्यन्तरिक्षादवप्लुतम् ॥ ४७

सौबलाः परिवार्यैनं ग्रहीतुमुपचक्रमुः ॥ ४७॥

अथाभ्याशगतानां स खड्गेनामित्रकर्शनः ।
असिहस्तोऽस्त्रहस्तानां तेषां गात्राण्यकृन्तत ॥ ४८॥

आयुधान्यपि सर्वेषां बाहूनपि च भूषितान् ॥ ४९

नृत्यन्त इव कृत्ताङ्गा गता भूमिं गतासवः ॥ ४९॥

वृषकस्तु महाराज बहुधा परिविक्षतः ।

1. ख-ब-ङ-म—इदमर्धं नास्ति

[1]योधैस्स्वकीयैस्समरे परिवार्य व्यतिष्ठत ॥ ५०॥
तेऽमुच्यन्त महारौद्रात् तस्माद्वीरविकर्तनात् ॥ ५१
तान् सर्वान् पतितान् दृष्ट्वा भीतो दुर्योधनस्ततः ।
अभ्यभाषत सङ्क्रुद्धो राक्षसं घोरदर्शनम् ॥ ५२
आर्ष्यश्रृङ्गिं महेष्वासं मायाविनमरिन्दमम् ।
[2]वैरिणं भीमसेनस्य पूर्वं बकवधेन वै ॥ ५३

दुर्योधनः—

पश्य वीर यथा ह्येष फल्गुनस्य सुतो बली ।
मायावी विप्रियं घोरम् अकार्षीन्मे बलक्षयम् ॥ ५४
त्वं च कामचरस्तात मायास्त्रे च विशारदः ।
कृतवैरश्च पार्थेन तस्मादेनं रणे जहि ॥ ५५

सञ्जयः—

बाढमित्येवमुक्त्वा तु राक्षसो रौद्रदर्शनः ।
प्रययौ सिंहनादेन यत्रार्जुनसुतो बली ॥ ५६
स्वयोधैर्युद्धकुशलैर् विमलप्रासयोधिभिः ।
[3]धीरैः प्रहारिभिर्वीरैस् स्वैरनीकैस्समन्ततः ॥ ५७
निहन्तुकामस्समरे इरावन्तं महाबलम् ॥ ५७॥

1. ख-घ-ङ-म—इदमर्धं नास्ति
2. अ-क—नास्तीदमर्धम्
3. अ-क—अर्धपञ्चकं नास्ति

इरावानपि सङ्क्रुद्धस् त्वरमाणः पराक्रमी ।
हन्तुकाममभिघ्नो राक्षसं प्रत्यवारयत् ॥ ५८॥
तमापतन्तं सम्प्रेक्ष्य राक्षसस्सुमहाबलः ।
त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे ॥ ५९॥
[1]तेन मायामयाः क्लृप्ता हयास्तावन्त एव हि ।
स्वारूढा राक्षसैर्घोरैश् शूलपट्टसपाणिभिः ॥ ६०॥
ते संरब्धास्समासाद्य द्विसाहस्राः प्रहारिणः ।
[2]इरावतस्सैनिकास्ते समयुध्यन्त तैस्सह ॥ ६१॥
युद्धं कृत्वा महद्धोरम् अन्योन्यजयकाङ्क्षिणः ।
अचिराद्गमयामासुः प्रेतलोकं परस्परम् ॥ ६२॥
तस्मिंस्तु निहते सैन्ये तावुभौ युद्धदुर्मदौ ।
सङ्ग्रामे व्यवतिष्ठेतां यथा वै वृत्रवासवौ ॥ ६३॥
आधावन्तमभिप्रेक्ष्य राक्षसं युद्धदुर्मदम् ।
इरावान् क्रोधसम्मत्तः प्रत्यधावन्महाबलः ॥ ६४॥
स त्वभ्याशगतस्याजौ तस्य खड्गेन दुर्मदः ।
चिच्छेद कार्मुकं दीप्तं शरावापं च दीप्तिमत् ॥ ६५॥
स निकृत्तं धनुर्दृष्ट्वा खं जवेन समाविशत् ।
इरावन्तमभिक्रुद्धो मोहयन् मायया तदा ॥ ६६॥

1. अ-क—नास्तीदमर्धम्   2. ख-घ-ङ-म—इदमर्धद्वयं नास्ति

[1]ततोऽन्तरिक्षमुत्प्लुत्य इरावानपि राक्षसम् ।
विमोहयित्वा मायाभिस् तस्य गात्राणि सायकैः ॥ ६७॥

चिच्छेद सर्वमर्मज्ञः कामरूपो दुरासदः ॥ ६८

तथा हि राक्षसश्रेष्ठः कृत्तः कृत्तः पुनः पुनः ।
[2]न बभूव विनष्टश्च समवाप च यौवनम् ॥ ६९

मायया जायते तस्य वयो रूपं च कामजम् ॥ ६९॥

एवं तद्राक्षसस्याङ्गं छिन्नं छिन्नं व्यरोचत ॥ ७०

इरावानपि सङ्क्रुद्धो राक्षसं तं महाबलम् ।
परश्वथेन दीप्तेन चिच्छेदैनं पुनः पुनः ॥ ७१

स तेन बलिना वीरश् छिद्यमान इव द्रुमः ।
राक्षसो व्यनदद्घोरं स शब्दस्तुमुलोऽभवत् ॥ ७२

परश्वथक्षतं रक्षस् सुस्राव रुधिरं बहु ।
ततश्चुक्रोध बलवांश् चक्रे वेगं च संयुगे ॥ ७३

आर्ष्यश्रृङ्गिस्ततो दृष्ट्वा समरे शत्रुमूर्जितम् ।
कृत्वा घोरं महद्रूपं [3]बलमास्थाय वीर्यवान् ॥ ७४

इरावन्तं महावीर्यं गृहीतुमुपचक्रमे ।

---

1. अ-क-ग—नास्तीदमर्धम्
2. ख—इदमादि अर्धचतुष्टयं नास्ति
3. ख-गा-घ-ङ-म—अयं पादोऽनन्तरश्च न स्तः

सङ्ग्रामशिरसो मध्ये सर्वेषां तत्र पश्यताम् ॥ ७५
तां दृष्ट्वा तादृशीं मायां राक्षसस्य महाबलः ।
इरावानपि सङ्क्रुद्धो मायां स्रष्टुं प्रचक्रमे ॥ ७६
तस्य क्रोधाभिभूतस्य संयुगेष्वनिवर्तिनः ।
[1]नागव्यूहो महांस्तस्य कायात् समुदतिष्ठत ॥ ७७
सोऽन्वयो मातृकस्तस्य [2]तदैनमुपतिष्ठति ॥ ७७॥
स नागैर्बहुभी राजन् सर्वतस्संवृतो रणे ।
दधार सुमहद्रूपम् अनन्त इव भोगवान् ॥ ७८॥
ततो बहुविधैर्नागैश् छादयामास राक्षसम् ॥ ७९
छाद्यमानस्तु तैर्नागैर् ध्यात्वा राक्षसपुङ्गवः ।
सौपर्णं रूपमास्थाय भक्षयामास पन्नगान् ॥ ८०
मायया भक्षिते तस्य अन्वये मातृके तथा ।
विमोहितमिरावन्तं सञ्जघान वरासिना ॥ ८१
सकुण्डलं समकुटं पद्मेन्दुसदृशप्रभम् ।
इरावतश्शिरो रक्षः पातयामास भूतले ॥ ८२
तस्मिंस्तु निहते वीरे राक्षसेनार्जुनात्मजे ।
विशोकास्समपद्यन्त धार्तराष्ट्रास्सराजकाः ॥ ८३
तस्मिन् महति सङ्ग्रामे तादृशे भैरवे पुनः ।

1. क-म—नासीदमर्षम्　2. अ-क—साह्यकृन्नरतर्षभ

महान् व्यतिकरो घोरस् सेनयोस्समपद्यत ॥ ८५
गजा हयाः पदाताश्च विमिश्रा दन्तिभिर्हताः ।
रथाश्च दन्तिनश्चैव पादातैस्तत्र सूदिताः ॥ ८६
तथा पत्तिरथौघाश्च हयाश्च बहवो रणे ।
रथिभिर्निहता राजंस् तव तेषां च सङ्कुले ॥ ८७
अजानन्नर्जुनश्चापि निहतं पुत्रमौरसम् ।
जघान समरे शूरान् राज्ञो वै भीष्मरक्षिणः ॥ ८८
तथैव तावका राजन् सृञ्जयाश्च महारथाः ।
जुह्वतस्समरे प्राणान् निजघ्नुरितरेतरम् ॥ ८९
मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः ।
बाहुभिस्समयुध्यन्त समवेताः परस्परम् ॥ ९०
तथा मर्मातिगैर्भीष्मो निजघान महारथान् ।
कम्पयन् समरे सेनां पाण्डवानां समन्ततः ॥ ९१
तेन यौधिष्ठिरे सैन्ये बहवोऽथ तदा हताः ।
दन्तिनस्सादिनश्चैव रथिनोऽथ हयास्तथा ॥ ९२
तत्र भारत भीष्मस्य रणे दृष्ट्वा पराक्रमम् ।
अत्यद्भुतमपश्याम शक्रस्येव पराक्रमम् ॥ ९३
तथैव भीमसेनस्य पार्षतस्य च भारत ।
रौद्रमासीत् तदा युद्धं शैनेयस्य च धन्विनः ॥ ९४

दृष्ट्वा द्रोणस्य विक्रान्तं पाण्डवान् भयमाविशत् ॥ ९४॥

पाण्डवाः—

एक एव रणे शक्तो हन्तुमस्मान् ससैनिकान् ।
किं पुनः पृथिवीवीरैर् योधव्रातैस्समावृतः ॥ ९५॥

सञ्जयः—

इत्यब्रुवन् महाराज रणे द्रोणेन पीडिताः ॥ ९६

वर्तमाने तथा रौद्रे सङ्ग्रामे भरतर्षभ ।
उभयोस्सेनयोश्शूरा नामृष्यन्त परस्परम् ॥ ९७

आविष्टा इव युध्यन्ते रक्षोभूतैर्महाबलैः ।
तावकाः पाण्डवेयाश्च संरब्धास्तात धन्विनः ॥ ९८

[1]न स्म पश्यामहे कश्चिद् यः प्राणान् परिरक्षति ।
[2]देवासुराभे सङ्ग्रामे तस्मिन् योधा नराधिप ॥ ९९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[ अस्मिन्नध्याये ९९ श्लोकाः ]

---

1. अ-क—धैर्येण समरे कश्चिन्न प्राणान् परिरक्षति ।
2. अ-क—सङ्ग्रामस्सुमहानासीत् तदा देवासुरोपमः । [पाठान्तरम्]

## ॥ षडशीतितमोऽध्यायः ॥

दुर्योधनघटोत्कचयोर्युद्धम् ॥

धृतराष्ट्रः—

[1]इरावन्तं हतं दृष्ट्वा सर्वे पार्था महारथाः ।
सङ्ग्रामे किमकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ १

सञ्जयः—

इरावन्तं तु सङ्ग्रामे निहतं वीक्ष्य राक्षसः ।
व्यनदत् सुमहानादं भैमसेनिर्घटोत्कचः ॥ २
नदतस्तस्य शब्देन पृथिवी सागराम्बरा ।
सपर्वतवना राजंश् चचाल सुभृशं तदा ॥ ३
अन्तरिक्षं दिशश्चैव सर्वाश्च प्रदिशस्तथा ।
चेलुश्च सहसा तत्र तेन नादेन नादिताः ॥ ४
तं श्रुत्वा सुमहानादं तव सैन्यस्य भारत ।
ऊरुस्तम्भस्समभवद् वेपथुस्स्वेद एव च ॥ ५
सर्व एव तु राजेन्द्र तावका दीनचेतसः ।
चर्मवत् समवेष्टन्त सिंहभीता गजा इव ॥ ६
नदित्वा सुमहानादं निर्घातमिव राक्षसः ।

1. ङ—अर्धद्वयं न दृश्यते

ज्वलन्तं शूलमुद्यम्य रूपं कृत्वा विभीषणम् ॥ ७
नानारूपप्रहरणैर् वृतो राक्षसपुङ्गवैः ।
आजगाम सुसङ्क्रुद्धः कालान्तकयमोपमः ॥ ८
तमापतन्तं सम्प्रेक्ष्य गजानीकैश्च संवृतम् ।
स्वसैन्यं च भयात् तस्य प्रायशो विमुखीकृतम् ॥ ९
दुर्योधनस्ततो राजन् घटोत्कचमुपाद्रवत् ।
प्रगृह्य विपुलं चापं सिंहवद्विनदन् मुहुः ॥ १०
पृष्ठतोऽनुययौ चैनं स्रवद्भिः पर्वतोपमैः ।
कुञ्जरैर्दशसाहस्रैर् वङ्गानामधिपस्स्वयम् ॥ ११
तमापतन्तं सम्प्रेक्ष्य गजानीकेन संवृतम् ।
पुत्रं तव महाराज चुकोप स निशाचरः ॥ १२
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
राक्षसानां च राजेन्द्र राज्ञो दुर्योधनस्य च ॥ १३
गजानीकं च सम्प्रेक्ष्य मेघवृन्दमिवोद्धतम् ।
अभ्यधावन्त सङ्क्रुद्धा राक्षसाश्शूलपाणयः ॥ १४
नदन्तस्सुमहानादान् मेघा इव सविद्युतः ।
शरशक्त्यृष्टिनाराचैर् निघ्नन्तो गजयोधिनः ॥ १५
भिण्डिपालैस्तथा शूलैर् मुसलैश्च परश्वधैः ।

पर्वताग्रैश्च वृक्षैश्च निजघ्नुस्ते महागजान् ॥ १६

भिन्नकुम्भान् सरुधिरान् भिन्नगात्रांश्च वारणान् ।
अपश्याम महाराज वध्यमानान् निशाचरैः ॥ १७

स तेषु क्षीयमाणेषु भग्नेषु गजयोधिषु ।
दुर्योधनो महाराज राक्षसान् समुपाद्रवत् ॥ १८

अमर्षवशमापन्नस् त्यक्त्वा जीवितमात्मनः ।
मुमोच निशितान् बाणान् राक्षसेषु परंतपः ॥ १९

जघान च महेष्वासान् प्रधानांस्तत्र राक्षसान् ।
सङ्क्रुद्धो भरतश्रेष्ठ पुत्रो दुर्योधनस्तव ॥ २०

वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनम् ।
शरैश्चतुर्भिश्चतुरो निजघान महारथान् ॥ २१

ततः पुनरमेयात्मा शरवर्षं दुरासदम् ।
मुमोच भरतश्रेष्ठ निशाचररथं प्रति ॥ २२

तत् तु दृष्ट्वा महत् कर्म पुत्रस्य तव मारिष ।
क्रोधेनाभिप्रजज्वाल भैमसेनिर्महाबलः ॥ २३

स विष्फार्य महच्चापम् इन्द्राशनिसमस्वनम् ।
अभिदुद्राव वेगेन दुर्योधनमरिन्दमम् ॥ २४

तमापतन्तं सम्प्रेक्ष्य कालसृष्टमिवान्तकम् ।

न विव्यथे महाराज पुत्रो दुर्योधनस्तव ॥ २५

अथैनमब्रवीत् क्रुद्धः क्रूरस्संरक्तलोचनः ॥ २५॥

घटोत्कचः—

क्रूर त्वया नृशंसेन दीर्घकालं प्रवासिताः ।
यच्चैव द्रौपदी कृष्णा एकवस्त्रा रजस्वला ॥ २६॥

सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया ॥
अस्य पापस्य दुर्बुद्धे फलं प्राप्नुहि दुर्मते ॥ २७॥

सञ्जयः—

एवमुक्त्वा तु हैडिम्बो महद्विष्फार्य कार्मुकम् ।
संदश्य दशनैरोष्ठं दन्तान् कटकटाप्य च ॥ २८॥

शरवर्षेण घोरेण दुर्योधनमवाकिरत् ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

## ॥ सप्ताशीतितमोऽध्यायः ॥

घटोत्कचयुद्धवर्णनम् ॥

सञ्जयः—

ततस्तद्बाणवर्षं तु दुर्धरं दानवैरपि ।
दधार युधि राजेन्द्र यथा वर्षं महागजः ॥ १

ततः क्रोधसमाविष्टो निश्श्वसन्निव पन्नगः ।
संशयं परमं प्राप्तः पुत्रस्ते भरतर्षभ ॥ २

मुमोच निशितान् बाणान् वेगितान् पञ्चविंशतिम् ।
तेऽपतन् सहसा राजंस् तस्मिन् राक्षसपुङ्गवे ॥ ३

आशीविषा इव क्रुद्धाः पर्वते गन्धमादने ॥ ३॥

स तैर्विद्धस्स्रवन् रक्तं प्रभिन्न इव कुञ्जरः ।
दध्रे मतिं विनाशाय राज्ञस्स पिशिताशनः ॥ ४॥

जग्राह च महाशक्तिं गिरीणामपि दारिणीम् ।
सम्प्रदीप्तां महोल्काभाम् अशनिं मघवानिव ॥ ५॥

तमागच्छन्महाबाहुर् जिघांसुस्तनयं तव ॥ ६

तामुद्यतां स सम्प्रेक्ष्य वङ्गानामधिपस्त्वरन् ।
कुञ्जरं गिरिसङ्काशं राक्षसं प्रत्यचोदयत् ॥ ७

स नागप्रवरेणाजौ बलिना शीघ्रगामिना ।
यतो दुर्योधनरथस् तं मार्गं प्रत्यषेधयत् ॥ ८
पन्थानं वारयामास कुञ्जरेण सुतस्य ते ॥ ८॥
मार्गमावारितं दृष्ट्वा वङ्गराजेन धीमता ।
घटोत्कचो महाराज क्रोधसंरक्तलोचनः ॥ ९॥
उद्यतां तां महाशक्तिं तस्मिंश्चिक्षेप वारणे ॥ १०
स तयाऽभिहतो राजंस् तस्य बाहुविमुक्तया ।
सञ्जातरुधिरोत्पीडः पपात च ममार च ॥ ११
पतत्यथ गजे चापि वङ्गानामीश्वरो बली ।
जवेन समभिप्लुत्य जगाम धरणीतलम् ॥ १२
दुर्योधनोऽपि सम्प्रेक्ष्य पतितं वरवारणम् ।
भग्नं च स्वबलं दृष्ट्वा जगाम परमां व्यथाम् ॥ १३
अशक्तः प्रतियोद्धुं वै दृष्ट्वा तस्य पराक्रमम् ।
क्षत्रधर्मं पुरस्कृत्य ह्यात्मनश्चावमानिताम् ॥ १४
प्राप्तापक्रमणो राजा तस्थौ गिरिरिवाचलः ॥ १४॥
संधाय च शितं बाणं कालाग्निसमतेजसम् ॥
मुमोच परमक्रुद्धस् तस्मिन् घोरे निशाचरे ॥ १५॥
तमापतन्तं सम्प्रेक्ष्य बाणमिन्द्राशनिप्रभम् ।
लाघवान्मोचयामास महामायो घटोत्कचः ॥ १६॥

[1]भूयश्च विननादोच्चैः क्रोधसंरक्तलोचनः ।
त्रासयन् सर्वभूतानि युगान्ते ज्वलनो यथा ॥ १७॥
तं श्रुत्वा निनदं घोरं तस्य भीमस्य रक्षसः ।
आचार्यमुपसङ्गम्य भीष्मश्शान्तनवोऽब्रवीत् ॥ १८॥

भीष्मः—

यथैव निनदो घोरश्श्रूयते राक्षसेरितः ।
हैडिम्बो युध्यते नूनं राज्ञा दुर्योधनेन च ॥ १९॥
नैष शक्यो हि सङ्ग्रामे जेतुं भूतेन केन चित् ।
तत्र गच्छत भद्रं वो राजानं परिरक्षितुम् ॥ २०॥
अभिद्रुत्य महाबाहुं राक्षसेन प्रपीडितम् ॥ २१
एताद्धि परमं कृत्यं सर्वेषां नः परन्तप ॥ २१॥

सञ्जयः—

पितामहवचश्श्रुत्वा त्वरमाणा महारथाः ।
उत्तमं जवमास्थाय प्रययुर्यत्र कौरवः ॥ २२॥
द्रोणश्च सोमदत्तश्च बाह्लीकोऽथ जयद्रथः ।

---

1. अ-क—तस्मिंस्तदा वर्तमाने सङ्ग्रामे रोमहर्षणे ।
भीष्मश्शान्तनवस्तूर्णम् आजगाम महाबलः ॥
तदा दुर्योधनं दृष्ट्वा राक्षसेन पराजितम् ।
अब्रवीन्नृपसङ्घांस्तान् समस्तांस्तावकान् रणे ॥
यूयं गच्छत भद्रं वो राजानं परिरक्षितुम् ।
अभिभूतो महाघोरो राक्षसेन सुधीमता ॥
राज्ञा प्रयुक्तो बाणो वै यत्नेन महता युधि ॥ [पाठान्तरम्]

कृपो भूरिश्रवाश्शल्य आवन्त्यस्स बृहद्बलः ॥ २३॥
अश्वत्थामा विकर्णश्च चित्रसेनो विविंशतिः ।
रथाश्चानेकसाहस्रा ह्येतेषामनुयायिनः ॥ २४॥
अभिद्रुतं परीप्सन्तः पुत्रं दुर्योधनं तव ॥ २५
तदनीकमनाधृष्यं पालितं वीरसत्तमैः ।
आततायिनमायान्तं प्रेक्ष्य राक्षससत्तमः ॥ २६
नाकम्पत महाबाहुर् मैनाक इव पर्वतः ॥ २६॥
प्रगृह्य विपुलं चापं ज्ञातिभिः परिवारितः ।
शूलमुद्गरहस्तैश्च नानाप्रहरणैरपि ॥ २७॥
ततस्समभवद्युद्धं तुमुलं रोमहर्षणम् ।
राक्षसानां च मुख्यस्य दुर्योधनबलस्य च ॥ २८॥
धनुषां कूजतां शब्दस् सर्वतस्तुमुलो रणे ।
अश्रूयत महाराज वेणूनामिव दह्यताम् ॥ २९॥
शस्त्राणां पात्यमानानां कवचेषु शरीरिणाम् ।
शब्दस्समभवद्राजन् गिरीणामिव भिद्यताम् ॥ ३०॥
वीरबाहुविसृष्टानां तोमराणां विशां पते ।
रूपमासीद्वियत्स्थानां सर्पाणामिव सर्पताम् ॥ ३१॥
ततः परमसङ्क्रुद्धो विष्फार्य सुमहद्धनुः ।

राक्षसेन्द्रो महाबाहुर् विनदन् भैरवस्वनम् ॥ ३२॥
आचार्यस्यार्धचन्द्रेण क्रुद्धश्चिच्छेद कार्मुकम् ॥ ३३
सौमदत्तेश्च बाणेन ध्वजमुन्मथ्य नानदत् ।
बाह्लीकं च त्रिभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ॥ ३४
कृपमेकेन विव्याध चित्रसेनं त्रिभिश्शरैः ॥ ३४॥
[1]पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च ।
जत्रुदेशे समासाद्य विकर्णं समताडयत् ॥ ३५॥
स न्यषीदद्रथोपस्थे शोणितेन परिप्लुतः ॥ ३६
ततः पुनरमेयात्मा नाराचान् दश पञ्च च ।
भूरिश्रवसि सङ्क्रुद्धः प्राहिणोद्भरतर्षभ ॥ ३७
ते वर्म भित्त्वा सुभृशं प्राविशन् मेदिनीतलम् ॥ ३७॥
विविंशतेश्च द्रौणेश्च यन्तारौ समताडयत् ।
तौ पेततू रथोपस्थे रश्मीनुत्सृज्य वाजिनाम् ॥ ३८॥
सैन्धवस्यार्धचन्द्रेण वाराहं स्वर्णभूषितम् ।
उन्ममाथ ध्वजं राजन् द्वितीयेनाच्छिनद्धनुः ॥ ३९॥
चतुर्भिरपि नाराचैर् आवन्त्यस्य महात्मनः ।
जघान चतुरो वाहान् क्रोधसंरक्तलोचनः ॥ ४०॥
पूर्णायतविसृष्टेन पीतेन निशितेन च ।

1. ङ—अर्धद्वयं नास्ति

निर्बिभेद महाराज राजपुत्रं बृहद्बलम् ॥ ४१॥

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ॥ ४२

भृशं क्रोधेन चाविष्टो रथस्थो राक्षसाधिपः ।
चिक्षेप निशितांस्तीक्ष्णाञ् छरानाशीविषोपमान् ॥ ४३

बिभिदुस्ते महाराज शल्यं युद्धविशारदम्[1] ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

## ॥ अष्टाशीतितमोऽध्यायः ॥

---

सङ्कुलयुद्धवर्णनम् ॥

---

सञ्जयः—

विमुखीकृत्य तान् सर्वांस् तावकान् युधि राक्षसः ।
जिघांसुर्भरतश्रेष्ठं दुर्योधनमुपाद्रवत् ॥ १

तमापतन्तं सम्प्रेक्ष्य [2]राजानं प्रति वेगितम् ।
अभ्यधावञ्जिघांसन्तस् तावका युद्धदुर्मदाः ॥ २

तालमात्राणि चापानि विकर्षन्तो महारथाः ।

---

1. ग—प्राविशन् भूतलं राजन् वल्मीकमिव पन्नगाः । [अधिकः पाठः]
2. अ-क—अयं पादोऽनतरश्च न स्तः

तमेकमभ्यधावन्त सिंहनादेन पार्थिवाः ॥ ३
तथैनं शरवर्षेण समन्तात् पर्यवारयन् ।
पर्वतं वारिधाराभिः प्रावृषीव वलाहकाः ॥ ४
स गाढविद्धो व्यथितस् तोत्रार्दित इव द्विपः ।
उत्पपात तदाऽऽकाशं सहसा वैनतेयवत् ॥ ५
व्यनदच्च महानादं जीमूत इव शारदः ।
दिशः खं विदिशश्चैव नादयन् भैरवस्वनः ॥ ६
राक्षसस्य तु तं शब्दं श्रुत्वा राजा युधिष्ठिरः ।
उवाच भरतश्रेष्ठो भीमसेनं महाबलम् ॥ ७

युधिष्ठिरः—

युध्यते राक्षसो नूनं धार्तराष्ट्रैर्महारथैः ।
[1]यथाऽस्य श्रूयते शब्दो नदतो भैरवं स्वनम् ॥ ८
अतिभारं च पश्यामि तस्मिन् राक्षसपुङ्गवे ॥ ८॥
पितामहश्च सङ्क्रुद्धः पाञ्चालान् हन्तुमुद्यतः ॥ ९
तेषां च रक्षणार्थाय युध्यते फल्गुनः परैः ।
[2]त्वरस्व यत्नः कर्तव्यो रक्षणार्थाय तस्य वै ॥ १०
एतज्ज्ञात्वा महाबाहो कार्यद्वयमुपस्थितम् ।
गच्छ रक्ष च हैडिम्बं संशयं परमं गतम् ॥ ११

1. अ-क—अर्धचतुष्टयं नास्ति 2. ख-घ—इदमर्धं नास्ति

सञ्जयः—

भ्रातुर्वचनमाज्ञाय त्वरमाणो वृकोदरः ।
प्रययौ सिंहनादेन त्रासयन् सर्वपार्थिवान् ॥ १२
वेगेन महता राजन् पर्वकाले यथोदधिः ॥ १२॥

तमन्वयात् सत्यधृतिस् सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ १३॥

अभिमन्युमुखाश्चैव द्रौपदेया महारथाः ।
क्षत्रदेवश्च विक्रान्तः क्षत्रधर्मा तथैव च ॥ १४॥

[1]अनूपाधिपतिश्चैव नीलस्स्वबलमास्थितः ।
महता रथवंशेन हैडिम्बं पर्यवारयन् ॥ १५॥

कुञ्जरैश्च सदा मत्तैष् षट्सहस्रैः प्रहारिभिः ।
अभ्यरक्षन्त सहिता राक्षसेन्द्रं घटोत्कचम् ॥ १६॥

सिंहनादेन महता नेमिघोषेण चैव हि ।
खुरशब्दनिनादैश्च कम्पयन्तो वसुंधराम् ॥ १७॥

तेषामापततां श्रुत्वा शब्दं तं तावकं बलम् ।
भीमसेनभयोद्विग्नं विकीर्णमभवत् तदा ॥ १८॥

परिवृत्य महाराज परित्यज्य घटोत्कचम् ॥ १९
ततः प्रववृते युद्धं नृपाणां बलशालिनाम् ।

1. अ-क—नास्तीदमर्धम्

तावकानां परेषां च सङ्ग्रामेष्वनिवर्तिनाम् ॥ २०

नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिधावन्तस् सम्प्रहारं प्रचक्रिरे ॥ २१

व्यतिषक्तं महारौद्रं वीरभीरुभयावहम् ॥ २१॥

हया हयैस्समाजग्मुः पादातैश्च पदातयः ।
[1]रथा रथैस्समागच्छन् नागा नागैश्च संयुगे ॥ २२॥

अन्योन्यं समरे राजन् प्रार्थयाना महद्यशः ॥ २३

समुत्पपात चाकाशं सन्निपाते महद्रजः ।
रथाश्वगजपत्तीनां पादनेमिसमुत्थितम् ॥ २४

ताम्रारुणं रजस्तीव्रं रणभूमिं समावृणोत् ॥ २४॥

नैव स्वे न परे राजन् प्राजानन्त परस्परम् ।
पिता पुत्रं न जानीते पुत्रो वा पितरं रणे ॥ २५॥

निर्मर्यादे तथाभूते वैशसे रोमहर्षणे ॥ २६

[2]अस्त्राणां भरतश्रेष्ठ मनुष्याणां च गर्जताम् ।
सुमहानभवच्छब्द अश्मनां पततामिव ॥ २७

गजवाजिमनुष्याणां शोणिताम्भस्तरङ्गिणी ।
प्रावर्तत नदी तत्र केशशैवलशाद्वला ॥ २८

1. ख—अन्योन्यमभिधावन्तस्सम्प्रहारं प्रचक्रिरे । [अधिकः पाठः]
2. ख-ब-ङ-म—इदमादि अर्धचतुष्टयं नास्ति

शूराणां चैव कायेभ्यश् शिरसां पततां रणे ।
शुश्रुवे सुमहाञ् छब्दः पतताम् अश्मनामिव ॥ २९
विशिरस्कैर्मनुष्यैश्च छिन्नगात्रैश्च वारणैः ।
अश्वैस्सम्भिन्नदेहैश्च सङ्कीर्णाऽभूद्वसुन्धरा ॥ ३०
नानाविधानि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिधावन्तस् सम्प्रहारं प्रचक्रिरे ॥ ३१
हया हयान् समासाद्य प्रेषिता हयसादिभिः ।
समाहत्य रणेऽन्योन्यं निपेतुर्गतजीविताः ॥ ३२
नरा नरान् समासाद्य क्रोधरक्तेक्षणा भृशम् ।
[1]रथिनो रथिभिस्सार्थं समासाद्य निजघ्निरे ॥ ३३
प्रेषिताश्च महामात्रैर् वारणाश्शत्रुवारणाः ।
अभिजघ्नुर्विषाणाग्रैर् वारणानेव संयुगे ॥ ३४
ते जातरुधिरोत्पीडाः पताकाभिरलङ्कृताः ।
संसक्ताः प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ३५
केचिद्भिन्ना विषाणाग्रैर् भिन्नकुम्भाश्च तोमरैः ।
विनदन्तोऽभ्यधावन्त गर्जन्तो जलदा यथा ॥ ३६
केचिद्धस्तैर्द्विधा छिन्नैश् छिन्नगात्रास्तथाऽपरे ।
निपेतुस्तुमुले तस्मिंश् छिन्नपक्षा इवाद्रयः ॥ ३७

1. ख-ग-घ-ङ-म—उरोनिघर्षणेऽन्योन्यं समाश्लिष्य

पार्श्वेषु दारिताश्चान्ये वारणा वरवारणैः ।
मुमुचुश्शोणितं भूरि धातूनिव महीधराः ॥ ३८

नाराचनिहताश्चान्ये तथा विद्धाश्च तोमरैः ।
हतारोहा व्यदृश्यन्त विशृङ्गा इव पर्वताः ॥ ३९

केचित् क्रोधसमाविष्टा मदान्धा निरवग्रहाः ।
रथान् हयान् पदातांश्च ममृदुश्शतशो द्विपाः ॥ ४०

तथा हया हयारोहैस् ताडिताः प्रासतोमरैः ।
तेन तेनाभ्यवर्तन्त कुर्वन्तो व्याकुला दिशः ॥ ४१

रथिनो रथिभिस्सार्धं कुलपुत्रास्तनुत्यजः ।
परां शक्तिं समास्थाय चक्रुः कर्माण्यभीतवत् ॥ ४२

स्वयंवर इवामर्दे निजघ्नुरितरेतरम् ।
प्रार्थयाना यशो राजन् स्वर्गं वा रुधिरोक्षिताः ॥ ४३

तस्मिंस्तथा वर्तमाने सङ्ग्रामे रोमहर्षणे ।
धार्तराष्ट्रं महत् सैन्यं प्रायशो विमुखीकृतम् ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥
[अस्मिन्नध्याये ४४ श्लोकाः]

---

## ॥ एकोननवतितमोऽध्यायः ॥

घटोत्कचयुद्धम् ॥

सञ्जयः—

स्वसैन्यं निहतं दृष्ट्वा राजा दुर्योधनस्स्वयम् ।
अभ्यधावत् सुसङ्क्रुद्धो भीमसेनमरिन्दमम् ॥ १

प्रगृह्य सुमहच्चापम् इन्द्राशनिसमस्वनम् ।
महता शरवर्षेण पाण्डवं समवारयत् ॥ २

अर्धचन्द्रं च सन्धाय सुतीक्ष्णं लोमवापिनम् ।
भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ॥ ३

तदन्तरं च सम्प्रेक्ष्य त्वरमाणो महारथः ।
सन्दधे निशितं बाणं गिरीणामपि दारणम् ॥ ४

तेनोरसि महाबाहुर् भीमसेनमताडयत् ॥ ४॥

स गाढविद्धो व्यथितस् सृक्किणी परिसँलिहन् ।
समाश्रयत तेजस्वी ध्वजं हेमपरिष्कृतम् ॥ ५॥

तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ।
क्रोधेनाभिप्रजज्वाल दिधक्षन्निव कौरवान् ॥ ६॥

अभिमन्युमुखाश्चैव पाण्डवानां महारथाः ।
तमभ्यधावन् क्रोशन्तो राजानं जातसम्भ्रमाः ॥ ७॥

सम्प्रेक्ष्य तानापततस् सङ्क्रुद्धाञ्जातसम्भ्रमान् ।
भारद्वाजोऽब्रवीद्राजन् तावकानां महारथान् ॥ ८॥

द्रोणः—

क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत ।
संशयं परमं प्राप्तं मज्जन्तमिव सागरे ॥ ९॥

एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः ।
भीमसेनं पुरस्कृत्य दुर्योधनमभिद्रुताः ॥ १०॥

नानाविधानि शस्त्राणि विसृजन्तो महारथाः ।
नदन्तो भैरवान् नादांस् त्रासयन्तश्च भूमिपान् ॥ ११॥

सञ्जयः—

तदाचार्यवचश्श्रुत्वा सोमदत्तपुरोगमाः ।
तावकास्समवर्तन्त पाण्डवानामनीकिनीम् ॥ १२॥

कृपो भूरिश्रवाश्शल्यो द्रोणपुत्रो विविंशतिः ।
चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः ॥ १३॥

आवन्त्यौ च महेष्वासौ कौरवं पर्यवारयन् ॥ १४

ते विंशतिपदं गत्वा सम्प्रहारं प्रचक्रिरे ।
पाण्डवा धार्तराष्ट्राश्च परस्परजिघांसवः ॥ १५

[1]ततो गत्वा महाबाहुर् महद्विष्फार्य कार्मुकम् ।

1. ङ—इतोऽर्धद्वयं नास्ति

भारद्वाजस्ततो भीमं षड्विंशत्या समर्पयत् ॥ १६

भूयश्चैनं महाबाहुश् शरैर्बहुभिराघृणोत् ।
पर्वतं वारिधाराभिः प्रावृषीव वलाहकः ॥ १७

तं प्रत्यविध्यद्दशभिर् भीमसेनश्शिलीमुखैः ।
त्वरमाणो महेष्वासो वामपार्श्वस्तनान्तरे ॥ १८

स गाढविद्धो व्यथितो वयोवृद्धश्च भारत ।
स नष्टसंज्ञस्सहसा रथोपस्थ उपाविशत् ॥ १९

गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनस्स्वयम् ।
द्रौणायनिश्च सङ्क्रुद्धो भीमसेनमभिद्रुतौ ॥ २०

तावापतन्तौ सम्प्रेक्ष्य कालान्तकयमोपमौ ।
भीमसेनो महाबाहुर् गदामादाय सत्वरः ॥ २१

अवप्लुत्य रथात् तूर्णं तस्थौ गिरिरिवाचलः ।
समुद्यम्य गदां गुर्वीं कालदण्डोपमां रणे ॥ २२

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
कौरवो द्रोणपुत्रश्च सहितावभ्यधावताम् ॥ २३

तावापतन्तौ सहसा त्वरितौ बलिनां वरौ ।
अभ्यधावत वेगेन त्वरमाणो वृकोदरः ॥ २४

तमापतन्तं सम्प्रेक्ष्य सङ्क्रुद्धं भीमदर्शनम् ।

तमभ्यधावंस्त्वरिताः कौरवाणां महारथाः ॥ २५
भारद्वाजिमुखाश्चैव भीमसेनजिघांसया ।
नानाविधानि शस्त्राणि भीमस्योरस्यपातयन् ॥ २६
सहिताः पाण्डवं सर्वे समन्तात् समपीडयन् ॥ २६॥
तं दृष्ट्वा संशयं प्राप्तं पीड्यमानं महारथम् ।
अभिमन्युप्रभृतयः पाण्डवानां महारथाः ॥ २७॥
अभ्यधावन् परीप्सन्तः प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ २८
अनूपाधिपतिर्वीरो भीमस्य दयितस्सखा ।
नीलो नीलाम्बुदप्रख्यस् सङ्क्रुद्धो द्रौणिमभ्यगात् ॥ २९
स्पर्धते च महेष्वासो नित्यं द्रोणसुतेन सः ।
विव्याध सुमहच्चापं विष्फार्य द्रौणिमाहवे ॥ ३०
यथा रुद्रो महाराज पुरा विव्याध दानवम् ।
विप्रचित्तिं दुराधर्षं देवतानां भयङ्करम् ॥ ३१
येन लोकास्त्रयः क्रोधात् त्रासितास्स्वेन तेजसा ।
स रुद्रेण जितः पूर्वं निहतो मातरिश्वना ॥ ३२
तदा नीलेन निर्भिन्नस् सुमुक्तेन सुपत्रिणा ।
स जातरुधिरोत्पीडो द्रौणिः क्रोधसमन्वितः ॥ ३३
स विष्फार्य धनुश्चित्रम् इन्द्राशनिसमस्वनम् ।

दध्रे नीलविनाशाय मतिं मतिमतां वरः ॥ ३४

ततस्सन्धाय विमलान् भल्लान् कर्मारमार्जितान् ।
जघान चतुरो वाहान् पातयामास च ध्वजम् ॥ ३५

सूतं चैकेन भल्लेन रथनीडादपाहरत् ।
सप्तमेन च भल्लेन नीलं विव्याध वक्षसि ॥ ३६

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् । ३६॥

मोहितं वीक्ष्य राजानं नीलमभ्रचयोपमम् ।
घटोत्कचोऽपि सङ्क्रुद्धो ज्ञातिभिः परिवारितः ॥ ३७॥

अभिदुद्राव वेगेन द्रौणिमाहवशोभिनम् ।
तथेतरे चाभ्यधावन् राक्षसा युद्धदुर्मदाः ॥ ३८॥

भीमसेनोऽपि समरे नीलं नीलाञ्जनप्रभम् ।
आरोप्य स्वरथं वीरो दुर्योधनमुपाद्रवत् ॥ ३९॥

घटोत्कचं च सम्प्रेक्ष्य राक्षसं घोरदर्शनम् ।
अभ्यधावत तेजस्वी भारद्वाजः प्रतापवान् ॥ ४०॥

निजघान च सङ्क्रुद्धो [1]ज्ञातिभिः परवारितः ।
अभिदुद्राव वेगेन राक्षसान् भीमदर्शनान् ॥ ४१॥

---

1. ख-ग-घ-ङ-म—अयं पादोऽनन्तरश्च न स्तः

[1]तेऽद्रवन्त ततः क्रुद्धा राक्षसस्य पुरस्सराः ॥ ४२
विमुखांश्चैव तान् दृष्ट्वा द्रोणचापच्युतैश्शरैः ।
अक्रुध्यत महाबाहुः भैमसेनिर्घटोत्कचः ॥ ४३
प्रादुश्चक्रे महामायां घोररूपां भयावहाम् ।
मोहयन् समरे द्रोणं मायावी राक्षसाधिपः ॥ ४४
ततस्ते कौरवास्सर्वे मायया विमुखीकृताः ।
अन्योन्यं समपश्यन्त निकृत्ता मेदिनीतले ॥ ४५
विवेष्टमानान् कृपणान् शोणितेन परिप्लुतान् ।
द्रोणं दुर्योधनं शल्यम् अश्वत्थामानमेव च ॥ ४६
प्रायशश्च महेष्वासा ये प्रधानाश्च कौरवाः ।
विध्वस्ता रथिनस्सर्वे गजाश्च विनिपातिताः ॥ ४७
हयाश्चैव हयारोहास् सन्निकृत्तास्सहस्रशः ।
[2]दुद्रुवुस्समरे राजन् समन्ताच्छिबिरं प्रति ॥ ४८
दृष्ट्वैव तावकं सैन्यं विद्रुतं शिबिरं प्रति ।
मम प्राक्रोशतो राजँस् तथा देवव्रतस्य च ॥ ४९
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे ।
घटोत्कचप्रयुक्तेति नातिष्ठन्त विमोहिताः ॥ ५०
न च ते श्रद्दधुर्भीता वदतोरावयोर्वचः ॥ ५०॥

---

1. अ-क—इदमर्धं नास्ति　　2. ख-म—इदमर्धं नास्ति

तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्य च पाण्डवाः ।
घटोत्कचेन सहितास् सिंहनादं प्रचक्रिरे ॥ ५१॥
शङ्खदुन्दुभिनिर्घोषास् समन्तात् सस्वनुर्भृशम् ॥ ५२
एवं तव बलं सर्वं हैडिम्बेन महात्मना ।
सूर्यास्तमनवेलायां प्रभग्नं सर्वतो दिशम् ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
॥ भीष्मपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
[ अस्मिन्नध्याये ५३ श्लोकाः ]

## ॥ नवतितमोऽध्यायः ॥



भगदत्तादियुद्धम् ॥



सञ्जयः—

तस्मिन् महति सङ्क्रन्दे राजा दुर्योधनस्तदा ।
पराजयं राक्षसेन नामृष्यत परन्तपः ॥ १
गाङ्गेयमुपसङ्गम्य विनयेनाभिवाद्य च ।
तस्य सर्वं यथावृत्तम् आख्यातुमुपचक्रमे ॥ २
घटोत्कचस्य विजयम् आत्मनश्च पराजयम् ।
कथयामास दुर्धर्षो विनिश्श्वस्य पुनः पुनः ॥ ३
अब्रवीच्च महाराज भीष्मं कुरुपितामहम् ॥ ३॥

दुर्योधनः—

[1]भवन्तं समुपाश्रित्य द्रोणं चैव पितामह ।
पाण्डवैर्विग्रहो घोरस् समारब्धो मया प्रभो ॥ ४॥

एकादश समाख्याता अक्षौहिण्यश्च या मम ।
निदेशे तव तिष्ठन्ति मया सार्धं परन्तप ॥ ५॥

सोऽहं भरतशार्दूल भीमसेनपुरोगमैः ।
घटोत्कचं समाश्रित्य पाण्डवैर्युधि निर्जितः ॥ ६॥

तन्मे दहति गात्राणि शुष्केन्धनमिवानलः ।
तदिच्छामि महाभाग त्वत्प्रसादात् परन्तप ॥ ७॥

राक्षसापशदं हन्तुं स्वयमेव पितामह ।
त्वां समाश्रित्य दुर्धर्ष तन्मे कर्तुं त्वमर्हसि ॥ ८॥

सञ्जयः—

[2]एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम ।
दुर्योधनमिदं वाक्यं भीष्मश्शान्तनवोऽब्रवीत् ॥ ९॥

भीष्मः—

शृणु राजन् मम वचो यत् त्वां वक्ष्यामि कौरव ।
यथा त्वया महाराज वर्तितव्यं परन्तप ॥ १०॥

आत्मा रक्ष्यस्त्वया तात सर्वावस्थास्वरिन्दम ॥ ११

---

1. अ-क—इदमर्धं नास्ति 2. अ-क—अर्धपञ्चकं नास्ति

धर्मराजेन सङ्ग्रामस् त्वया कार्यः परन्तप ।
अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः ॥ १२
अन्यैर्वा पृथिवीपालै राजा राजानमृच्छति ।
न तु कार्यस्त्वया राजन् हैडिम्बेन दुरात्मना ॥ १३
अहं द्रोणः कृपो द्रौणिः कृतवर्मा च सात्वतः ।
शल्यश्च वृषसेनश्च विकर्णश्च महारथः ॥ १४
शेषाश्च भ्रातरस्त्वन्ये दुश्शासनपुरोगमाः ।
त्वदर्थं प्रतियोत्स्यामो राक्षसं तं परन्तप ॥ १५
रौद्रं हन्तुं राक्षसेन्द्रं यदि ते हृच्छयो महान् ।
अयमागच्छतु रणं तस्य युद्धाय दुर्मतेः ॥ १६
भगदत्तो महीपालः पुरन्दरसमो युधि ॥ १६॥

सञ्जयः—

एतावदुक्त्वा वचनं भगदत्तमथाब्रवीत् ।
समक्षं पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः ॥ १७॥

भीष्मः—

गच्छ शीघ्रं महाराज हैडिम्बं युद्धदुर्मदम् ।
वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम् ॥ १८॥
राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा ॥ १९
तव दिव्यानि शस्त्राणि विक्रमश्च परन्तप ।

समागमश्च बहुभिः पुराऽभूद्दानवैस्सह ॥ २०
त्वमस्य राजशार्दूल प्रतिषेद्धा मतो मम ।
स्वबलेनावृतो गच्छ जहि राक्षसपुङ्गवम् ॥ २१

सञ्जयः—
एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः ।
प्रययौ सिंहनादेन परानभिमुखोद्यतः ॥ २२
तमापतन्तं सम्प्रेक्ष्य गर्जन्तमिव तोयदम् ।
अभ्यवर्तन्त सङ्क्रुद्धाः पाण्डवानां महारथाः ॥ २३
भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः ।
द्रौपदेयास्सत्यधृतिः क्षत्रदेवश्च मारिष ॥ २४
चेदिपो वसुदानश्च दशार्णाधिपतिस्तथा ।
सुप्रतीकेन तांश्चापि भगदत्तोऽभ्युपाद्रवत् ॥ २५
[1]ततस्समभवद्युद्धं घोररूपं भयानकम् ।
पाण्डूनां भगदत्तेन यमराष्ट्रविवर्धनम् ॥ २६
प्रयुक्ता रथिभिर्बाणा भीमवेगास्सुतेजसः ।
विनिपेतुर्महाराज नागेषु च हयेषु च ॥ २७
प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः ।
परस्परं समासाद्य सन्निपेतुरभीतवत् ॥ २८

---
1. अ—अर्धषट्कं नास्ति

मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे ।
विनेदुर्दन्तमुसलैस् समासाद्य परस्परम् ॥ २९

हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः ।
चोदितास्सादिभिः क्षिप्रं निजघ्नुरितरेतरम् ॥ ३०

पदातयः पदात्योघैस् ताडिताश्शक्तितोमरैः ।
न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः ॥ ३१

रथिनश्च रथस्थांश्च कर्णिनालीकतोमरैः ।
निहत्य समरे राजन् सिंहनादं विनेदिरे ॥ ३२

तस्मिंस्तदा वर्तमाने सङ्ग्रामे रोमहर्षणे ।
भगदत्तो महेष्वासो भीमसेनमुपाद्रवत् ॥ ३३

कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम् ।
पर्वतेन यथा तोयं क्षरता वै समन्ततः ॥ ३४

किरञ् छरसहस्राणि सुप्रतीकशिरोगतः ।
ऐरावतस्थो मघवान् वारिधारा इवानघ ॥ ३५

स भीमं शरजालेन ताडयामास भारत ।
पर्वतं वारिधाराभिस् तपान्ते जलदो यथा ॥ ३६

भीमसेनस्तु सङ्क्रुद्धः पादरक्षान् परश्शतान् ।
निजघान महेष्वासस् सङ्क्रुद्धश्शरवृष्टिभिः ॥ ३७

तान् दृष्ट्वा निहतान् क्रुद्धो भगदत्तः प्रतापवान् ।
चोदयामास नागेन्द्रं भीमसेनरथं प्रति ॥ ३८

स नागः प्रेषितस्तेन बाणो ज्याचोदितो यथा ।
अभ्यधावत वेगेन भीमसेनपुरोगमान् ॥ ३९

[1]तमापतन्तं सम्प्रेक्ष्य [2]गर्जन्तमिव तोयदम् ।
[3]अभ्यवर्तन्त सङ्क्रुद्धाः पाण्डवानां महारथाः ॥ ४०

[4]दृष्ट्वा वेगेन सहिता भीमसेनपुरोगमाः ।
केकया द्रौपदेयाश्च अभिमन्युश्च सर्वशः ॥ ४१

दशार्णाधिपतिश्चैव क्षत्रदेवश्च मारिष ।
चेदिपो धृष्टकेतुश्च सङ्क्रुद्धास्सर्व एव हि ॥ ४२

उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः ।
तमेकं कुञ्जरं क्रुद्धास् समन्तात् पर्यवारयन् ॥ ४३

स विद्धो बहुभिर्बाणैर् व्यरोचत महाद्विपः ।
सञ्जातरुधिरोत्पीडो धातुचित्र इवाद्रिराट् ॥ ४४

दशार्णाधिपतिश्चैव स्वनागं भूधरोपमम् ।
समास्थितोऽभिदुद्राव भगदत्तस्य वारणम् ॥ ४५

---

1. ङ—अर्धद्वयं नास्ति 2. ख-ग-घ—पाण्डवानां महारथाः
3. ख-ग-घ-म—अभ्यधावन्त वेगेन भीमसेनपुरोगमाः ।
4. ख-घ-ङ-म—इदमर्धं नास्ति [पाठान्तरम्]

तमापतन्तं समरे राजन् गजपतिस्स च ।
सुप्रतीको रुरोधाग्रे वेलेव मकरालयम् ॥ ४६

वारितं प्रेक्ष्य नागेन्द्रं दशार्णस्य महात्मनः ।
साधु साध्विति सैन्यानि त्वदीयान्यभ्यपूजयन् ॥ ४७

ततः प्राग्ज्योतिषः क्रुद्धस् तोमरांश्च चतुर्दश ।
प्राहिणोत् तस्य नागस्य प्रमुखे नृपसत्तमः ॥ ४८

[1]रुरोध तं सुप्रतीको वेलेव मकरालयम् ॥ ४८॥

तस्य वर्म मुखत्राणं शातकुम्भपरिष्कृतम् ।
[2]छित्त्वा बाणैर्मुखं तस्य पुनरन्यैर्जघान च ॥ ४९॥

[3]ते मुखं प्राविशन् भित्त्वा वल्मीकमिव पन्नगाः ॥ ५०

स गाढविद्धो व्यथितो नागो भरतसत्तम ।
उपावृत्य ततः क्षिप्रं स न्यवर्तत युद्धतः ॥ ५१

अभिदुद्राव वेगेन विनदन् भैरवस्वनम् ।
स मर्दमानस्स्वबलं वायुर्वृक्षानिवौजसा ॥ ५२

तस्मिन् पराजिते नागे पाण्डवानां महारथाः ।
सिंहनादं विनद्योच्चैर् युद्धायैवावतस्थिरे ॥ ५३

ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन् ।

---

1. ख-ष-ङ-म—इदमर्धं नास्ति     2. ख-ष-ङ-म—इदमर्धं नास्ति
3. ख-ग-ष-ङ-म—विदार्य प्राविशन् क्षिप्रं वल्मीकमिव पन्नगाः ।
[पाठान्तरम्]

किरन्तो विविधान् बाणान् शस्त्राणि विविधानि च ॥ ५४

तेषामापततां राजन् संरब्धानां मनीषिणाम् ।
श्रुत्वा स निनदं घोरम् अमर्षागतसाध्वसः ॥ ५५

भगदत्तो महेष्वासस् स्वनागं समचोदयत् ॥ ५५॥

अङ्कुशाङ्गुष्ठमृदितस् स नागप्रवरो युधि ।
तस्मिन् क्षणे समभवत् संवर्तक इवानलः ॥ ५६॥

रथसङ्घांस्तथा नागान् हयांश्च हयसादिनः ।
पादातांश्च सुसङ्क्रुद्धश् शतशोऽथ सहस्रशः ॥ ५७॥

प्रामृद्नात् समरे राजन् सम्प्रधावंस्ततस्ततः ।
तेन सँक्षोड्यमानं च पाण्डूनां सुमहद्बलम् ॥ ५८॥

सञ्चुकोच महाराज चर्मेवाग्नौ समाहितम् ॥ ५९

भग्नं तु स्वबलं दृष्ट्वा भगदत्तेन धीमता ।
घटोत्कचस्सुसङ्क्रुद्धो भगदत्तमुपाद्रवत् ॥ ६०

विकटः परुषो राजन् दीप्तास्यो दीप्तलोचनः ।
रूपं विभीषणं कृत्वा क्रोधेन प्रज्वलन्निव ॥ ६१

जग्राह विपुलं शूलं गिरीणामपि दारणम् ।
नागं जिघांसुस्सहसा चिक्षेप स महाबलः ॥ ६२

स विष्फुलिङ्गज्वालाभिस् समन्तात् परिवेष्टितम् ।

तमापतन्तं सहसा दृष्ट्वा ज्वालासमाकुलम् ॥ ६३
सन्दधे निशितं चोग्रम् अर्धचन्द्रं स पार्थिवः ॥ ६३॥
चिक्षेप च महच्छूलं तेन बाणेन वेगवान् ।
तत् पपात द्विधा च्छिन्नं शूलं हेमपरिष्कृतम् ॥ ६४॥
महाशनिर्यथा भ्रष्टा नभसश्च गता भुवि ॥ ६५
शूलं निपतितं दृष्ट्वा द्विधा कृत्तं स पार्थिवः ।
रुक्मदण्डां महाशक्तिं जग्राहाग्निशिखोपमाम् ॥ ६६
चिक्षेप तां राक्षसस्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६६॥
तामापतन्तीं सम्प्रेक्ष्य वियत्स्थामशनीमिव ।
उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ॥ ६७॥
[1]पुनर्बाणान् स चिक्षेप भगदत्ताय वैरिणे ॥ ६८
भगदत्तोऽपि सङ्क्रुद्धो घटोत्कचमथाच्छिनत् ।
आकर्णपूरितैर्बाणैश्च शितैस्सन्नतपर्वभिः ॥ ६९
घटोत्कचोऽपि तान् बाणान् द्विधा च्छित्त्वा व्यपातयत् ॥ ६९॥
तान् बाणांश्छेदितान् दृष्ट्वा भगदत्तोऽपि रक्षसा ।
क्रोधेन महताऽऽविष्टस् सृक्कणी परिसँल्लिहन् ॥ ७०॥
रुक्मदण्डां महाशक्तिं जग्राहाग्निशिखोपमाम् ।
घटोत्कचाय चिक्षेप तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७१॥

1. ख-घ-ङ-म—अर्धनवकं नास्ति

तामापतन्तीं सम्प्रेक्ष्य जग्राह स घटोत्कचः ।
बभञ्ज चैनां त्वरितो जानुमारोप्य भारत ॥ ७२॥

पश्यतः पार्थिवेन्द्रस्य तदद्भुतमिवाभवत् ॥ ७३

तदवेक्ष्य कृतं कर्म [1]राक्षसस्य बलीयसः ।
[2]घटोत्कचस्य तद्युद्धं तथा कृतवतोऽद्भुतम् ॥ ७४

दिवि देवास्सगन्धर्वा मुनयश्चापि विस्मिताः ॥ ७४॥

पाण्डवाश्च महेष्वासा भीमसेनपुरोगमाः ।
साधु साध्विति नादेन पृथिवीमन्वनादयन् ॥ ७५॥

तं श्रुत्वा सुमहानादं प्रहृष्टानां महात्मनाम् ।
नामृष्यत महेष्वासो भगदत्तः प्रतापवान् ॥ ७६॥

विष्फार्य सुमहच्चापम् इन्द्राशनिसमस्वनम् ।
अभिदुद्राव वेगेन पाण्डवानां महारथान् ॥ ७७॥

विसृजन् विमलांस्तीक्ष्णान् नाराचाञ्ज्वलनप्रभान् ।
भीममेकेन विव्याध राक्षसं नवभिश्शरैः ॥ ७८॥

अभिमन्युं त्रिभिश्चैव केकयान् पञ्च पञ्चभिः ॥ ७९

पूर्णायतविसृष्टेन स्वर्णपुङ्खेन पत्रिणा ।
बिभेद दक्षिणं बाहुं क्षत्रदेवस्य चाहवे ॥ ८०

---

1. ख-ग-घ-ङ-म—राक्षसेन बलीयसा
2. ख-घ-ङ-म—इदमर्धं नास्ति

पपात सहसा तस्य सशरं धनुरुत्तमम् ॥ ८०॥

द्रौपदेयांस्ततः पञ्च पञ्चभिस्समताडयत् ।
भीमसेनस्य सङ्क्रुद्धो निजघान तुरङ्गमान् ॥ ८१॥

ध्वजं केसरिणं चास्य चिच्छेद विशिखैस्त्रिभिः ।
निर्बिभेद त्रिभिश्चान्यैश् सारथिं चास्य पत्रिभिः ॥ ८२॥

स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
[1]विसंज्ञो भरतश्रेष्ठ भगदत्तेन संयुगे ॥ ८३॥

[2]पुनस्संज्ञां ततः प्राप क्षणेन भरतर्षभ ॥ ८४

ततो भीमो महाराज विरथो रथिनां वरः ।
गदां जग्राह वेगेन प्रचस्कन्द रथादपि ॥ ८५

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
तावकानां भयं घोरं समजायत भारत ॥ ८६

एतस्मिन्नेव काले तु पाण्डवः कृष्णसारथिः ।
आजगाम महाबाहुर् निघ्नञ् शत्रून् सहस्रशः ॥ ८७

यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ परन्तपौ ।
प्राग्ज्योतिषेण संसक्तौ भीमसेनघटोत्कचौ ॥ ८८

दृष्ट्वा च पाण्डवो भ्रातॄन् युध्यमानान् महारथान् ।
त्वरितो भरतश्रेष्ठस् तत्रायाद्विकिरञ् छरान् ॥ ८९

1. ख-ग-ब-ङ-म—विशोको    2. ख-घ-ङ-म—इदमर्धं नास्ति

ततो दुर्योधनो राजा त्वरमाणो महारथः ।
सेनामचूचुदत् क्षिप्रं रथनागाश्वसङ्कुलाम् ॥ ९०
तामापतन्तीं सहसा कौरवाणां महाचमूम् ।
अभिदुद्राव वेगेन पाण्डवः कृष्णसारथिः ॥ ९१
भगदत्तोऽपि समरे तेन नागेन भारत ।
विमृद्नन् पाण्डवबलं युधिष्ठिरमुपाद्रवत् ॥ ९२
आसीत् तत्र महद्युद्धं भगदत्तस्य भारत ।
पाञ्चालैस्सृञ्जयैश्चैव केकयैश्चोद्यतायुधैः ॥ ९३
भीमसेनोऽपि समरे तावुभौ केशवार्जुनौ ।
अश्रावयद्यथावृत्तम् इरावद्वधमुत्तमम् ॥ ९४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[ अस्मिन्नध्याये ९४ श्लोकाः ]

## ॥ एकनवतितमोऽध्यायः ॥

भीमेन दुर्योधनानुजानां कतिपयानां हननम् ॥

सञ्जयः—

पुत्रं निपतितं श्रुत्वा कौन्तेयश्श्वेतवाहनः ।
दुःखेन महताऽऽविष्टो निश्श्वसन्नुरगो यथा ॥ १

अब्रवीत् समरे राजन् वासुदेवमिदं वचः । १॥

अर्जुनः—

इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा ।
कुरूणां पाण्डवेयानां क्षयं घोरं महामतिः ॥ २॥

ततो वारितवान् नित्यं धृतराष्ट्रं जनेश्वरम् ॥ ३

अवध्या बहवो वीरास् सङ्ग्रामे मधुसूदन ।
निहताः कौरवैस्सङ्ख्ये तथाऽस्माभिश्च ते हताः ॥ ४

अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म कुत्सितम् ।
धिगर्थं यत्कृते ह्येवं क्रियते ज्ञातिसङ्क्षयः ॥ ५

अधनस्य मृतिश्श्रेयो न च ज्ञातिवधाद्धनम् ।
धनेन तेन किं कुर्मो हत्वा ज्ञातीन् समागतान् ॥ ६

दुर्योधनापराधेन शकुनेस्सौबलस्य च ।
क्षत्रिया निधनं यान्ति कर्णदुर्मन्त्रितेन च ॥ ७

इदानीं तद्विजानामि सुकृतं मधुसूदन ।
कृतं राज्ञा महाबाहो याचता हि सुयोधनम् ॥ ८

राज्यार्धं पञ्च वा ग्रामान् नाकार्षीत् स च दुर्मतिः ॥ ८॥

दृष्ट्वाऽहं क्षत्रियाञ्शूराञ्शयानान् धरणीतले ।
निन्दामि भृशमात्मानं धिगस्तु क्षत्रजीविकाम् ॥ ९॥

अशक्त इति चात्मानं ज्ञास्यन्ते क्षत्रिया भुवि ।

एतदर्थं मया युद्धं रोचितं मधुसूदन ॥ १०॥
त्वं चोदय हयान् क्षिप्रं धार्तराष्ट्रचमूं प्रति ।
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिम् ॥ ११॥
नायं क्लीबायितुं कालो विद्यते माधव कचित् ॥ १२

सञ्जयः—

एवमुक्तस्तु पार्थेन केशवः परवीरहा ।
चोदयामास तानश्वान् पाण्डवान् वातरंहसः ॥ १३
अथ शब्दो महानासीत् तव सैन्यस्य भारत ।
[1]मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ १४
अपराह्णे महाराज सङ्ग्रामस्समपद्यत ।
पर्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः ॥ १५
अभिमन्युस्तु राजानम् अम्बष्ठं समरेऽद्रवत ॥ १५॥
भीमसेनस्तु सम्प्रेक्ष्य पुत्रांस्तव विशां पते ।
प्रजज्वाल रणे क्रोधाद्धविषा हव्यवाडिव ॥ १६॥
ततो राजंस्तव सुता भीमसेनमुपाद्रवन् ।
[2]परिवार्य रणे द्रोणं वसवो वासवं यथा ॥ १७॥
ततश्शान्तनवो भीष्मः कृपश्च रथिनां वरः ।
भगदत्तस्सुशर्मा च धनञ्जयमुपाद्रवन् ॥ १८॥

1. अ-क—नास्तीदमर्धम् 2. व—नास्त्यर्धसयम्

हार्दिक्यो बाह्लिकश्चैव सात्यकिं समभिद्रुतौ ।
शेषास्त्वन्ये महाराज शेषानेव महारथान् ॥ १९॥

ततः प्रववृते युद्धं घोररूपं भयावहम् ॥ २०

पुत्रास्तु भीमसेनं ते छादयाञ्चक्रिरे भृशम् ।
प्रावृषीव महाराज जलदा इव पर्वतम् ॥ २१

सञ्छाद्यमानो बहुधा पुत्रैस्तव विशां पते ।
सृक्किणी संलिहन् वीरश् शार्दूल इव दर्पितः ॥ २२

व्यूढोरस्कस्ततो भीमः पोथयामास पार्थिवम् ।
क्षुरप्रेण सुतीक्ष्णेन सुपुङ्खेन महारणे ॥ २३

ताडयामास सङ्क्रुद्धस् सोऽभवद्व्यथितेन्द्रियः ॥ २३॥

अपरेण तु भल्लेन पीतेन निशितेन च ।
अपातयत् भीमसेनस् सिंहः क्षुद्रमृगं यथा ॥ २४॥

[1]लब्धसंज्ञस्तदोत्थाय भीमसेनं शिलीमुखान् ।
सुबहून् प्रेषयामास कोपयानो महाबलम् ॥ २५॥

समधत्त शरान् भीमस् ततो हन्तुं सुतांस्तव ॥ २६

प्रेषिता भीमसेनेन शरास्ते दृढधन्विना ।

---

1. ख-ग-घ-ङ-म—ततस्सुनिशितान् बाणान् भीमसेनश्शिलाशितान् ।
स सप्त सन्दधे हन्तुं पुत्रांस्ते भरतर्षभ ॥
[अर्धत्रयस्थाने पाठान्तरमिदम्]

पुत्रांस्ते पातयामासुः रथेभ्यस्सुमहारथान् ॥ २७
अनाधृष्टिं कुण्डभेदिं विराजं दीप्तलोचनम् ।
दीर्घबाहुं सुबाहुं च तथैव मकरध्वजम् ॥ २८
प्रतपन्तस्स्म ते वीरा विरेजुर्भरतर्षभ ।
[1]शोणिताक्षा वसन्तेऽपि पुष्पिता इव किंशुकाः ॥ २९
ततः प्रदुद्रुवुश्शेषास् तव पुत्रा महाहवे ।
तं कालं मन्यमानास्ते भीमसेनं महाबलम् ॥ ३०
द्रोणस्तु समरे भीमं निर्दहन्तं सुतांस्तव ।
यथाऽद्रिं वारिधाराभिस् समन्ताद्व्यकिरच्छरैः ॥ ३१
तत्राद्भुतमपश्याम भीमसेनस्य पौरुषम् ।
यद्वार्यमाणो द्रोणेन निहन्त्येव सुतांस्तव ॥ ३२
यथा वृषो हि राजेन्द्र वर्षधारास्सुशीघ्रगाः ।
निमील्य नेत्रे गृह्णीयात् तथा जग्राह पाण्डवः ॥ ३३
[2]द्रोणचापसमुद्भूतं शरवर्षं सुदारुणम् ।
अद्भुतं कर्म राजेन्द्र तत्र चक्रे स्म पाण्डवः ॥ ३४
यत् पुत्रांस्तेऽवधीद्भीमो द्रोणं चैव व्यपोथयत् ॥ ३४॥
पुत्रेषु तव वीरेषु चिक्रीडार्जुनपूर्वजः ।

1. ख-ग-घ-ङ-म—वसन्ते पुष्पशबला किंशुकाः पतिता इव ।
2. ङ—अर्धद्वयं नास्ति

मृगेष्विव महाराज चरन् व्याघ्रो महाबलः ॥ ३५॥

यथा वा पशुमध्यस्थो द्रावयेत पशून् वृकः ।
वृकोदरस्तव सुतांस् तथा व्यद्रावयद्रणे ॥ ३६॥

गाङ्गेयो भगदत्तश्च गौतमश्च महारथः ।
पाण्डवं रभसं युद्धे वारयामासुरर्जुनम् ॥ ३७॥

अस्त्रैरस्त्राणि संवार्य तेषां सोऽतिरथो रणे ।
प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ॥ ३८॥

अभिमन्युश्च राजानम् अम्बष्ठं लोकविश्रुतम् ।
विरथं रथिनां श्रेष्ठं कारयामास सायकैः ॥ ३९॥

विरथो वध्यमानस्स सौभद्रेण यशस्विना ।
अवप्लुत्य रथात् क्षिप्रं स वीरो मनुजाधिप ॥ ४०॥

असिं चिक्षेप समरे सौभद्रस्य महात्मनः ।
आरुरोह रथं चैव हार्दिक्यस्य महात्मनः ॥ ४१॥

तमापतन्तं निर्स्त्रिंशं युद्धमार्गविशारदः ।
लाघवाद्भ्रंशयामास सौभद्रः परवीरहा ॥ ४२॥

ध्वंसितं वीक्ष्य निस्त्रिंशं सौभद्रेण तदा रणे ।
साधु साध्विति सैन्यानां प्रणादोऽभूद्विशां पते ॥ ४३॥

धृष्टद्युम्नमुखाश्चैव तव सैन्यमयोधयन् ।
तथैव तावकास्सर्वे पाण्डुसैन्यमयोधयन् ॥ ४४॥

तत्राक्रन्दो महानासीत् तव तेषां च भारत ।
[1]पाण्डवानां च राजेन्द्र सैनिकानां सुदारुणः ॥ ४५॥

निघ्नतां भृशमन्योन्यं कुर्वतां कर्म दुष्करम् ।
अन्योन्यं हि रणे वीराः केशेष्वाक्षिप्य भारत ॥ ४६॥

नखैर्दन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ।
बाहुभिश्च तलैश्चैव निस्त्रिंशैश्च सुसंशितैः ॥ ४७॥

विवरं प्राप्य चान्योन्यं प्रेषयन्ति यमक्षयम् ॥ ४८

न्यहनद्वै पिता पुत्रं पुत्रश्च पितरं तथा ।
[2]जामाता मातुलमपि भ्राता भ्रातरमेव च ॥ ४९

इत्येवं बान्धवास्सर्वे बन्धुभिः कृतमत्सराः ।
व्याकुलीकृतसङ्कल्पा युयुधुस्तत्र मानवाः ॥ ५०

रणे चारूणि चापानि हेमपृष्ठानि भारत ।
[3]हतानामपविद्धानि कलापाश्च महाधनाः ॥ ५१

जातरूपमयैः पुङ्खैः राजतैश्च विराजिताः ।
[4]रणे निपतिता बाणाश् शोणितेन परिप्लुताः ॥ ५२

तैलधौता व्यराजन्त निर्मुक्तभुजगा इव ।
खङ्गाश्च दान्तत्सरवो जातरूपपरिष्कृताः ॥ ५३

1. ब-ङ-म—नास्तीदमर्धम्
2. ब-ङ-म—नास्त्यर्धद्वयम्
3. अ-ख—षडर्धानि न सन्ति
4. म—नास्तीदमर्धम्

चर्माणि चापविद्धानि रुक्मगर्भाणि भारत ।
सुवर्णविकृताः प्रासाः पट्टसा हेमभूषिताः ॥ ५४

जातरूपमया यष्ट्यश् शक्त्यश्च कनकोज्ज्वलाः ।
अवस्कन्दाश्च पतिता मुसलानि गुरूणि च ॥ ५५

परिघाः पट्टसाश्चैव भिण्डिपालाश्च मारिष ।
पतितास्तोमराः पाशाश् चित्रहेमविभूषिताः ॥ ५६

कुथाश्च बहुधाकाराश् चामरव्यजनानि च ।
नानाविधानि शस्त्राणि प्रगृह्य पतिता नराः ॥ ५७

जीवन्त इव दृश्यन्ते गतसत्त्वा महाबलाः ॥ ५७॥

गदाविमथितैर्गात्रैर् मुसलैर्भिन्नमस्तकाः ।
गजवाजिरथक्षुण्णाः निस्सृतान्त्रा नराः क्षितौ ॥ ५८॥

तथैवाश्वनृनागानां शरीरैराघृता बभौ ।
सञ्छन्ना वसुधा राजन् पर्वतैरिव शातितैः ॥ ५९॥

समरे पतितैश्चैव शक्त्यष्टिप्रासतोमरैः ।
निस्त्रिंशैः पट्टसैः प्रासैर् अवस्कन्दैः परश्वथैः ॥ ६०॥

परिघैर्भिण्डिपालैश्च शतघ्नीभिश्च मारिष ।
शरीरैश्शस्त्रभिन्नैश्च समास्तीर्यत मेदिनी ॥ ६१॥

[1]हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ।

---

1. ख-च-छ-म—इदमर्धद्वयं नास्ति

सञ्छिन्नैर्भिन्नवक्त्रैश्च ह्यपविद्धैरलङ्कृतैः ॥ ६२॥

निश्शब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्नैर् विबभौ संवृता मही ॥ ६३॥

सतलत्रैस्सकेयूरैर् [1]बाहुभिश्चन्दनोक्षितैः ।
[2]सुदृढैर्दीर्घवृत्तैश्च संवृता तत्र मेदिनी ॥ ६४॥

बद्धचूडामणिधरैश् शिरोभिश्च सकुण्डलैः ।
[3]पतितैर्वृषभाक्षाणां बभौ भारत मेदिनी ॥ ६५॥

कवचैश्शोणितादिग्धैर् विप्रकीर्णैश्च काञ्चनैः ।
रराज सुभृशं भूमिश् शान्तार्चिर्भिरिवानलैः ॥ ६६॥

विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः ।
[4]विप्रकीर्णैश्शरैश्चैव रुक्मपुङ्खैस्समन्ततः ॥ ६७॥

रथैश्च बहुभिर्भग्नैः किङ्किणीजालमालिभिः ।
वाजिभिश्च हतैः कीर्णैस् स्रस्तजिह्वैस्सशोणितैः ॥ ६८॥

[5]अनुकर्षैः पताकाभिर् उपासङ्गैर्ध्वजैरपि ।
प्रवीराणां महाशङ्खैर् विप्रकीर्णैश्च पाण्डरैः ॥ ६९॥

---

1. ङ-म—इतोऽर्धद्वयं नास्ति
2. ख-ग-घ-म—हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ।
[ अधिकः पाठः ]
3. ख—इदमर्धत्रयं नास्ति 4. अ-क—नास्तीदमर्धम्
5. घ—नास्तीदमर्धद्वयम्

स्रस्तहस्तैश्च मातङ्गैश् शयानैश्शोणितोक्षितैः ।
शुशुभे धरणी राजन् प्रदीप्तैरिव पर्वतैः ॥ ७०॥

स्रस्तैराभरणैश्चैव विबभौ तु तदा मही ।
नानारूपैरलङ्कारैः प्रमदेवाभ्यलङ्कृता ॥ ७१॥

दन्तिभिश्चापरैस्तत्र सप्राणैर्गाढवेदनैः ।
[1]करैश्शब्दं विमुञ्चद्भिश् शीकरैश्च मुहुर्मुहुः ॥ ७२॥

विबभौ तद्रणस्थानं मथ्यमानैरिवाचलैः ।
नानारागैः कम्बलैश्च परिस्तोमैश्च दन्तिनाम् ॥ ७३॥

[2]पातिताभिः कुथाभिश्च विचित्राभिस्समन्ततः ।
वैडूर्यमणिदण्डैश्च पतितैरङ्कुशैश्शुभैः ॥ ७४॥

घण्टाभिश्च गजेन्द्राणां पतिताभिस्समन्ततः ।
[3]ग्रैवेयैश्चित्ररूपैश्च रुक्मरज्जुभिरेव च ॥ ७५॥

छत्रैश्च बहुभिश्छिन्नैस् तोमरैश्चापि काञ्चनैः ।
रराज सुभृशं भूमिस् तत्र तत्र विशां पते ॥ ७६॥

अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः ।
सादिनां सुभुजैश्छिन्नैः पतितैस्साङ्गदैस्तथा ॥ ७७॥

---

1. अ-क—नास्तीदमर्धम्  2. ग-घ-म—नास्तीदमर्धम्
3. ख-ग-घ-ङ-म—विपाटितविचित्राभिः कुथाभिश्च महाधनैः ।
[ अधिकः पाठः ]

[1]प्रासैश्च विमलैस्तीक्ष्णैर् विमलाभिस्तथर्ष्टिभिः ।
उष्णीषैश्च तथा चित्रैर् विप्रविद्धैस्ततस्ततः ॥ ७८॥

शिरस्त्राणैर्विचित्रैश्च जातरूपपरिष्कृतैः ।
अश्वास्तरपरिस्तोमैः कम्बलैर्मृदितैस्तथा ॥ ७९॥

[2]विचित्रैर्नृपतिच्छत्रैर् जातरूपपरिष्कृतैः ।
नरेन्द्रचूडामणिभिर् विचित्रैश्च महाधनैः ॥ ८०॥

छत्रैस्तथाऽपविद्धैश्च चामरैर्व्यजनैस्तथा ।
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः ॥ ८१॥

कॢप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ।
अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः ॥ ८२॥

ग्रहनक्षत्रशबला द्यौरिवासीद्वसुन्धरा ॥ ८३

एवमेते महासेने मृदिते तव भारत ।
परस्परं समासाद्य तव तेषां च संयुगे ॥ ८४

[3]एतद्भूमौ महाघोरम् अपश्याम रणाजिरम् ।
[4]रात्रिस्समभवद्घोरा नापश्याम ततो रणम् ॥ ८५

---

1. अ-क—अर्धचतुष्टयं नास्ति
2. अ-क-ख-ग-घ—नास्तीदमर्धम्
3. ख-ग-ङ-म—तेषु सम्भ्रान्तभग्नेषु मृदितेषु च संयुगे ।
घ—कोशे नास्तीदमर्धम् [अधिकः पाठः]
4. अ-क—नास्तीदमर्धम्

ततोऽपहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः ।
तस्मिन् निशामुखे रौद्रे वर्तमानेऽतिदारुणे ॥ ८६

अपहारं ततः कृत्वा सहिताः कुरुपाण्डवाः ।
न्यविशन्ति निशाकाले गत्वा स्वशिबिरं तदा ॥ ८७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[ अस्मिन्नध्याये ८७ श्लोकाः ]

## ॥ द्विनवतितमोऽध्यायः ॥

भीष्मो न्यस्तशस्त्रश्चेदहं पाण्डवान् जेष्यामीति कर्णबोधितेन दुर्योधनेन रात्रौ भीष्ममेत्य कर्णस्य युद्धानुज्ञाप्रार्थना ॥

सञ्जयः—

ततो दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुश्शासनश्च कितवस् सूतपुत्रश्च वीर्यवान् ॥ १

समागम्य महाराज मन्त्रयाञ्चक्रिरे मिथः ।
[1]कथं पाण्डुसुता युद्धे जेतव्यास्सगणा इति ॥ २

ततो दुर्योधनो राजा सर्वांस्तानाह मन्त्रिणः ।

1. अ-क—अर्धद्वयं नास्ति

सूतपुत्रं समाभाष्य सौबलं च महामतिम् ॥ ३

दुर्योधनः—

द्रोणो भीष्मः कृपश्शल्यस् सौमदत्तिश्च संयुगे ।
न पार्थान् प्रतिबाधन्ते न जाने किं नु कारणम् ॥ ४

अवध्यमानास्ते चापि क्षपयन्ति बलं मम ।
सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे ॥ ५

[1]त्वय्युद्धविमुखे चापि जितश्चास्मि हि पाण्डवैः ॥ ५॥

द्रोणस्य प्रमुखे वीरा हतास्ते भ्रातरो मम ।
भीमसेनेन राधेय मम चैवानुपश्यतः ॥ ६॥

निकृतः पाण्डवैश्शूरैर् अवध्यैर्दैवतैरपि ।
सोऽहं संशयमापन्नः प्रकरिष्ये कथं रणम् ॥ ७॥

सञ्जयः—

[2]एवमुक्तस्तु राधेयो दुर्योधनमरिन्दमम् ।
ततोऽब्रवीन्महाराज सूतपुत्रो नराधिपम् । ८॥

कर्णः—

मा शुचो भरतश्रेष्ठ प्रकरिष्ये प्रियं तव ।
भीष्मश्शान्तनवस्तूर्णम् अपयातु महारणात् ॥ ९॥

निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत ।

1. ख-ङ-च-म—इदमर्धं नास्ति
2. ख-च-ङ-म—एतदर्धं नास्ति

अहं पार्थान् हनिष्यामि सहितान् सर्वसोमकैः ॥ १०॥
पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप ॥ ११
पाण्डवेषु दयां नित्यं राजन् भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो [1]जेतुमेतान् महारथान् ॥ १२
अतिमानी रणे भीष्मो नित्यं चापि रणप्रियः ।
स कथं पाण्डवान् युद्धे जेष्यते तात सङ्गतान् ॥ १३
स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति ।
अनुमान्य गुरुं भीष्मं शस्त्रं त्याजय भारत ॥ १४
न्यस्तशस्त्रे ततो भीष्मे निहतान् पश्य पाण्डवान् ।
मयैकेन रणे राजन् ससुहृद्गणबान्धवान् ॥ १५

सञ्जयः—

एवमुक्तस्तु कर्णेन पुत्रो दुर्योधनस्तव ।
अब्रवीद्भ्रातरं तत्र दुश्शासनमिदं वचः ॥ १६

दुर्योधनः—

अनुयानं यथा सर्वं सज्जं भवति सर्वतः ।
[2]दुश्शासन तथा क्षिप्रं सर्वमेवोपपादय ॥ १७

सञ्जयः—

एवमुक्त्वा ततो राजन् कर्णमाह जनेश्वरः ॥ १७॥

1. ख—अयं पादः अनन्तरश्च न स्तः
2. ख—एतदर्धं नास्ति

दुर्योधनः—

अनुमान्य रणे भीष्मम् एषोऽहं द्विपदां वरम् ।
आगमिष्ये पुनः क्षिप्रं त्वत्समीपमरिन्दम ॥ १८॥
ततस्त्वं पुरुषव्याघ्र प्रकरिष्यसि संयुगम् ॥ १९

सञ्जयः—

[1]एवमुक्त्वा ततो राजन् सुतो दुर्योधनस्तव ।
निष्पपात ततस्तूर्णं सानुगस्ससुहृज्जनः ॥ २०
सहितो भ्रातृभिस्सार्थं देवैरिव शतक्रतुः ॥ २०॥

ततस्तं नृपशार्दूलश् शार्दूलसमविक्रमम् ।
आरोपयद्धयं तूर्णं भ्राता दुश्शासनस्तदा ॥ २१॥

अङ्गदी बद्धमुकुटो हस्ताभरणवान् नृपः ।
धार्तराष्ट्रो महाराज विबभौ स पथि व्रजन् ॥ २२॥

तदा पुष्पनिकाशेन तपनीयनिभेन च ।
अनुलिप्तः परार्ध्येन चन्दनेन सुगन्धिना ॥ २३॥

विरजोम्बरसंवीतस् सिंहखेलगतिर्नृपः ।
शुशुभे विमलार्चिष्मान् नभसीव दिवाकरः ॥ २४॥

तं प्रयान्तं नरव्याघ्रं भीष्मस्य शिबिरं प्रति ।
अनुजग्मुर्महेष्वासास् सर्वलोकेषु मानिनम् ॥ २५॥

1. ख-घ-म—इदमर्धं नास्ति

भ्रातरश्च नरव्याघ्रास् त्रिदशा इव वासवम् ॥ २६
हयानन्ये समारुह्य गजानन्ये च भारत ।
रथानन्ये नरश्रेष्ठाः परिवव्रुस्सुतास्तव ॥ २७
पदातयश्च त्वरिता नखरप्रासयोधिनः ।
परिवव्रुर्महेष्वासं धार्तराष्ट्रं महारथम् ॥ २८
आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपतेः ।
प्रादुर्बभूवुः पुत्राश्च शक्रस्येव तदाऽमराः ॥ २९
सम्पूज्यमानः कुरुभिः कौरवाणां महारथः ।
प्रययौ सदनं राजन् गाङ्गेयस्य यशस्विनः ॥ ३०
तमन्वयुर्महाराज सोदरास्सर्वतो रथैः ।
पृष्ठे पुरस्तात् प्रययुर् वामदक्षिणपार्श्वयोः ॥ ३१
[1]परिवार्य महाराज समन्तात् पृथिवीपतिम् ॥ ३१॥
हस्तिहस्तोपमं सौम्यं सर्वशत्रुनिबर्हणम् ।
दक्षिणं दक्षिणः काले उद्यम्यालङ्कृतं भुजम् ॥ ३२॥
स्वीकुर्वन्नञ्जलीर्नृणाम् उद्यतास्सर्वतो दिशम् ॥ ३३
शृण्वन् वै मधुरा वाचो नानादेशनिवासिनाम् ।
संस्तूयमानस्सूतैश्च मागधैश्च महायशाः ॥ ३४
पूजयानश्च तान् सर्वान् जनान् दृष्ट्वाऽवलोकयन् ।

1. ख-च-ङ-म—इदमर्धं नास्ति

[1]एवं स प्रययौ राजा सर्वसैन्यसमावृतः ॥ ३५
प्रदीपैः काञ्चनैस्तत्र गन्धतैलोक्षितैर्जनाः ।
परिवव्रुर्महात्मानं प्रज्वलद्भिस्समन्ततः ॥ ३६

स तैः परिवृतो राजा प्रदीपैः काञ्चनैश्शुभैः ।
शुशुभे चन्द्रमा युक्तो दीप्तैरिव महाग्रहैः ॥ ३७

कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः ।
प्रोत्सारयन्तश्शनकैस् तं जनं सर्वतो दिशम् ॥ ३८

सम्प्राप्य च ततो राजा भीष्मस्य सदनं शुभम् ।
अवतीर्य हयाच्चापि भीष्मं प्राप्य जनेश्वरः ॥ ३९

अभिवाद्य ततो भीष्मं निषण्णः परमासने ।
काञ्चने सर्वतोभद्रे मृद्वास्तरणसंवृते ॥ ४०
उवाच प्राञ्जलिर्भीष्मं बाष्पकण्ठोऽश्रुलोचनः ॥ ४०॥

दुर्योधनः—

त्वामहं समुपाश्रित्य संयुगे शत्रुसूदन ।
उत्सहेयमहं जेतुं सेन्द्रानपि सुरासुरान् ॥ ४१॥

किमु पाण्डुसुतान् वीरान् ससुहृद्गणबान्धवान् ॥ ४२

[2]परिपालय गाङ्गेय रणान्मां ससुहृद्गणम् ।
कृतां प्रतिज्ञां सत्यां वै कर्तुमर्हसि मानद ॥ ४३

1. ख-ब-ङ-म—नास्तीदमर्धम् 2. ब-ङ-म—अर्धद्वयं नास्ति

[1]तस्मादर्हसि गाङ्गेय कृपां कर्तुं मयि प्रभो ।
जहि पाण्डुसुतान् वीरान् महेन्द्र इव दानवान् ॥ ४४

पूर्वमुक्तं महाबाहो निहनिष्यामि सोमकान् ।
पाञ्चालान् पाण्डवैस्सार्धं करूशांश्चैव सर्वशः ॥ ४५

तद्वचस्सत्यमेवास्तु जहि पार्थान् समागतान् ।
सोमकांश्च महेष्वासान् सत्यवाग् भव पार्थिव ॥ ४६

अथवा दययाऽतीव द्वेषाद्वाऽपि मयि प्रभो ।
मन्दभाग्यतया वाऽपि मम रक्षसि पाण्डवान् ॥ ४७

अनुजानीहि कर्णं त्वं योद्धुमाहवशोभिनम् ।
स जेष्यति रणे पार्थान् ससुहृद्गणबान्धवान् ॥ ४८

सञ्जयः—

एतावदुक्त्वा नृपतिः पुत्रो दुर्योधनस्तव ।
नोवाच वचनं किञ्चिद् भीष्मं भीमपराक्रमम् ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये ४९ श्लोकाः ]

---

1. अ-क—नास्तीदमर्धम्

## ॥ त्रिनवतितमोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति अर्जुनपराक्रमप्रशंसनपूर्वकं पाण्डवानामजय्यत्वमभिधाय शिखण्डिवर्जं पाञ्चालादिवधप्रतिज्ञा ॥

सञ्जयः—

वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धः पितामहः ।
नोवाच दुःखोपहतो ह्यप्रियं प्रियमण्वपि ॥ १

ध्यात्वा स सुचिरं कालं दुःखरोषसमन्वितः ।
श्वसन्निव महानागो वितुन्नो वाक्शलाकया ॥ २

उद्वृत्य चक्षुषी रोषान्निर्दहन्निव भारत ।
सदेवासुरगन्धर्वाँल्लोकान् काल इवापरः ॥ ३
अब्रवीत् तव पुत्रं तु सान्त्वपूर्वमिदं वचः ॥ ३॥

भीष्मः—

किं तु दुर्योधनैवं मां वाक्शल्यैरभिविध्यसि ।
यतमानं यथाशक्ति कुर्वाणं च तव प्रियम् ॥ ४॥
जुह्वन्तं समरे प्राणांस् तव वै हितकाम्यया ॥ ५

यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत् ।
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ॥ ६

यदा च त्वां महाबाहो गन्धर्वैर्हृतमोजसा ।

अमोचयत् पाण्डुसुतः पर्याप्तं तन्निदर्शनम् ॥ ७
द्रवमाणेषु शूरेषु सोदरेषु नवाभिभो ।
सूतपुत्रे च राधेये गन्धर्वाञ्जयतेऽर्जुनः ॥ ८
[1-2]यच्च नस्सङ्गतान् सर्वान् विराटनगरे तदा ।
एक एवाजयत् पार्थः पर्याप्तं तन्निदर्शनम् ॥ ९
द्रोणं च युधि सङ्क्रुद्धो मां च निर्जित्य संयुगे ।
कर्णं च त्वां च द्रौणिं च कृपं च सुमहारथम् ॥ १०
वासांसि नस्समादत्त पर्याप्तं तन्निदर्शनम् ॥ १०॥
निवातकवचान् युद्धे वासवेनापि दुर्जयान् ।
जितवान् समरे पार्थः पर्याप्तं तन्निदर्शनम् ॥ ११॥
को हि शक्तो रणे जेतुं पाण्डवं रभसं रणे ॥ १२
यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः ।
वासुदेवो जगत्सृष्टिस्थितिसंहारकारकः ॥ १३
सर्वेषां नो वासुदेवः परमात्मा सनातनः ।
उक्तोऽसि बहुशो राजन् नारदाद्यैर्महर्षिभिः ॥ १४
त्वं तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ॥ १४॥

---

1. अ-क—त्रयोदशार्धानि न सन्ति-तत्स्थाने इमानि चत्वार्यर्धानि वर्तन्ते
तथा गोग्रहणे राजन्नर्जुनः परवीरहा ।
द्रोणं च युधि संरब्धो बाह्लीकं कृपमेव च ।
मां चैव सोमदत्तं च द्रौणिं त्वां कर्णमेव च ।
सर्वांश्च जितवानन्यान् पर्याप्तं तन्निदर्शनम् ॥ [पाठान्तरम्]

2. क—अर्धद्वयं नास्ति

मुमूर्षुर्हि नरस्सर्वान् वृक्षान् पश्यति काञ्चनान् ।
तथा त्वमपि गान्धारे विपरीतानि पश्यसि ॥ १५॥

स्वयं वैरं महत् कृत्वा पाण्डवैस्सह सृञ्जयैः ।
युद्धस्व तानद्य रणे पश्यामः पुरुषो भव । १६॥
अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः ॥ १७

अहं तु सोमकान् सर्वान् पाञ्चालांश्च समागतान् ।
निहनिष्ये नरव्याघ्र वर्जयिष्ये शिखण्डिनम् ॥ १८

तैर्वाऽहं निहतस्सङ्ख्ये गमिष्ये यमसादनम् ।
तान् वा निहत्य सङ्ग्रामे प्रीतिं दास्यामि वै तव ॥ १९

पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि ।
वरदानात् पुमाञ्जातस् सैषा वै स्त्री शिखण्डिनी ॥ २०

तामहं न हनिष्यामि प्राणत्यागेऽपि भारत ।
याऽसौ प्राङ्निर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी ॥ २१

सुसुखं स्वप गान्धारे श्वोऽस्मि कर्ता महारणम् ।
यज्जनाः कथयिष्यन्ति यावत् स्थास्यति मेदिनी ॥ २२

सञ्जयः—

एवमुक्तस्तव सुतो निर्जगाम जनेश्वरः ।
अभिवाद्य गुरुं मूर्ध्ना प्रययौ स्वं निवेशनम् ॥ २३

आगम्य तु ततो राजा विसृज्य स महाजनम् ।

प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः ॥ २४

प्रहृष्टस्सन्निशां तां च गमयामास पार्थिवः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

## ॥ चतुर्नवतितमोऽध्यायः ॥



भीष्मरक्षणे दुर्योधनोद्यमः ॥

सञ्जयः—

प्रभातायां तु शर्वर्यां प्रातरुत्थाय वै नृपः ।
राज्ञश्चाज्ञापयामास यान् प्रधानान् महारथान् ॥ १

[1]सेनायां राजशार्दूला युध्यध्वमिति पाण्डवैः ।
अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ २

दुर्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु ।
मन्यमानस्स तद्राजन् प्रत्यादेशमिवात्मनः ॥ ३

निर्वेदं परमं गत्वा विनिन्द्य परवाच्यताम् ।
दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्जुनं रणे ॥ ४

इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम् ।
दुर्योधनो महाराज दुश्शासनमचोदयत् ॥ ५

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

दुर्योधनः—

दुश्शासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
द्वाविंशतिसहस्राणि सर्वाण्येवाभिचोदय ॥ ६

अयं हि समनुप्राप्तो वर्षपूगाभिचिन्तितः ।
पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः ॥ ७

[1]तत्र कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम् ।
स नो गुप्तस्सहायस्स्याद्धन्यात् पार्थांश्च संयुगे ॥ ८

अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम् ।
स्त्रीपूर्वको ह्यसौ जातस् तस्माद्वर्ज्यो मया रणे ॥ ९

लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया ।
राज्यं चेदं महाबाहो स्त्रियश्च त्यक्तवान् पुरा ॥ १०

न चैवाहं स्त्रियं जातु स्त्रीपूर्वं वा कदाचन ।
हन्यां युद्धे नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ११

अयं स्त्रीपूर्वको राजन् छिखण्डी यदि ते श्रुतः ।
उद्योगे कथितं गुह्यं यथा जाता शिखण्डिनी ॥ १२

कन्या भूत्वा पुमाञ्जातस् स च योत्स्यति भारत ।
तस्याहं प्रमुखे बाणान् न मुञ्चेयं कथञ्चन ॥ १३

युद्धे तु क्षत्रियांस्तात पाण्डवानां जयैषिणः ।
सर्वानन्यान् हनिष्यामि सम्प्राप्तान् बाणगोचरान् ॥ १४

1. अ-क—नास्तीदमर्धम्

एवं मां भरतश्रेष्ठो गाङ्गेयः प्राह शास्त्रवित् ।
तत्र सर्वात्मना कार्यं गाङ्गेयस्यानुपालनम् ॥ १५

रक्ष्यमाणस्तु काकोऽपि हन्यात् सिंहं महावने ।
मा सिंहमिव काकेन हतं भीष्मं शिखण्डिना ॥ १६
पश्येम पुरुषव्याघ्र सर्वा गुप्तिर्विधीयताम् ॥ १६॥

मातुलश्शकुनिश्शल्यः कृपो द्रोणो विविंशतिः ।
यत्ता रक्षन्तु गाङ्गेयं तस्मिन् गुप्ते जयो ध्रुवः ॥ १७॥

सञ्जयः—

एतच्छ्रुत्वा तु राजानो दुर्योधनवचश्शुभम् ।
सर्वतो रथवंशेन गाङ्गेयं पर्यवारयत् ॥ १८॥

पुत्राश्च तव गाङ्गेयं परिवार्य ययुर्मुदा ।
कम्पयन्तोऽथ मात्स्यांश्च क्षोभयन्तश्च पाण्डवान् ॥ १९॥

ते रथैश्च सुसंयत्तैर् दन्तिभिश्च मदोत्कटैः ।
परिवार्य हयैर्भीष्मं दंशितास्समरे स्थिताः ॥ २०॥

यथा देवासुरे युद्धे त्रिदशा वज्रधारिणम् ।
सर्वे ते स्म व्यतिष्ठन्त रक्षन्तस्तं महारथम् ॥ २१॥

ततो दुर्योधनो राजा पुनर्भ्रातरमब्रवीत् ॥ २२

दुर्योधनः—

सव्यं चक्रं युधामन्युर् उत्तमौजाश्च दक्षिणम् ।

गोप्तारावर्जुनस्योभावर्जुनोऽपि शिखण्डिनः ॥ २३

रक्ष्यमाणस्स पार्थेन सहास्माभिर्विवर्जितः ।

यथा भीष्मं न नो हन्याद् दुश्शासन तथा कुरु ॥ २४

सञ्जयः—

भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुश्शासनस्तव ।

भीष्मं प्रमुखतः कृत्वा प्रययौ सेनया सह ॥ २५

भीष्मं तु रथवंशेन दृष्ट्वा समभिसंवृतम् ।

अर्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह ॥ २६

शिखण्डिनं नरव्याघ्र भीष्मस्य प्रमुखेऽनघ ।

स्थापयस्वाद्य राजेन्द्र तस्य गोप्ताऽहमच्युत ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

## ॥ पञ्चनवतितमोऽध्यायः ॥



कुरुपाण्डवसेनयोर्व्यूहरचनापूर्वकं परस्पराभिगमनम् ॥



सञ्जयः—

ततश्शान्तनवो भीष्मो निर्ययौ सेनया सह ।

अव्यूहत महाव्यूहं सर्वतोभद्रमाहवे ॥ १

कृपश्च कृतवर्मा च शैब्यश्चैव महारथः ।
शकुनिस्सैन्धवश्चैव काम्भोजश्च सुदक्षिणः ॥ २
भीष्मेण सहितास्सर्वे पुत्रश्च तव भारत ।
अग्रतस्सर्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः ॥ ३
द्रोणो भूरिश्रवाश्शल्यो भगदत्तश्च मारिष ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ॥ ४
अश्वत्थामा सोमदत्तस् तथाऽऽवन्त्यौ महारथौ ।
महत्या सेनया गुप्ता वामपार्श्वमपालयन् ॥ ५
दुर्योधनो महाराज त्रिगर्तैस्सर्वतो वृतः ।
व्यूहमध्ये स्थितो राजा पाण्डवान् प्रति भारत ॥ ६
अलम्बुसो रथश्रेष्ठश् श्रुतायुश्च महारथः ।
पृष्ठतस्सर्वसैन्यानां स्थितौ व्यूहस्य दंशितौ ॥ ७
एवमेतं महाव्यूहं कृत्वा भारत तावकाः ।
सन्नद्धास्समपद्यन्त प्रतपन्त इवाग्नयः ॥ ८
तथा युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलस्सहदेवश्च द्रौपदेयाश्च सर्वशः ॥ ९
अग्रतस्सर्वसैन्यानां स्थिता व्यूहस्य दंशिताः ॥ ९॥
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ।
स्थितास्सैन्येन महता परानीकविनाशनाः ॥ १०॥

शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः ।
चेकितानो महाबाहुः कुन्तिभोजश्च वीर्यवान् ॥ ११॥
स्थिता रणाय महते महत्या सेनया वृताः ॥ १२
अभिमन्युर्महेष्वासो द्रुपदश्च महारथः ।
केकया भ्रातरः पञ्च स्थिता युद्धाय दंशिताः ॥ १३
एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयाः ।
पाण्डवास्समरे शूरास् स्थिता युद्धाय मारिष ॥ १४
तावकास्तु रणे यत्तास् सहसैन्या नराधिपाः ।
अभ्युद्ययू रणे पार्थान् भीष्मं कृत्वाऽग्रतो नृप ॥ १५
तथैव पाण्डवा राजन् भीमसेनपुरोगमाः ।
भीष्मं योद्धुमभिययुस् सङ्ग्रामे विजिगीषवः ॥ १६
क्ष्वेलान् किलकिलाशब्दान् क्रकरान् गोविषाणकान् ।
भेरीमृदङ्गपटहान् नादयन्तश्च वारिजान् ॥ १७
पाण्डवा अभ्यधावन्त नदन्तो भैरवान् रवान् ॥ १७॥
भेरीमृदङ्गशङ्खानां दुन्दुभीनां च निस्स्वनैः ।
उत्कृष्टसिंहनादैश्च वल्गितैश्च पृथग्विधैः ॥ १८॥
[1]अस्माकं प्रतिशब्दैश्च तदासीत् तुमुलं महत् ॥ १९

---

1. ख-ग-घ-ङ-म—वयं प्रतिनदन्तस्तान् प्रत्यगृह्णीम सत्वराः ।
सहसैवाभिसङ्क्रुद्धास् तदासीत् तुमुलं महत् ॥
[पाठान्तरम्]

सहसा ह्यभिसङ्क्रुद्धा नदन्तो भैरवस्वनान् ।
ततोऽन्योन्यं प्रधावन्तस् सम्प्रहारं प्रचक्रिरे ॥ २०

ततश्शब्देन महता प्रचकम्पे वसुन्धरा ।
पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः ॥ २१

सप्रभश्चोदितस्सूर्यो निष्प्रभस्समपद्यत ।
ववुश्च तुमुला वाताश् शंसन्तस्सुमहद्भयम् ॥ २२

घोराश्च घोरनिर्ह्रादाश् शिवास्तत्र ववाशिरे ।
वेदयन्त्यो महाराज महद्वैशसमागतम् ॥ २३

दिशः प्रज्वलिता राजन् पांसुवर्षं पपात च ।
रुधिरेण समुन्मिश्रम् अस्थिवर्षं तथैव च ॥ २४

रुदतां वाहनानां च नेत्रेभ्यः प्रापतज्जलम् ।
प्रसुस्रुवुश्शकृन्मूत्रं प्रध्यायन्तो विशां पते ॥ २५

अन्तर्हिता महानादाश् श्रूयन्ते भरतर्षभ ।
रक्षसां पुरुषादानां नदतां भैरवान् रवान् ॥ २६

सम्पतन्तस्स्म दृश्यन्ते गोमायुबकवायसाः ।
श्वानश्च विविधैर्नादैर् भषन्तस्तत्र भारत ॥ २७

ज्वलिताश्च महोल्का वै समाहत्य दिवाकरम् ।
निपेतुस्सहसा भूमौ वेदयाना महद्भयम् ॥ २८

महान्त्यनीकानि महासमुच्छ्रये
समागमे पाण्डवधार्तराष्ट्रयोः ।
चकम्पिरे शङ्खमृदङ्गनिस्स्वनैः
प्रकम्पितानीव वनानि वायुना ॥ २९

नरेन्द्रनागाश्वसमाकुलानां
समाकुलानामशिवे मुहूर्ते ।
बभूव घोषस्तुमुलश्चमूनां
वातोद्धतानामिव सागराणाम् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

## ॥ षण्णवतितमोऽध्यायः ॥

अलम्बुसस्य द्रौपदेयैः सह युद्धमभिमन्युना समागमश्च ॥

---

सञ्जयः—

अभिमन्युर्महाराज पिशङ्गैस्तुरगोत्तमैः ।
अभिदुद्राव वेगेन दुर्योधनबलं महत् ॥ १

विकिरन् शरवर्षाणि वारिधारा इवाम्बुदः ।
न शेकुस्समरे क्रुद्धं सौभद्रमपराजितम् ॥ २

[1]क्रोडरूपं हरिमिव प्रविशन्तं महार्णवम् ।
सेनासागरमक्षोभ्यं प्रविशन्तं तथाऽऽर्जुनिम् ॥ २
न निवारयितुं शक्तास् त्वदीयाः कुरुपुङ्गव ॥ ३॥
तेन मुक्ता रणे राजञ् शराश्शत्रुनिबर्हणाः ।
नयन्ति क्षत्रियाञ् शूरान् प्रेतराजनिवेशनम् ॥ ४॥
यमदण्डोपमान् घोराञ् ज्वलिताशीविषोपमान् ।
सौभद्रस्समरे क्रुद्धः प्रेषयामास सायकान् ॥ ५॥
रथिनं स रथात् तूर्णं हयपृष्ठाच्च सादिनम् ।
गजारोहं च सगजं पातयामास फाल्गुनिः ॥ ६॥
तस्य तत् कुर्वतः कर्म महत् सङ्ख्येऽद्भुतं नृपाः ।
पूजयाञ्चक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिम् ॥ ७॥
तान्यनीकानि सौभद्रो द्रावयन् बह्वशोभत ।
तूलराशिमिवाधूय मारुतस्सर्वतो दिशम् ॥ ८॥
तेन विद्राव्यमाणानि तव सैन्यानि भारत ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ ९॥
विद्राव्य सर्वसैन्यानि तावकानि नरोत्तम ।
अभिमन्युस्स्थितो राजन् विधूमोऽग्निरिव ज्वलन् ॥ १०॥

---

1. ख-ग-घ-ङ-म—शस्त्रौघिणं गाहमानं सेनासागरमक्षयम् ।
निवारयितुमप्याजौ त्वदीयाः कुरुपुङ्गवाः ॥
[पाठान्तरम्]

न चैनं तावकः कश्चित् सहते रिपुघातिनम् ।
प्रदीप्तं ज्वलनं यद्वत् पतङ्गः कालचोदितः ॥ ११॥

प्रहरन् सर्वशत्रुभ्यः पाण्डवानां महारथः ।
अदृश्यत महेष्वासस् सवज्र इव वासवः ॥ १२॥

हेमपृष्ठं धनुश्चास्य ददृशे चरतो दिशः ।
तोयदेषु महाराज यथा शक्रधनुर्महत् ॥ १३॥

शराश्च निशिताः पीता निश्चरन्ति स्म संयुगे ।
वनात् फुल्लद्रुमाद्राजन् भ्रमराणामिव व्रजाः ॥ १४॥

तथैव चरतस्तस्य मण्डलानि महात्मनः ।
रथेन काञ्चनाङ्गेन ददृशुर्नान्तरं जनाः ॥ १५॥

मोहयित्वा कृपं द्रोणं द्रौणिं च सबृहद्बलम् ।
सैन्धवं च महेष्वासम् [1]अन्यांश्चैव महीपतीन् ॥ १६॥

विकिरन् निशितैर्बाणैर् व्यचरल्लघु सुष्ठु च ॥ १७

मण्डलीकृतमेवास्य धनुः पश्याम भारत ।
सूर्यमण्डलसङ्काशं प्रतपत् तव वाहिनीम् ॥ १८

तं दृष्ट्वा क्षत्रियाश्शूराः प्रतपन्तं शरार्चिषा ।
द्विफल्गुनमिमं लोकं मेनिरे तस्य कर्मभिः ॥ १९

तेनार्दिता महाराज भारती सा महाचमूः ।

1. ख-घ-ङ-म—अयं पादोऽनन्तरश्च न स्तः

बभ्राम तत्र तत्रैव योषिन्मदवशादिव ॥ २०

द्रावयित्वा ततस्सैन्यं कम्पयित्वा महारथान् ।
नन्दयानस्स सुहृदो बलं जित्वेव वासवः ॥ २१

तेन विद्राव्यमाणानि तव सैन्यानि संयुगे ।
चक्रुरार्तस्वरं घोरं पर्जन्यनिनदोपमम् ॥ २२

तं श्रुत्वा निनदं घोरं तस्य सैन्यस्य भारत ।
मारुतोद्धूतवेगस्य समुद्रस्येव पर्वणि ॥ २३

दुर्योधनस्तदा राजन् आर्श्यश्रृङ्गिमभाषत । २३॥

दुर्योधनः—

एष कार्ष्णिर्महाबाहो द्वितीय इव फल्गुनः ।
चमूं द्रावयते क्रोधाद् वृत्रो देवचमूमिव ॥ २४॥

तस्य नान्यं प्रपश्यामि संयुगे भेषजं महत् ।
ऋते त्वां राक्षसश्रेष्ठ सर्वविद्यासु पारगम् ॥ २५॥

त्वं गत्वा त्वरितं वीरं जहि सौभद्रमाहवे ।
वयं पार्थान् हनिष्यामो भीष्मद्रोणपुरस्सराः ॥ २६॥

सञ्जयः—

एवमुक्तस्स बलवान् राक्षसेन्द्रः प्रतापवान् ।
प्रययौ समरे तूर्णं तव पुत्रस्य शासनात् ॥ २७॥

नर्दमानो महानादं प्रावृषीव बलाहकः ॥ २८

तस्य शब्देन महता पाण्डवानां महद्बलम् ।
प्राचलत् सर्वतो राजन् पूर्यमाण इवार्णवः ॥ २९

बह्वश्च महाराज तस्य नादेन भीषिताः ।
प्रियान् प्राणान् परित्यज्य निपेतुर्धरणीतले ॥ ३०

कार्ष्णिश्चापि समायुक्तः प्रगृहीतशरासनः ।
नृत्यन्निव रथोपस्थे तद्रक्षस्समुपाद्रवत् ॥ ३१

ततस्स राक्षसः क्रुद्धस् सम्प्राप्यैवार्जुनिं रणे ।
नातिदूरे स्थिते तस्मिन् द्रावयामास वै चमूम् ॥ ३२

[1]सा वध्यमाना समरे पाण्डवानां महाचमूः ।
प्रत्युद्ययौ रणे रक्षो देवसेना यथा बलिम् ॥ ३३

विमर्दस्सुमहानासीत् तस्य सैन्यस्य मारिष ।
रक्षसा घोररूपेण वध्यमानस्य संयुगे ॥ ३४

ततश्शरसहस्रैस्तां पाण्डवानां महाचमूम् ।
व्यद्रावयद्रणे रक्षो दर्शयन् वै पराक्रमम् ॥ ३५

सा वध्यमाना समरे पाण्डवानां महाचमूः ।
रक्षसा घोररूपेण प्रदुद्राव रणे भयात् ॥ ३६

तां प्रमृद्य ततस्सेनां पद्मिनीं वारणो यथा ।
ततोऽभिदुद्राव रणे द्रौपदेयान् कुमारकान् ॥ ३७

---

1. अ-क—अर्धषट्कं नास्ति

ते तु क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः ।
राक्षसं दुद्रुवुस्सङ्ख्ये ग्रहाः पञ्च यथा रविम् ॥ ३८
वीर्यवद्भिस्ततस्तैस्तु पीडितो राक्षसोत्तमः ।
यथा युगक्षये घोरैश् चन्द्रमाः पञ्चभिर्ग्रहैः ॥ ३९
प्रतिविन्ध्यस्ततो रक्षो बिभेद दशभिश्शरैः ।
सर्वपारशवैस्तूर्णम् अकुण्ठाग्रैर्महाबलः ॥ ४०
स तैर्भिन्नतनुत्राणश् शुशुभे राक्षसाधिपः ।
[1]मरीचिभिरिवार्कस्य संस्यूतो जलदो महान् ॥ ४१
विषक्तैस्सशरैश्चापि तपनीयपरिच्छदैः ।
आश्यर्यश्शृङ्गिर्बभौ राजन् दीप्तश्शृङ्ग इवाचलः ॥ ४२
ततस्ते भ्रातरः पञ्च राक्षसेन्द्रं महाहवे ।
विव्यधुर्निशितैर्बाणैस् तपनीयविभूषितैः ॥ ४३
स निर्भिन्नश्शरैर्घोरैर् भुजगैः कोपितैरिव ।
अलम्बुसो भृशं राजन् नागेन्द्र इव चुक्रुधे ॥ ४४
निर्भिन्नस्तु शरैर्घोरैर् दीप्यमानस्समन्ततः ।
अलम्बुसो भृशं भाति उल्काभिरिव कुञ्जरः ॥ ४५
सोऽतिविद्धो महाराज मुहूर्तमथ मारिष ।
प्रविवेश तमो दीर्घं पीडितस्तैर्महारथैः ॥ ४६

1. ख—इदमादि अर्धषट्कं नास्ति

प्रतिलभ्य ततस्संज्ञां क्रोधेन द्विगुणीकृतः ।
चिच्छेद सायकैस्तेषां ध्वजांश्चैव धनूंषि च ॥ ४७

एकैकं च त्रिभिर्बाणैर् आजघान स्मयन्निव ।
अलम्बुसो रथोपस्थे नृत्यन्निव महारथः ॥ ४८

त्वरमाणो भृशं क्रुद्धो हयांस्तेषां महात्मनाम् ।
जघान राक्षसः क्रुद्धस् सारथींश्च महाबलः ॥ ४९

बिभेद च सुसङ्क्रुद्धः पुनश्चैतान् सुसंशितैः ।
शरैर्बहुविधाकारैश् शतशोऽथ सहस्रशः ॥ ५०

विरथांश्च महेष्वासान् कृत्वा तत्र स राक्षसः ।
अभिदुद्राव वेगेन हन्तुकामो निशाचरः ॥ ५१

तानर्दितान् रणे तेन राक्षसेन दुरात्मना ।
दृष्ट्वाऽऽर्जुनिस्ततस्सङ्ख्ये राक्षसं समुपाद्रवत् ॥ ५२

तयोस्समभवद्युद्धं वृत्रवासवयोरिव ।
ददृशुः पाण्डवास्सर्वे पार्थिवाश्च महारथाः ॥ ५३

तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परम् ।
उद्वृत्य चक्षुषी राजन् क्रोधात् प्रस्फुरिताधरौ ॥ ५४

महाबलौ महावीर्यौ क्रोधसंरक्तलोचनौ ।
परस्परमवेक्षेतां कालानलसमौ युधि ॥ ५५

आशीविषाविव क्रुद्धौ नेत्राभ्यामितरेतरम् ।

तयोस्समागमो घोरो बभूवात्यन्तदारुणः ॥ ५६

यथा देवासुरे युद्धे शक्रशम्बरयोः पुरा ॥ ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[अस्मिन्नध्याये ५६॥ श्लोकाः]

---

## ॥ सप्तनवतितमोऽध्यायः ॥

अभिमन्युनाऽलम्बुसस्य पराजयः ॥

---

धृतराष्ट्रः—

आर्जुनिं समरे क्रुद्धं विनिघ्नन्तं महारथान् ।
अलम्बुसः कथं युद्धे प्रत्ययुध्यत सञ्जय ॥ १

आर्श्यशृङ्गिं कथं चैव सौभद्रः परवीरहा ॥ १॥

तन्ममाचक्ष्व तत्त्वेन यथावृत्तं हि संयुगे ॥ २

धनञ्जयश्च किं चक्रे मम सैन्येषु सञ्जय ।
भीमो वा बलिनां श्रेष्ठो राक्षसो वा घटोत्कचः ॥ ३

नकुलस्सहदेवो वा सात्यकिर्वा महारथः ॥ ३॥

एतदाचक्ष्व मे सर्वं कुशलो ह्यसि सञ्जय ॥ ४

सञ्जयः—

हन्त ते सम्प्रवक्ष्यामि सङ्ग्रामं रोमहर्षणम् ।
यथाऽभूद्राक्षसेन्द्रस्य सौभद्रस्य च भारत ॥ ५
अर्जुनश्च यथा सङ्ख्ये भीमसेनश्च पाण्डवः ।
नकुलस्सहदेवश्च रणे चक्रुः पराक्रमम् ॥ ६
तथैव तावकास्सर्वे भीष्मद्रोणपुरोगमाः ।
अद्भुतानि विचित्राणि चक्रुः कर्माण्यभीतवत् ॥ ७
अलम्बुसस्तु समरे अभिमन्युं महारथम् ।
विनद्य सुमहानादं तर्जयित्वा मुहुर्मुहुः ॥ ८
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् ॥ ८॥
सौभद्रोऽपि रणे राजन् सिंहवद्विनदन् मुहुः ।
अलम्बुसं महेष्वासं पितुरत्यन्तवैरिणम् ॥ ९॥
ततस्समीयतुस्सङ्ख्ये त्वरितौ नरराक्षसौ ।
रथाभ्यां रथिनां श्रेष्ठौ यथा वै देवदानवौ ॥ १०॥
मायावी राक्षसश्रेष्ठो दिव्यास्त्रश्चापि फाल्गुनिः ॥ ११
ततः कार्ष्णिर्महाराज निशितैस्सायकैस्त्रिभिः ।
आर्श्यशृङ्गिं रणे विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ १२
अलम्बुसोऽपि समरे कार्ष्णिं नवभिराशुगैः ।
हृदि विव्याध वेगेन तोत्रैरिव महाद्विपम् ॥ १३
ततश्शरसहस्रेण क्षिप्रकारी निशाचरः ।

अर्जुनस्य सुतं सङ्ख्ये पीडयामास भारत ॥ १४

अभिमन्युस्ततः क्रुद्धो नवभिर्नतपर्वभिः ।
विव्याध निशितैर्बाणै राक्षसस्य महोरसि ॥ १५

ते तस्य विविशुः क्षिप्रं कायं निर्भिद्य मर्मणि ॥ १५॥

स तैर्विभिन्नसर्वाङ्गश् शुशुभे राक्षसोत्तमः ।
पुष्पितैः किंशुकै राजन् सङ्कीर्ण इव पर्वतः ॥ १६॥

स सन्दधानश्च शरान् हेमपुङ्खान् महाबलः ।
विबभौ राक्षसश्रेष्ठस् सज्वाल इव पर्वतः ॥ १७॥

ततः क्रुद्धो महाराज आर्श्यश्रृङ्गिरमर्षणः ।
महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः ॥ १८॥

तेन ते निशिता मुक्ता यमदण्डोपमाश्शराः ।
अभिमन्युं विनिर्भिद्य प्राविशन्त महीतलम् ॥ १९॥

तथैवार्जुनिना मुक्ताश् शराः काञ्चनभूषणाः ।
अलम्बुसं विनिर्भिद्य प्राविशन्नवनीतलम् ॥ २०॥

[1]सौभद्रस्तु रणे रक्षश् शरैस्सन्नतपर्वभिः ।

---

1. अ-क—ततः पुनस्तु सौभद्रः सोऽश्वश्रृङ्गिं महाबलः ।
आसाद्याभिमुखे स्थित्वा शरैस्सन्नतपर्वभिः ॥
चकार विमुखं रक्षो यमं शक्र इवाहवे ।
अश्वश्रृङ्गिस्ततो राजन् वध्यमानो रणेऽरिणा ॥
प्रादुश्चक्रे महामायां तामसीं परितापिनीम् ।
ततस्तु तमसा सर्वं वृतमासीज्जगत्तदा ॥
अभिमन्युं प्रपश्यामि तमसा संवृतं तदा । [पाठान्तरम्]

चक्रे विमुखमासाद्य बलं शक्र इवाहवे ॥ २१॥
विमुखं च ततो रक्षो वध्यमानं रणेऽरिणा ।
प्रादुश्चक्रे महामायां तामसीमरिघातिनीम् ॥ २२॥
ततस्तु तमसा पूर्वं वृतमासीन्महीपते ।
नाभिमन्युं प्रपश्यामस् तमसा संवृतं तदा ॥ २३॥
अभिमन्युश्च तद्दृष्ट्वा घोररूपं महत्तमः ।
प्रादुश्चक्रेऽस्त्रमत्युग्रं भास्करं कुरुनन्दनः ॥ २४॥
ततः प्रकाशमभवज् जगत् सर्वं महीपते ।
तां चाभिजघ्निवान् मायां राक्षसस्य दुरात्मनः ॥ २५॥
सङ्क्रुद्धश्च महावीर्यो राक्षसेन्द्रं नरोत्तमः ।
छादयामास समरे शरैस्सन्नतपर्वभिः ॥ २६॥
ततो बहुविधा मायाः प्रयुक्तास्तेन रक्षसा ।
सर्वास्त्रविदमेयात्मा वारयामास फाल्गुनिः ॥ २७॥
[1]हतमायं ततो रक्षो वध्यमानं च सायकैः ।
रथं तत्रैव सन्त्यज्य प्राद्रवन्महतो भयात् ॥ २८॥
तस्मिन् विनिर्जिते तूर्णं कूटयोधिनि राक्षसे ।
आर्जुनिस्समरे सैन्यं तावकं संममर्द ह ॥ २९॥
मदान्धो वन्यनागेन्द्रस् सपद्मां पद्मिनीमिव ॥ ३०

1. अ-क—अर्धपञ्चकं नास्ति

ततश्शान्तनवो भीष्मो दृष्ट्वा सैन्यमभिद्रुतम् ।
महता रथवंशेन सौभद्रं पर्यवारयत् ॥ ३१

कोष्ठीकृत्य महावीरं धार्तराष्ट्रा महाबलाः ।
एकं तु बहवो युद्धे ततक्षुस्सायकैर्भृशम् ॥ ३२

स तेषां रथिनां वीरः पितृतुल्यपराक्रमः ।
सदृशो वासुदेवस्य विक्रमेण बलेन च ॥ ३३

उभयोस्सदृशं कर्म मातुलस्य पितुस्तथा ।
रणे बहुविधं चक्रे सर्वशस्त्रभृतां वरः ॥ ३४

ततो धनञ्जयो राजन् विनिघ्नंस्तव सैनिकान् ।
आससाद रणे भीष्मं पुत्रप्रेप्सुरमर्षणः ॥ ३५

तथैव समरे राजन् पिता देवव्रतस्तव ।
आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ॥ ३६

ततस्सरथनागाश्वाः पुत्रास्तव विशां पते ।
परिवव्रू रणे भीष्मं जुगुपुश्च समन्ततः ॥ ३७

तथैव पाण्डवा राजन् परिवार्य धनञ्जयम् ।
रणाय महते युक्ता दंशिता भरतर्षभ ॥ ३८

शारद्वतस्ततो राजन् भीष्मस्य प्रमुखे स्थितम् ।
अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ३९

प्रत्युद्गम्याथ विव्याध सात्यकिश्च शरैः कृपम् ।

[1]पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ॥ ४०
गौतमोऽपि त्वरायुक्तो माधवं निशितैश्शरैः ।
हृदि विव्याध सङ्क्रुद्धः कङ्कपत्रपरिच्छदैः ॥ ४१
शैनेयोऽपि ततः क्रुद्धो भृशं विद्धो महारथः ।
गौतमान्तकरं तूर्णं समाधत्त शिलीमुखम् ॥ ४२
तमापतन्तं वेगेन शक्राशनिसमद्युतिम् ।
द्विधा चिच्छेद सङ्क्रुद्धो द्रौणिः परमकोपनः ॥ ४३
समुत्सृज्य तु शैनेयो गौतमं रथिनां वरम् ।
अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ॥ ४४
तस्य द्रोणसुतश्चापं द्विधा चिच्छेद भारत ।
अथैनं छिन्नधन्वानं ताडयामास सायकैः ॥ ४५
सोऽन्यत् कार्मुकमादाय शत्रुघ्नं भारसाधनम् ।
द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ॥ ४६
स विद्धो व्यथितश्चैव मुहूर्तं कश्मलायुतः ।
निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः ॥ ४७
प्रतिलभ्य ततस्संज्ञां द्रोणपुत्रः प्रतापवान् ।
वार्ष्णेयं समभिक्रुद्धो नाराचेन समर्पयत् ॥ ४८
शैनेयं स तु निर्भिद्य प्राविशद्धरणीतलम् ।

1. अ-क—नास्तीदमर्धम्

वसन्तकाले द्युतिमान् बिलं सर्पशिशुर्यथा ॥ ४९

ततोऽपरेण भल्लेन माधवस्य ध्वजोत्तमम् ।
चिच्छेद समरे द्रौणिस् सिंहनादं ननाद च ॥ ५०

पुनश्चैनं शरैर्घोरैश् [1]छादयामास भारत ।
[2]निदाघान्ते महाराज यथा मेघो दिवाकरम् ॥ ५१

सात्यकोऽपि महाराज शरजालं निहत्य तत् ।
द्रौणिमभ्यपतत् तूर्णं शरजालैरनेकधा ॥ ५२
तापयामास च द्रौणिं सिंहनादं ननाद च ॥ ५२॥

[3]पुनश्चैव शरैर्घोरैश् शैनेयः परवीरहा ।
[4]छादयामास वै द्रौणिं महामेघ इवाचलम् ॥ ५३॥

द्रौणिस्तद्बाणजालं तु छित्त्वा कोपसमन्वितः ।
[5]विमुक्तश्शरजालेन मेघमुक्तो यथा शशी ॥ ५४॥

स शराणां सहस्रेण पुनरेनं समुद्यतम् ।
सात्यकिश्छादयामास ननाद च महाबलः ॥ ५५॥

दृष्ट्वा पुत्रं तदा ग्रस्तं राहुणेव निशाकरम् ।

---

1. ख-ग-घ-ङ-म—शैनेयः परवीरहा
2. ख—इदमादि अर्धचतुष्टयं नास्ति
3. ख—इदमर्धं नास्ति
4. ख-घ-म—इदमर्धद्वयं नास्ति
5. घ-ङ-म—विमुक्तो मेघजालेन यथैव तपनस्तथा । [पाठान्तरम्]

अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ॥ ५६॥

विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे ।
परीप्सन् स्वसुतं राजन् वार्ष्णेयेनाभिपीडितम् ॥ ५७॥

सात्यकिस्तु रणे हित्वा द्रोणपुत्रं महारथम् ।
द्रोणं विव्याध सप्तत्या सर्वपारशवैश्शरैः ॥ ५८॥

तदन्तरममेयात्मा कौन्तेयश्श्वेतवाहनः ।
अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ॥ ५९॥

ततो द्रोणश्च पार्थश्च समेयातां महामृधे ।
यथा बुधश्च शुक्रश्च महाराज नभस्थले ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[ अस्मिन्नध्याये ६०॥ श्लोकाः ]

---

## ॥ अष्टनवतितमोऽध्यायः ॥

द्रोणार्जुनयुद्धं भीमसेनपराक्रमश्च ॥

---

धृतराष्ट्रः—

कथं द्रोणो महेष्वासः पाण्डवश्च धनञ्जयः ।
समेयातां रणे वीरौ तन्ममाचक्ष्व सञ्जय ॥ १

[1]प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः ।
आचार्यश्च रणे नित्यं प्रियः पार्थस्य सञ्जय ॥ २

तावुभौ रथिनौ सङ्ख्ये दृप्तौ सिंहाविवोत्कटौ ।
कथं समीयतुर्युद्धे भारद्वाजधनञ्जयौ ॥ ३

सञ्जयः—

[2]तं द्रोणस्समरे पार्थं जानीते प्रियमात्मनः ।
क्षत्रधर्मं पुरस्कृत्य [3]द्रोणोऽयुध्यत पाण्डवम् ॥ ४

[4]तथैव पाण्डवो द्रोणं वेत्त्येव प्रियमात्मनः ।
क्षत्रधर्मरतो नित्यं क्षत्रधर्मेण युध्यत ॥ ५

न क्षत्रिया रणे राजन् वर्जयन्ति परस्परम् ।
निर्मर्यादं हि युध्यन्ते पितृभिर्भ्रातृभिस्सह ॥ ६

रणे भारत पार्थेन द्रोणो विद्धस्त्रिशतैश्शरैः ।
नाचिन्तयच्च तान् बाणान् पार्थबाणासनच्युतान् ॥ ७

[5]शरवृष्ट्या पुनः पार्थं छादयामास संयुगे ।

---

1. अ-क-अर्धचतुष्टयं नास्ति
2. ख-ग-घ-ङ-म—न द्रोण
3. ख-ग-घ-ङ-म—पार्थो वा गुरुमाहवे
4. ख-घ-ङ-म—इदमर्धद्वयं नास्ति
5. अ-क—छाद्यमानश्शरैश्चापि तव पुत्रेण भारत ।
प्रजज्वाल रणे द्रोणश् शरैस्सन्नतपर्वभिः ॥
तापयामास राजेन्द्र न चिरादिव भारत ।　[अधिकः पाठः]

स वै जज्वाल रोषेण गगनेऽग्निरिवोत्थितः ॥ ८

ततोऽर्जुनो रणे द्रोणं शरैस्सन्नतपर्वभिः ।
वारयामास राजेन्द्र नचिरादेव भारत ॥ ९

ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
द्रोणस्य समरे राजन् पार्ष्णिग्राहककारणात् ॥ १०

त्रिगर्तराजस्सङ्क्रुद्धो भृशमायम्य कार्मुकम् ।
छादयामास समरे पार्थं बाणैरयोमुखैः ॥ ११

ताभ्यां मुक्ताश्शरा राजन्नन्तरिक्षे विरेजिरे ।
हंसा इव महाराज [1]शरत्काले नभस्थले ॥ १२

ते शराः प्राप्य कौन्तेयं समन्ताद्विविशुः प्रभो ।
फलभारानतं यद्वत् स्वादुवृक्षं विहङ्गमाः ॥ १३

अर्जुनस्तु रणे राजन् विनद्य रथिनां वरः ।
त्रिगर्तराजं समरे सपुत्रं विव्यधे शरैः ॥ १४

ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
पार्थमेवाभ्यवर्तन्त मरणे कृतनिश्चयाः ॥ १५

मुमुचुश्शरवृष्टिं च पाण्डवस्य रथं प्रति ॥ १५॥

शरवृष्टिं ततस्तां तु शरवर्षेण पाण्डवः ।
प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाचलः ॥ १६॥

---

1. ब—इतोऽर्धद्वयं नास्ति

तत्राद्भुतमपश्याम बीभत्सोर्हस्तलाघवम् ॥ १७
विमुक्तां बहुभिश्शूरैश् शरवृष्टिं दुरासदाम् ।
यदेको वारयामास मारुतोऽभ्रगणानिव ॥ १८
कर्मणा तेन पार्थस्य तुतुषुर्देवदानवाः ॥ १८॥
अथ क्रुद्धो रणे पार्थस् त्रिगर्तान् प्रति भारत ।
मुमोचास्त्रं महाराज वायव्यं पृतनामुखे ॥ १९॥
प्रादुरासीत् ततो वायुः क्षोभयाणो नभस्स्थलम् ।
पातयन् वै तरुगणान् विनिघ्नंश्चैव सैनिकान् ॥ २०॥
ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणम् ।
शैलमन्यं महाराज घोरमस्त्रं मुमोच ह ॥ २१॥
द्रोणेन युधि निर्मुक्ते तस्मिन्नस्त्रे महामृधे ।
प्रशशाम ततो वायुः प्रसन्नाश्च दिशोऽभवन् ॥ २२॥
ततः पाण्डुसुतो वीरस् त्रिगर्तस्य रथव्रजान् ।
निरुत्साहान् रणे चक्रे विमुखान् निष्पराक्रमान् ॥ २३॥
ततो दुर्योधनो राजा कृपश्च रथिनां वरः ।
अश्वत्थामा तथा शल्यः काम्भोजश्च सुदक्षिणः ॥ २४॥
विन्दानुविन्दावावन्त्यौ बाह्लिकस्सह बाह्लिकैः ।
महता रथवंशेन पार्थस्यावारयन् दिशः ॥ २५॥
तथैव भगदत्तश्च श्रुतायुश्च महाबलः ।

गजानीकेन भीमस्य तावद्वारयतां दिशः ॥ २६॥

भूरिश्रवाश्शलश्चैव कौसल्यश्च विशां पते ।
शरौघैर्विविधैस्तूर्णं माद्रीपुत्रावावारयन् ॥ २७॥

भीष्मस्तु सहितस्सर्वैर् धार्तराष्ट्रस्य सैनिकैः ।
युधिष्ठिरं समासाद्य सर्वतः पर्यवारयत् ॥ २८॥

आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः ।
लेलिहन् सृक्किणी वीरो मृगराडिव कानने ॥ २९॥

ततस्तु बलिनां श्रेष्ठो गदां गृह्य महाहवे ।
अवप्लुत्य रथात् तूर्णं गिर्यग्रादिव केसरी ॥ ३०॥

स तस्थौ सगदो भीमस् सशृङ्ग इव पर्वतः ।
सिंहो दृष्ट्वा मृगं यद्वत् तव सैन्यं विभीषयन् ॥ ३१॥

तमुद्वीक्ष्य गदाहस्तं ततस्ते गजयोधिनः ।
परिवव्रू रणे भीमं यत्नादेव समन्ततः ॥ ३२॥

गजमध्यमनुप्राप्तः पाण्डवस्स व्यराजत ।
मेघजालस्य महतो यथा मध्यगतो रविः ॥ ३३॥

व्यधमत् स गजानीकं गदया पाण्डवर्षभः ।
महाभ्रजालमतुलं मातरिश्वेव सन्ततम् ॥ ३४॥

ते वध्यमाना बलिना भीमसेनेन दन्तिनः ।
आर्तनादान् रणे चक्रुर् गर्जन्तो जलदा इव ॥ ३५॥

बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः ।
फुल्लाशोकनिभः पार्थश् शुशुभे रणमूर्धनि ॥ ३६॥

सादिनां शक्तवृष्टिं च व्यधमद्गदया ततः ।
वायुवेगसमायुक्तो व्यचरत् पाण्डवो युधि ॥ ३७॥

विषाणोल्लिखितैर्गात्रैर् विषाणाभिहतो भृशम् ।
विषाणे दन्तिनं गृह्य निर्विषाणमथाकरोत् ॥ ३८॥

विषाणेन च तेनैव दन्तेष्वाहत्य दन्तिनः ।
पातयामास समरे दण्डपाणिरिवान्तकः ॥ ३९॥

शोणिताक्तां गदां बिभ्रन्मेदोमज्जाकृतच्छविः ।
सिक्ताङ्गश्शोणितेनैव रुद्रवत् प्रत्यदृश्यत ॥ ४०॥

एवं ते वध्यमानास्तु हतशेषा महागजाः ।
प्राद्रवन्त दिशो राजन् विमृद्नन्तस्स्वकं बलम् ॥ ४१॥

द्रवद्भिस्तैर्महानागैस् समन्ताद्भरतर्षभ ।
दुर्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥। ६४ ॥ भीष्मवधपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

## ॥ एकोनशततमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

मध्याह्ने तु महाराज सङ्ग्रामस्समपद्यत ।
लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः ॥ १

गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीम् ।
व्यधमन्निशितैर्बाणैश् शतशोऽथ सहस्रशः ॥ २

सम्ममर्द च तत् सैन्यं पिता देवव्रतस्तव ।
मर्दयेच्च यथा राजन् सिंहः प्राप्य मृगव्रजान् ॥ ३

धृष्टद्युम्नश्शिखण्डी च विराटो द्रुपदस्तथा ।
भीष्ममासाद्य समरे शरैर्जघ्नुर्महारथाः ॥ ४

धृष्टद्युम्नं ततोऽविध्यद् [1]भीष्मश्शरशतैश्शितैः ।
धृष्टकेतुं च दशभिर् विराटं च त्रिभिश्शरैः ॥ ५

द्रुपदाय च नाराचान् प्रेषयामास वै दश ॥ ५॥

ततो विद्धा महेष्वासा भीष्मेणामित्रकर्शिना ।
चुक्रुधुस्समरे राजन् पदस्पृष्टा इवोरगाः ॥ ६॥

[2]कोपेन प्राज्वलन् वीरा हव्यसिक्ता इवाग्नयः ॥ ७

1. ख-ग-ङ-म—अयं पादः अनन्तरश्च न स्तः
2. ख-घ-ङ-म—इदमर्धं नास्ति

शिखण्डिनं न विव्याध भारतानां पितामहः ।
स्त्रियं च समनुध्यात्वा नास्मै प्राहरदच्युतः ॥ ८

धृष्टद्युम्नस्तु समरे क्रोधादग्निरिव ज्वलन् ।
पितामहं त्रिभिर्बाणैर् बाह्वोरुरसि चार्पयत् ॥ ९

द्रुपदः पञ्चविंशत्या विराटो दशभिश्शरैः ।
शिखण्डी चापि विंशत्या भीष्मं विव्याध सायकैः ॥ १०

सोऽतिविद्धो महाराज भीष्मस्संख्ये महात्मभिः ।
वसन्ते पुष्पशबलो रक्ताशोक इवाबभौ ॥ ११

तान् प्रत्यविध्यद्गाङ्गेयस् त्रिभिस्त्रिभिरजिह्मगैः ।
द्रुपदस्य च भल्लेन धनुश्चिच्छेद भारत ॥ १२

सोऽन्यत् कार्मुकमादाय भीष्मं विव्याध पञ्चभिः ।
सारथिं च त्रिभिर्बाणैर् निशितै रणमूर्धनि ॥ १३

ततो भीमो महाराज द्रौपद्याः पञ्च चात्मजाः ।
केकया भ्रातरः पञ्च सात्यकिश्चैव माधवः ॥ १४

अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरसमाज्ञया ।
प्रतिरक्षणकार्यार्थं धृष्टद्युम्नमुखान् रणे ॥ १५

तथैव तावकास्सर्वे भीष्मरक्षार्थमुद्यताः ।
प्रत्युद्ययुः पाण्डुसेनां सहसेना नराधिपाः ॥ १६

तत्रासीत् सुमहद्युद्धं तव तेषां च सङ्कुलम् ।

नराश्वरथनागानां यमराष्ट्रविवर्धनम् ॥ १६

रथी रथिनमासाद्य प्राहिणोद्यमसादनम् ॥ १७॥

[1]हयो हयं समासाद्य गजो नागं तथैव च ।

योधो योधं समासाद्य प्रत्ययुध्यत भारत ॥ १८॥

तेऽन्योन्यं समरे जघ्नुश् शरैस्सन्नतपर्वभिः ।

प्रेषयन् परलोकाय परस्परजिगीषया ॥ १९॥

अस्त्रैश्च विविधैस्तत्र योधा जघ्नुस्तथा रथान् ॥ २०

रथाश्च रथिभिर्हीना हतसारथयस्तथा ।

प्रविद्रुताश्वास्समरे दिशो जग्मुस्समन्ततः ॥ २१

मर्दमाना नरान् राजन् हयांश्च सुबहून् रणे ॥ २१॥

वातायमाना दृश्यन्ते गन्धर्वनगरोपमाः ।

रथिनश्च रथैर्हीना वर्मिणस्तेजसा युताः ॥ २२॥

कुण्डलोष्णीषिणस्सर्वे निष्काङ्गदविभूषणाः ।

देवपुत्रसमा रूपे शौर्ये शक्रसमा युधि ॥ २३॥

ऋद्ध्या वैश्रवणेनैव विनयेन बृहस्पतेः ।

सर्वलोकेश्वराश्शूरास् तत्र तत्र विशां पते ॥ २४॥

---

1. ख-ग-व-ङ-म—तथेतरान् समासाद्य नरनागाश्वसादिनः ।
प्रेषयन् परलोकाय शरैस्संनतपर्वभिः ॥
शस्त्रैश्च विविधैर्घोरैस् तत्र तत्र विशां पते ।
[ अर्धपञ्चकस्थाने पाठान्तरम् ]

विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः ॥ २५
दन्तिनश्च नरश्रेष्ठ विहीना वरसादिभिः ।
मृद्नन्तस्स्वान्यनीकानि निपेतुस्सर्वशब्दगाः ॥ २६
वर्मभिश्चामरैश्छत्रैः पताकाभिश्च भारत ।
कक्ष्याभिरथ तोत्रैश्च घण्टाभिस्तोमरैस्तथा ॥ २७
विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश ॥ २७॥
नगमेघप्रतीकाशैर् जलदोपमनिस्स्वनैः ।
तथैव दन्तिभिर्हीनान् गजारोहान् महारणे ॥ २८॥
धावमानानपश्याम तव तेषां च सङ्कुले ॥ २९
नानादेशसमुत्थांश्च तुरगान् हेमवर्मितान् ।
वातायमानानद्राक्षं शतशोऽथ सहस्रशः ॥ ३०
अश्वारोहान् रथैरश्वैर् गृहीतान् हि समन्ततः ।
द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे ॥ ३१
गजो गजं समासाद्य द्रवमाणो महारणे ।
ययौ विमृद्नंस्तरसा पदातीन् वाजिनस्तथा ॥ ३२
[1]तथैव च रथान् राजन् प्रममर्द रणे गजः ॥ ३२॥
रथाश्चैव समासाद्य पदातींस्तुरगांस्तथा ।
व्यमृद्नन् समरे राजंस् तुरगांश्च नरान् रणे ॥ ३३॥

1. अ-क—अर्धपङ्क्तं नास्ति

एवं ते बहुधा राजन् प्रत्यमृद्नन् परस्परम् ।
दृश्यन्ते स्म महाबाहो तत्र तत्र महाबलाः ॥ ३४॥
[1]तस्मिन् रौद्रे महायुद्धे वर्तमाने भयावहे ।
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ॥ ३५॥
अस्थिसञ्चयसङ्घाटा केशशैवलशाद्वला ।
रथह्रदा शरावर्ता हयमीना दुरासदा ॥ ३६॥
शीर्षोपलशताकीर्णा हस्तिग्राहसमाकुला ।
कवचोष्णीषफेनौघा धनुर्मीनासिपन्नगा ॥ ३७॥
[2]शङ्खनक्रौघसम्पूर्णा छत्रकूर्मरथोडुपा ।
पताकाध्वजवृक्षाढ्या मर्त्यकूलापहारिणी ॥ ३८॥
क्रव्याद्हंससङ्कीर्णा यमराष्ट्रविवर्धनी ॥ ३९
तां नदीं क्षत्रियाश्शूरा हयनागरथप्लवैः ।
प्रतेरुर्बहवो राजन् भयं त्यक्त्वा महाहवे ॥ ४०
अपोवाह रणे भीरून् कश्मलेनाभिसंवृतान् ।
यथा वैतरणी प्रेतान् प्रेतराजपुरं प्रति ॥ ४१
प्राक्रोशन् क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत् ।

1. अ—अर्धचतुष्टयं नास्ति
क—विपद्यन्ते च बहुधा नराश्च गजयोधिनः ।
कोपेन महता युक्तास् तत्र तत्र महाबलाः ॥ [अधिकः पाठः]
2. ङ-म—अर्धत्रयं नास्ति

क्षत्रियाः—

दुर्योधनापराधेन क्षयं गच्छन्ति पार्थिवाः ॥ ४२

गुणवत्सु कथं द्वेषं धृतराष्ट्रो जनेश्वरः ।

कृतवान् पाण्डुपुत्रेषु पापात्मा लोभमोहितः ॥ ४३

सञ्जयः—

एवं बहुविधा वाचश् श्रूयन्तेऽस्मासु भारत ।

पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः ॥ ४४

ता निशम्य ततो वाचस् सर्वयोधैरुदाहृताः ।

आगस्कृत् सर्वलोकस्य पुत्रो दुर्योधनस्तव ॥ ४५

भीष्मं द्रोणं कृपं चैव शल्यं चोवाच भारत । ४५॥

दुर्योधनः—

युध्यध्वमनहङ्काराः जयार्थे मे जनेश्वराः ॥ ४६

सञ्जयः—

इति दुर्योधनोत्सृष्टास् सर्वे युयुधिरे नृपाः । ४६॥

ततः प्रववृते युद्धं कुरूणां पाण्डवैस्सह ॥

अक्षद्यूतकृतं राजन् सुघोरं वैशसं तदा ॥ ४७॥

[1]यत् पुरा त्वं न गृह्णीषे वार्यमाणो महात्मभिः ।

वैचित्रवीर्य पश्येदं फलं तस्य यथातथम् ॥ ४८॥

न हि पाण्डुसुता राजन् ससैन्यास्सपदानुगाः ।

रक्षन्ति समरे प्राणान् कौरवाणां विशां पते ॥ ४९॥

---

1. अ-क—अर्धषट्कं नास्ति

एतस्मात् कारणाद्घोरो वर्तते स्म जनक्षयः ।
दैवाद्वा पुरुषव्याघ्र तव पापतया नृप ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]

---

## ॥ शततमोऽध्यायः ॥

---

सङ्कुलयुद्धवर्णनम् ॥

---

सञ्जयः—

एकीभूतास्ततस्सर्वे कुरवः पाण्डवैस्सह ।
अयुध्यन्त महारङ्गे मध्यं प्राप्ते दिवाकरे ॥ १

सात्यकिः कृतवर्माणं विद्ध्वा पञ्चभिराशुगैः ।
नाकम्पयत शैनेयः किरन् बाणान् सहस्रशः ॥ २

तथैव द्रुपदो राजा द्रोणं विद्ध्वा शरैस्त्रिभिः ।
पुनर्विव्याध सप्तत्या सारथिं च त्रिभिश्शरैः ॥ ३

भीमसेनस्तु राजानं बाह्लीकं प्रपितामहम् ।
विद्ध्वाऽनदन्महाराज गवां मध्ये यथा वृषः ॥ ४

आर्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः ।
चित्रसेनं त्रिभिर्बाणैर् विव्याध हृदये भृशम् ॥ ५

तौ वै समागतौ युद्धे पितापुत्रौ विरेजतुः ।
यथा समागतौ राजन् काले बुधनिशाकरौ ॥ ६

तस्याश्वांश्चतुरो हत्वा सूतं च नवभिश्शरैः ।
ननाद बलवान् नादं सौभद्रः परवीरहा ॥ ७

हताश्वात् तु रथात् तूर्णम् अवप्लुत्य महारथः ।
आरुरोह रथं तूर्णं दुर्मुखस्य विशां पते ॥ ८

द्रोणश्च द्रुपदं विद्ध्वा शरैस्सन्नतपर्वभिः ।
सारथिं चास्य विव्याध त्वरमाणः पराक्रमी ॥ ९

पीड्यमानस्ततो राजा द्रुपदो वाहिनीमुखे ।
अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ॥ १०

[1]भीमसेनस्तु राजानं मुहूर्तादिव बाह्लिकम् ।
व्यश्वसूतरथं चक्रे सर्वलोकस्य पश्यतः ॥ ११

ससम्भ्रमो महाराज संशयं परमं गतः ।
अवप्लुत्य ततो यानाद् बाह्लीकः पुरुषर्षभः ॥ १२
आरुरोह रथं तूर्णं लक्ष्मणस्य महात्मनः ॥ १२॥

अर्जुनश्च नरव्याघ्रस् सुशर्मप्रमुखान् रथान् ।
[2]अजयद्रथिनां श्रेष्ठस् सर्वानप्रतिमान् रणे ॥ १३॥

---

1. ख—इदमादि अर्धपञ्चकं नास्ति
2. ख-घ-ङ-म—अनयत् प्रेतराजस्य भवनं सायकैश्शितैः । [पाठान्तरम् ]

सुशर्माऽपि ततो बाणैः पार्थं विव्याध वै तदा ।
वासुदेवं च सप्तत्या पार्थं च नवभिश्शरैः ॥ १४॥
तान् निवार्य शरौघेण शक्रसूनुर्महारथः ।
सुशर्मणो रणे योधान् प्राहिणोद्यमसादनम् ॥ १५॥
ते हन्यमानाः पार्थेन कालेनेव युगक्षये ।
व्यद्रवन्त रणे राजन् भये जाते महामृधे ॥ १६॥
उत्सृज्य तुरगान् केचिद् रथान् केचिच्च भारत ।
गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश ॥ १७॥
अपरे तुद्यमानास्तु वाजिनागरथा नराः ।
त्वरया परया युक्ताः प्राद्रवन्त विशां पते ॥ १८॥
कशाभिस्ताडयामासुः पार्ष्णिभिश्च मुहुर्मुहुः ।
हयारोहा द्रवन्त्यैव चोदयन्तो हयोत्तमान् ॥ १९॥
तथा तोत्रनिपातैश्च अङ्कुशानां च विभ्रमैः ।
गजारोहा गजांस्तूर्णं त्वरयन्तः प्रदुद्रुवुः ॥ २०॥
रथिनश्च प्रतोदैश्च वाग्भिश्चैव पुनः पुनः ।
भर्त्सयन्तो हयान् राजन् प्राद्रवन्त दिशो दश ॥ २१॥
पादाताश्चैव शस्त्राणि समुत्सृज्य महाहवे ।
निरपेक्षाभ्यधावन्त तेन तेन स्म भारत ॥ २२॥
वार्यमाणास्सुबहुशस् त्रैगर्तेन सुशर्मणा ।

तथाऽन्यैः पार्थिवश्रेष्ठैर् नावतिष्ठन्त संयुगे ॥ २३॥

पुत्रांश्च पतितान् भूमौ मातुलांश्च पितॄंस्तथा ।
सोदरांश्चावमृद्नन्तो दुद्रुवुस्ते समन्ततः ॥ २४॥

तद्बलं प्रद्रुतं दृष्ट्वा पुत्रस्तव विशां पते ।
पुरस्कृत्य रणे भीष्मं सर्वसैन्यपुरस्कृतम् ॥ २५॥

सर्वोद्योगेन महता धनञ्जयमुपाद्रवन् ।
त्रिगर्ताधिपतेरर्थे जीवितस्य विशां पते ॥ २६॥

स एकस्समरे तस्थौ किरन् बहुविधाञ् शरान् ।
भ्रातृभिस्सहितस्सर्वैश् शेषा हि प्रद्रुता नराः ॥ २७॥

तथैव पाण्डवा राजन् सर्वोद्योगेन दंशिताः ।
प्रययुः फल्गुनार्थाय यत्र भीष्मो व्यवस्थितः ॥ २८॥

जानन्तोऽपि रणे शौर्यं घोरं गाण्डीवधन्वनः ।
हाहाकारकृतोत्साहाद् भीष्मं जग्मुस्समन्ततः ॥ २९॥

ततस्तालध्वजश्शूरः पाण्डवानामनीकिनीम् ।
छादयामास समरे शरैस्सन्नतपर्वभिः ॥ ३०॥

[1]सात्यकिः कृतवर्माणं वारयित्वा महारथम् ।
शरैर्बहुविधै राजन्नाससाद पितामहम् ॥ ३१॥

---

1. ख-ग-घ-ङ-म—एकीभूतास्ततस्सर्वे कौरवाः पाण्डवैस्सह ।
अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे ॥
[अधिकः पाठः]

स विद्ध्वा भारतं षष्ट्या निशितैर्लोमवाहिभिः ।
नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः ॥ ३२॥

तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः ।
हेमचित्रां महावेगां नागकन्योपमां शुभाम् ॥ ३३॥

तामापतन्तीं सहसा मृत्युकालोपमां शुभाम् ।
पीडयामास वार्ष्णेयो लाघवेन महायशाः ॥ ३४॥

अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा ।
न्यपतद्धरणीपृष्ठे महोल्केव हतप्रभा ॥ ३५॥

वार्ष्णेयस्तु ततो राजन् स्वां शक्तिं घोरदर्शनाम् ।
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ॥ ३६॥

वार्ष्णेयभुजवेगेन प्रयुक्ता सा महारवा ।
अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ॥ ३७॥

तामापतन्तीं सहसा द्विधा चिच्छेद भारतः ।
क्षुरप्राभ्यां सुतीक्ष्णाभ्यां सा व्यशीर्यत मेदिनीम् ॥ ३८॥

छित्त्वा स शक्तिं गाङ्गेयस् सात्यकिं नवभिश्शरैः ।
आजघानोरसि क्रुद्धः प्रहसञ् छत्रुकर्शनः ॥ ३९॥

ततस्सरथनागाश्वा पाण्डवाः पाण्डुपूर्वज ।
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ॥ ४०॥

ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
पाण्डवानां कुरूणां च समरे विजयैषिणाम् ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ६४ ॥ भीष्मवधपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

---

## ॥ एकशततमोऽध्यायः ॥

---

युधिष्ठिरादियुद्धवर्णनम् ॥

---

सञ्जयः—

दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम् ।
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् ॥ १
दुर्योधनो महाराज दुश्शासनमभाषत ॥ १॥

दुर्योधनः—

एष भीष्मो महेष्वासश् शूरश्शत्रुनिषूदनः ।
छादितः पाण्डवैश्शूरैस् समन्ताद्भरतर्षभः ॥ २॥
तस्य कार्यं त्वया वीर रक्षणं सुमहात्मनः ॥ ३
रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः ।
[1]निहन्यात् समरे यत्तान् पाञ्चालान् पाण्डवैस्सह ॥ ४

---

1. अ—अर्धत्रयं नास्ति

तच्च कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम् ।
गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं विशेषतः ॥ ५

स भवान् सर्वसैन्येन परिवार्य पितामहम् ।
समरे दुष्करं कर्म कुर्वाणं परिपालय ॥ ६

सञ्जयः—

एवमुक्तस्तु समरे पुत्रो दुश्शासनस्तव ।
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ॥ ७

[1]पालयामास महता यत्नेन च सुसंयतः ॥ ७॥

ततश्शतसहस्रेण हयानां सुबलात्मजः ।
विमलप्रासहस्तानां यष्टितोमरधारिणाम् ॥ ८॥

दर्पितानां सुवेगानां बलस्थानां पताकिनाम् ।
शिक्षितैर्युद्धकुशलैर् उपेतानां नरोत्तमैः ॥ ९॥

[2]एवं बहुसहस्रैश्च योधानां युद्धशालिनाम् ।
[3]संवृतश्शकुनिस्तस्थौ युद्धायैव सुदंशितः ॥ १०॥

नकुलस्सहदेवश्च धर्मपुत्रश्च पाण्डवम् ।
न्यवारयन् नरश्रेष्ठान् परिवार्य समन्ततः ॥ ११॥

ततो दुर्योधनो राजा शूराणां हयसादिनाम् ।

1. ख-ब-ङ-म—इदमर्धं नास्ति 2. ब-ङ-म—अर्धमिदं नास्ति
3. ख—नास्तीदमर्धम्

अयुतं प्रेषयामास शकुनेः प्रियकाम्यया ॥ १२॥

तैः प्रविष्टैर्महावेगैर् गरुत्मद्भिरिवाहवे ।
[1]शुशुभे स महातेजाश् शकुनिस्सुबलात्मजः ॥ १३॥

तैरश्वैस्सुमहावेगैर् मरुद्भिरिव वासवः ॥ १४

खुराहता धरा राजंश् चकम्पे च ननाद च ॥ १४॥

खुरशब्दश्च सुमहान् वाजिनां शुश्रुवे तदा ।
महावंशवनस्येव दह्यमानस्य पर्वते ॥ १५॥

उत्पतद्भिश्च तैस्तत्र समुद्धूतं महद्रजः ।
दिवाकररथं प्राप्य छादयामास भास्करम् ॥ १६॥

वेगवद्भिर्हयैस्तैस्तु क्षोभितं पाण्डवं बलम् ।
निपतद्भिर्महावेगैर् हंसैरिव महत् सरः ॥ १७॥

[2]तुरगैर्वायुवेगैश्च तत् सैन्यं व्याकुलीकृतम् ।
हेषतां चैव शब्देन न प्राज्ञायत किञ्चन ॥ १८॥

[3]अतस्तदा महान् घोषस् तुरगाणामभूच्छ्रुतः ॥ १९

ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ।
प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनाम् ॥ २०

---

1. ख-घ-ङ—इदमर्धद्वयं नास्ति 2. ख-घ-ङ-म—इदमर्धं नास्ति
3. ख-ग-घ-ङ-म—अन्तर्दधे महाञ्शब्दस्तेन शब्देन मोहितः ।
['पाठान्तरम्]

उद्धूतस्य महाराज प्रावृषीव महोदधेः ।
पौर्णमास्यामम्बुवेगं यथा वेला दधार ह ॥ २१
ततस्ते रथिनो राजन् शरैस्सन्नतपर्वभिः ।
[1]न्यकृन्तन्नुत्तमाङ्गानि कायेभ्यो हयसादिनाम् ॥ २२
विनिपेतुर्महाराज निहता दृढधन्विनः ।
नागैरिव महादग्नैर् यथा स्युर्गिरिगह्वरे ॥ २३
तेऽपि प्रासैस्सुनिशितैश् शरैस्सन्नतपर्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश ॥ २४
अभ्याहता हयारोहा शक्तिभिर्भरतर्षभ ।
[2]न्यपतन्त महाराज वातरुग्णा इव द्रुमाः ॥ २५
कायेभ्यो न्यपतन् भूमावुत्तमाङ्गानि सादिनाम् ।
फलानि कालपक्वानि द्रुमेभ्यः पतितान्यधः ॥ २६
[3]ससादिनो हया राजंस् तत्र तत्र निषूदिताः ।
पतिताः पात्यमानाश्च प्रत्यदृश्यन्त सङ्घशः ॥ २७
वध्यमाना हयास्ते तु प्राद्रवन्त भयार्दिताः ।
यथा सिंहं समासाद्य मृगाः प्राणपरायणाः ॥ २८
पाण्डवाश्च महाराज जित्वा शत्रून् महामृधे ।

1. ब—अर्धचतुष्टयं नास्ति 2. ब-ङ-म—अर्धत्रयं नास्ति
3. ख-ग-घ-ङ-म—असृजन्नुत्तमाङ्गानि फलानीव महाद्रुमाः ।
[अधिकः पाठः]

दध्मुश्शङ्खांश्च भेरीश्च ताडयामासुराहवे ॥ २९

ततो दुर्योधनो दीनं दृष्ट्वा सैन्यमवस्थितम् ।
अब्रवीद्भरतश्रेष्ठ मद्रराजमिदं वचः ॥ ३०

दुर्योधनः—

एष पाण्डुसुतो ज्येष्ठो जित्वा मातुल मे बलम् ।
पश्यतां नो महाबाहो सेनां द्रावयते बली ॥ ३१

तं वारय महाबाहो वेलेव मकरालयम् ।
त्वं हि संश्रूयसेऽत्यन्तम् असह्यबलविक्रमः ॥ ३२

पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ।
प्रययौ रथवंशेन यत्र राजा युधिष्ठिरः ॥ ३३

तदापतद्वै सहसा शल्यस्य सुमहद्बलम् ।
मेघौघमिव शैलेन्द्रो वारयामास पाण्डवः ॥ ३४

मद्रराजं तु समरे धर्मराजो युधिष्ठिरः ।
दशभिस्सायकैस्तूर्णम् आजघान स्तनान्तरे ॥ ३५
नकुलस्सहदेवश्च त्रिभिस्त्रिभिरजिह्मगैः ॥ ३५॥

मद्रराजोऽपि तान् सर्वान् आजघान त्रिभिस्त्रिभिः ।
युधिष्ठिरं पुनष्षष्ट्या विव्याध निशितैश्शरैः ॥ ३६॥

माद्रीपुत्रौ च संरब्धौ द्वाभ्यां द्वाभ्यामताडयत् ।

[1]पुनस्स बहुभिर्बाणैर् आजघान युधिष्ठिरम् ॥ ३७॥

ततो भीमो महाबाहुर् दृष्ट्वा राजानमाहवे ।
मद्रराजवशं प्राप्तं मृत्योरास्यगतं यथा ॥ ३८॥

अभ्यद्रवत सङ्ग्रामे मद्रराजममित्रहा ॥ ३९

आपतन्नेव भीमस्तु मद्रराजमताडयत् ।
सर्वपारशवैस्तीक्ष्णैर् नाराचैर्मर्मभेदिभिः ॥ ४०

ततो भीष्मश्च द्रोणश्च सैन्येन महता वृतौ ।
राजानमभ्यपद्येताम् अञ्जसा शरवर्षिणौ ॥ ४१

ततो युद्धं महाघोरं प्रावर्तत सुदारुणम् ॥ ४१॥

अपरां दिशमास्थाय द्योतमाने दिवाकरे ।
क्षीणप्रभे महाराज गन्तुमस्ताद्रिमिच्छति ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकशततमोऽध्यायः ॥ १०१ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[अस्मिन्नध्याये ४२॥ श्लोकाः]

---

1. ख-घ-ङ-म—इदमर्धं नास्ति

## ॥ द्व्युत्तरशततमोऽध्यायः ॥

भीष्मपराक्रममसृष्यता कृष्णेन रथादवरुह्य तद्धायाभियानम् ॥ १ ॥ अर्जुनेन पश्चादनुधाव्य निवर्तितस्य कृष्णस्य तेन सह पुना रथारोहणम् ॥

सञ्जयः—

ततः पितामहः क्रुद्धो निशितैस्सायकोत्तमैः ।
आजघान रणे पार्थान् सहसैन्यान् परन्तपः ॥ १

भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिश्शरैः ।
नकुलं च त्रिभिर्बाणैस् सहदेवं च पञ्चभिः ॥ २

युधिष्ठिरं च नवभिर् बाह्वोरुरसि चार्पयत् ।
[1]सर्वपारशवैस्तीक्ष्णैर् नाराचैर्मर्मभेदिभिः ॥ ३

धृष्टद्युम्नं त्रिभिर्विद्ध्वा विननाद महाबलः ॥ ३॥

नकुलः पञ्चविंशत्या माधवश्च त्रिभिश्शरैः ।
[2-3]धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च पञ्चभिः ॥ ४॥

युधिष्ठिरो द्वादशभिः प्रत्यविध्यत् पितामहम् ॥ ५

द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमुखानपि ।
एकैकं पञ्चभिर्बाणैर् यमदण्डरिवाहनत् ॥ ६

1. ङ—अर्धद्वयं नास्ति
2. ख-ग—ततो भीष्मं च द्रोणं च सैन्येन महता वृतौ । [अधिकः पाठः]
3. ख-ग-घ-ङ-म—सहदेवश्च

ते च तं प्रत्यविध्यन्त त्रिभिस्त्रिभिरजिह्मगैः ।
तोत्त्रैरिव महानागं द्रोणं ब्राह्मणपुङ्गवम् ॥ ७
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषहाश्शूरसेनाश् शिबयोऽथ वसातयः ॥ ८
सङ्ग्रामे न जहुर्भीष्मं बाध्यमानाश्शितैश्शरैः ॥ ८॥
तथैवान्ये महीपाला पाण्डवैर्यैर्महात्मभिः ।
पाण्डवानभ्यवर्तन्त विविधायुधपाणयः ॥ ९॥
तथैव पाण्डवा राजन् परिवव्रुः पितामहम् ॥ १०
स समन्तात् परिवृतो रथौघैरपराजितः ।
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन् परान् ॥ ११
रथाश्वाङ्गारचापार्चिर् असिशक्तिगदेन्धनः ।
शरस्फुलिङ्गो भीष्माग्निर् ददाह क्षत्रियर्षभान् ॥ १२
यथा हि सुमहानग्निः कक्षे चरति सानिलः ।
तथा भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ॥ १३
सुवर्णपुङ्खैरिषुभिर् गृध्रपक्षैस्सुतेजनैः ।
कर्णिनालीकनाराचैश् छादयामास तद्बलम् ॥ १४
अपातयद्ध्वजांश्चैव रथिनश्च शितैश्शरैः ।
मुण्डतालवनानीव चकार स रथव्रजान् ॥ १५
निर्मनुष्यान् रथान् राजन् गजानश्वांश्च संयुगे ।

अकरोत् स महाबाहुस् सर्वशस्त्रभृतां वरः ॥ १६
तस्य ज्यातलनिर्घोषं विष्फूर्जितमिवाशनेः ।
निशम्य सर्वभूतानि समकम्पन्त भारत ॥ १७
अमोघाश्चापतन् बाणास् संयुगे भरतर्षभ ।
नासज्जन्त तनुत्रेषु भीष्मचापच्युताश्शराः ॥ १८
हीनवीरान् रथान् राजन् संयुक्ताञ्जवनैर्हयैः ।
अपश्याम महाराज ह्रियमाणान् रणाजिरे ॥ १९
चेदिकाशिकरूशानां सहस्राणि चतुर्दश ।
महारथास्समाख्याताः कुलपुत्रास्तनुत्यजः ॥ २०
अपरावर्तिनस्सर्वे सुवर्णविकृतध्वजाः ।
सङ्ग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम्॥ २१
निमग्नाः परलोकाय सवाजिरथकुञ्जराः ॥ २१॥
भग्नाक्षोपस्करान् कांश्चिद् भग्नचक्रांश्च मारिष ।
अपश्याम रथान् राजन् शतशोऽथ सहस्रशः ॥ २२॥
सवरूथै रथयुगै रथिभिश्च निपातितैः ।
अश्वैश्च कवचैश्छत्रैः पट्टसैश्च विशां पते ॥ २३॥
गदाभिर्मुसलैश्चैव निस्त्रिंशैश्च शिलीमुखैः ।
अनुकर्षैरुपासङ्गैश् चक्रैर्भग्नैश्च भारत ॥ २४॥
बाहुभिः कार्मुकैः खड्गैश् शिरोभिश्च सकुण्डलैः ।

तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितैः ॥ २५॥
चापैश्च बहुधा च्छिन्नैस् समास्तीर्यत मेदिनी ॥ २६

गजारोहा गजान् राजन् हयांश्च हयसादिनः ।
अभिपेतुर्द्रुतं तत्र शतशोऽथ सहस्रशः ॥ २७

पतमाना हि ते वीरा द्रवमाणा महारथाः ।
नाशक्नुवन् धारयितुं भीष्मबाणप्रपीडिताः ॥ २८

[1]महेन्द्रसमवीर्येण वध्यमाना महाचमूः ।
अभज्यत महाराज न च द्वौ सम्प्रधावताम् ॥ २९

आविद्धरथनागाश्वं पदातिध्वजकुञ्जरम् ।
अनीकं पाण्डुपुत्राणां हाहाकारमचेतनम् ॥ ३०

जघान च पिता पुत्रं पुत्रस्तु पितरं तथा ।
प्रियं सखायं चाक्रन्दत् सखा दैवबलात्कृतः ॥ ३१

विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः ।
प्रकीर्य केशान् धावन्तस् समदृश्यन्त भारत ॥ ३२

तद्गोकुलमिवोद्भ्रान्तम् उद्भ्रान्तरथकुञ्जरम् ।
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ॥ ३३

---

1. अ-क-ग—रथिनोऽपि महावीरा द्रवमाणान् महारथान् ।
[अधिकः पाठः]

प्रमृद्यमानं तत् सैन्यं दृष्ट्वा यादवनन्दनः ।
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ॥ ३४

श्रीभगवान्—

अयं स कालस्सम्प्राप्तः पार्थ यः काङ्क्षितस्त्वया ।
प्रहरास्मै नरव्याघ्र भीष्मायाहवशोभिने ॥ ३५

यत् पुरा कथितं वीर त्वया राज्ञां समागमे ।
विराटनगरे पार्थ सञ्जयस्य समीपतः ॥ ३६

भीष्मद्रोणमुखान् सर्वान् धार्तराष्ट्रस्य सैनिकान् ।
सानुबन्धान् हनिष्यामि ये मां योत्स्यन्ति संयुगे ॥ ३७

इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम ।
[1]क्षत्रधर्ममनुस्मृत्य युध्यस्व पुरुषर्षभ ॥ ३८

सञ्जयः—

इत्युक्तो वासुदेवेन तिर्यग्दृष्टिरधोमुखः ।
अकाम इव बीभत्सुर् इदं वचनमब्रवीत् ॥ ३९

अर्जुनः—

बन्धूनां च वधं कृत्वा राज्यं च नरकोत्तरम् ।
दुःखानि वनवासे वा किं नु मे सुकृतं भवेत् ॥ ४०

चोदयाश्वान् यतो भीष्मः करिष्ये वचनं तव ।

---

1. ख—इदमर्धं नास्ति

पातयिष्यामि दुर्धर्षं वृद्धं कुरुपितामहम् ॥ ४१

सञ्जयः—

ततोऽश्वान् रजतप्रख्यांश् चोदयामास माधवः ।
यतो भीष्मस्ततो राजन् दुष्प्रेक्ष्यो रश्मिमानिव ॥ ४२

ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यन्तमाहवे ॥ ४३

ततो भीष्मः कुरुश्रेष्ठश् सिंहवद्विनदन् मुहुः ।
धनञ्जयरथं शीघ्रं पूरयामास पत्रिभिः ॥ ४४

क्षणेन सहयस्तस्य सरथस्सहसारथिः ।
शरवर्षेण महता न प्राज्ञायत किञ्चन ॥ ४५

वासुदेवस्त्वसम्भ्रान्तो धैर्यमास्थाय वीर्यवान् ।
चोदयामास तानश्वान् वितुन्नान् भीष्मसायकैः ॥ ४६

ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्स्वनम् ।
[1]पातयामास भीष्मस्य धनुश्छित्त्वा शितैश्शरैः ॥ ४७

स छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ४८

चकर्ष विततो दोर्भ्यां धनुर्जलदनिस्स्वनम् ।
अथास्य तदपि क्रुद्धश् चिच्छेद धनुरर्जुनः ॥ ४९

1. अ—नास्त्यर्धचतुष्टयम्

तस्य तत् पूजयामास लाघवं शन्तनोस्सुतः ।
साधु पार्थ महाबाहो साधु कुन्तीसुतेति च ॥ ५०

स सम्भाष्यैनमपरं प्रगृह्य रुचिरं धनुः ।
मुमोच समरे भीष्मश् शरान् पार्थरथं प्रति ॥ ५१

[1]अचोदयद्वासुदेवो हयान् पार्थस्य संयुगे ।
[2]अगोचरान् भीष्ममार्गे कृत्वाऽन्यत्र च संस्थितान् ॥ ५२

मोघान् कुर्वन् शरांस्तस्य मण्डलानि प्रदर्शयन् ।
[3]सारथ्यं निपुणं कुर्वन् प्रत्यदृश्यत संयुगे ॥ ५३

भीष्मस्तावत् सुसङ्क्रुद्धः पुनर्बाणान् मुमोच ह ।
पार्थाय युधि राजेन्द्र तदद्भुतमिवाभवत् ॥ ५४

अर्जुनस्तु सुसङ्क्रुद्धः पितामहमरिन्दमः ।
अवर्षद्बाणवर्षेण योद्धुं ह्यभिमुखे स्थितम् ॥ ५५

तावुभौ युधि दुर्धर्षौ युयुधाते परस्परम् ।
[4]गोवृषाविव संरब्धौ विषाणोल्लेखनाङ्कितौ ॥ ५६

शुशुभाते नरव्याघ्रौ तावुभौ शरविक्षतौ ॥ ५६॥

---

1. ख-च-ङ-म—अदर्शयद्वासुदेवो हयज्ञाने परं बलम् । [पाठान्तरम्]
2. ख-घ-ङ-म—इदमर्धं नास्ति
3. ख-च-ङ-म—अर्धषट्कं नास्ति
4. ख-घ-ङ-म—शुशुभाते नरव्याघ्रौ भीष्मस्य शरविक्षतौ ।
गोवृषाविव नर्दन्तौ विषाणोल्लेखनाङ्कितौ ॥ [पाठान्तरम्]

[1]भीष्मोऽतीव सुसङ्क्रुद्धः पृषत्कैरर्जुनं बलात् ।
जघान समरे मूर्ध्नि सिंहवद्विनदन् मुहुः ॥ ५७॥
वासुदेवस्तु सम्प्रेक्ष्य पार्थस्य मृदुयुद्धताम् ।
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ॥ ५८॥
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ।
परान् परान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ५९॥
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ।
नामृष्यत महाबाहुर् माधवः परवीरहा ॥ ६०॥
वासुदेवस्सुसङ्क्रुद्धो रोषाज्जज्वाल संयुगे ॥ ६१
उत्सृज्य रजतप्रख्यान् हयान् पार्थस्य मारिष ।
क्रुद्धो नाम महायोगी प्रचस्कन्द रथोत्तमात् ॥ ६२
[2]अभिदुद्राव भीष्मं स भुजप्रहरणो बली ।
प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन् मुहुः ॥ ६३
दारयन्निव पद्भ्यां तु जगतीं जगदीश्वरः ।
क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः ॥ ६४
ग्रसन्निव च तेजांसि तावकानां महाहवे ॥ ६४॥
दृष्ट्वा च देवकीपुत्रं भीष्मायोद्यन्तमाहवे ।

---

1. ख-घ-ङ-म—अर्धद्वयं नास्ति
2. अ-क—गृहीतचक्रो भीष्मं तम् अभिदुद्राव वै बली । [पाठान्तरम्]

हतो भीष्मो हतो भीष्म इति तत्र स्म सैनिकाः ॥　६५॥
क्रोशन्तः प्राद्रवन् सर्वे वासुदेवभयान्नराः ॥　६६

पीतकौशेयसंवीतो मणिश्यामो जनार्दनः ।
शुशुभे प्रद्रवन् भीष्मं विद्युन्माली यथाऽम्बुदः ॥　६७
स सिंह इव मातङ्गं यूथर्षभ इवर्षभम् ।
अभिदुद्राव तेजस्वी विनदन् यादवर्षभः ॥　६८
तमायान्तं तु सम्प्रेक्ष्य पुण्डरीकाक्षमाहवे ।
असम्भ्रमेण भीष्मोऽपि विचकर्ष महद्धनुः ॥　६९
उवाच चैनं गोविन्दम् असम्भ्रान्तेन चेतसा ॥　६९॥

भीष्मः—

एह्येहि पुण्डरीकाक्ष वासुदेव नमोऽस्तु ते ।
मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे ॥　७०॥
त्वया हि देव सङ्ग्रामे हतस्यापि ममानघ ।
श्रेय एव परं कृष्ण लोकेऽमुष्मिन्निहैव च ॥　७१॥
संभावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ॥　७२

सञ्जयः—

अन्वगेव ततः पार्थस् तमनुद्रुत्य केशवम् ।
निजग्राह महाबाहुर् बाहुभ्यां परिगृह्य वै ॥　७३
निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ।

जगाम चैनमादाय वेगेन पुरुषोत्तमः ॥ ७४

पार्थस्तु विष्टभ्य बलाच् चरणौ परवीरहा ।
[1]स जग्राह हृषीकेशं कथञ्चिद्दशमे पदे ॥ ७५

ततश्चैनमुवाचेदं क्रोधपर्याकुलेक्षणम् ।
निश्श्वसन्तं यथा नागम् अर्जुनः प्रणयात् सखा ॥ ७६

अर्जुनः—

निवर्तस्व महाबाहो नानृतं कर्तुमर्हसि ।
यत् त्वया कथितं पूर्वं न योत्स्यामीति केशव ॥ ७७

मिथ्यावादीति लोके त्वां कथयिष्यन्ति माधव ।
[2]ममैष भारस्सर्वो हि हनिष्यामि यतव्रतम् ॥ ७८

शपे माधव सख्येन सत्येन सुकृतेन च ।
[3]अन्तमद्य करिष्यामि शत्रूणां शत्रुकर्शन ॥ ७९

[4]अद्यैव पश्य दुर्धर्षं पात्यमानं महाव्रतम् ।
तारापतिमिवापूर्णम् अन्तकाले यदृच्छया ॥ ८०

सञ्जयः—

माधवस्तद्वचश्श्रुत्वा फल्गुनस्य महात्मनः ।

1. क—अर्धश्लोकं नास्ति
2. अ-क—मामैष कृतसङ्कल्पो
3. अ-क—यथा हनिष्ये शत्रूणां शत्रुकर्शन लालसः । [ पाठान्तरम् ]
4. अ-क-ग—ममैष भारस्सर्वो हि हनिष्यामि महाव्रतम् ।
[अधिकः पाठः]

अभवत् परमप्रीतो ज्ञात्वा पार्थस्य विक्रमम् ॥ ८१
न किञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः ॥ ८१॥
तौ रथस्थौ नरव्याघ्रौ भीष्मश्शान्तनवः पुनः ।
ववर्ष शरवर्षाणि मेघो वृष्ट्या यथाऽचलौ ॥ ८२॥
प्राणानादत्त योधानां पिता देवव्रतस्तव ।
गभस्तिभिरिवादित्यः पयांसि शिशिरात्यये ॥ ८३॥
यथा कुरूणां सैन्यानि बभञ्ज युधि पाण्डवः ।
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता ॥ ८४॥
हतविद्रुतसैन्यास्तु निरुत्साहा हतौजसः ।
निरीक्षितुं न शेकुस्तं भीष्ममप्रतिमं रणे ॥ ८५॥
मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा ।
ते वध्यमाना भीष्मेण कालेनेव युगक्षये ॥ ८६॥
वीक्षाञ्चक्रुर्महाराज पाण्डवा भयपीडिताः ।
[1]वध्यमाना रणे चापि भीष्मेणामितकर्शिना ॥ ८७॥
त्रातारं नाधिगच्छन्ति गजाः पङ्कगता इव ॥ ८८
पिपीलिका यथा पद्भ्यां मथ्यन्ते बलवत्तरैः ।
तथैव योधा राजेन्द्र भीष्मेणामित्रघातिना ॥ ८९
समरे मृदितास्सर्वे पाण्डवास्सह सृञ्जयैः ॥ ८९॥

1. ख-ब-ङ-म—इदमर्धं नास्ति

महारथं भारत दुष्प्रधर्षणं
शरौघिणं प्रतपन्तं नरेन्द्राः ।
भीष्मं न शेकुः प्रतिवीक्षितुं ते
शरार्चिषं सूर्यमिवातपन्तम् ॥ ९०॥

विमृद्नतस्तस्य हि पाण्डुसेनाम्
अस्तं जगामाथ सहस्ररश्मिः ।
ततोऽपि भीष्मस्सबलस्ससैन्यान्
न्यवारयत् पाण्डुसुतान् शरौघैः ॥ ९१॥

जघान चैतान् सुभृशं महाबलो
महाव्रतः पाण्डुसुतान् महास्त्रैः ।
रणे करूशाधिपचेदिपैर्बलैर्
धृतान् सदा चक्रधरस्य पश्यतः ॥ ९२॥

ततो बलानां श्रमकर्शितानां
[1]मेदोवसासृक्स्रुतिसम्भ्रमे सति ।
भीष्मं यथा चान्तककल्पमेवम्
आयोधने चान्तकमेव मेनिरे ॥ ९३॥

एवं प्रवधृते युद्धं भीष्मपाण्डवयोस्तदा ।
युध्यतां च परेषां च तावकानां च भारत ॥ ९४॥

1. ख-ग-घ-ङ-म—इदं पादनवकं नास्ति

सुचिरं बहुधा राजन् भास्करोऽस्तमुपागमत् ॥ ९५

सञ्जयः—

[1]युध्यतामेव तेषां तु भास्करेऽस्तमुपागते ।
सन्ध्या समभवद्धोरा नापश्याम ततो रणम् ॥ ९६
ततो युधिष्ठिरो राजा सन्ध्यां सन्दृश्य भारत ।
बध्यमानं बलं चापि भीष्मेणामित्रघातिना ॥ ९७
[2]निरुत्साहं बलं दृष्ट्वा पीडितं शरविक्षतम् ।
मुक्तशस्त्रं परावृत्तं पलायनपरायणम् ॥ ९८
भीष्मं च युधि संरब्धम् अनुयान्तं महारथम् ।
सोमकांश्च जितान् दृष्ट्वा निरुत्साहान् महारथान् ॥ ९९
निशामुखं च सम्प्रेक्ष्य घोररूपं भयानकम् ।
[3]चिन्तयित्वा महाराजस् ततः परमचिन्तयत् ॥ १००
[4]कथं जयेम भीष्मं वै महाबलपराक्रमम् ।
बुद्धिं स्वशिबिरं गन्तुं चक्रे राजा युधिष्ठिरः ॥ १०१
[5]ततोऽपहारं सैन्यानां चक्रे राजा युधिष्ठिरः ।

---

1. अ-क—नास्तीदमर्धम्
2. ब-ड-म—नास्तीदमर्धम्
3. ख-ग-ब-ड-म—चिन्तयित्वा चिरं राज्ञाम् अपहारमकारयत् । [पाठान्तरम्]
4. ब-ड-म—अर्धद्वयं नास्ति
5. अ-क—नास्तीदमर्धम्

तथैव तव सैन्यानाम् अपहारो ह्यभूत् तदा ॥ १०२
तथाऽपहारं सैन्यानां कृत्वा तत्र महारथाः ।
न्यविशन्त कुरुश्रेष्ठ सङ्ग्रामे शरविक्षताः ॥ १०३
भीष्मस्य समरे कर्म चिन्तयानास्तु पाण्डवाः ।
नालभन्त तदा शान्तिं भृशं भीष्मेण ताडिताः ॥ १०४
भीष्मोऽपि समरे जित्वा पाण्डवान् सृञ्जयैस्सह ।
पूज्यमानस्तव सुतैर् वन्द्यमानश्च भारत ॥ १०५
न्यविशत् कुरुशार्दूलैर् हृष्टरूपैस्समन्ततः ॥ १०५॥
ततो रात्रिस्समभवत् सर्वभूतप्रमोहिनी ॥ १०६
तस्मिन् रात्रिमुखे घोरे पाण्डवा वृष्णिभिस्सह ।
सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ १०७
आत्मनश्श्रेयसे मन्त्रं प्राप्तकालं महाबलाः ।
मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ १०८
[1]हनिष्याम यथा भीष्मं जयेम पृथिवीमिमाम् ॥ १०८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्व्युत्तरशततमोऽध्यायः ॥ १०२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[अस्मिन्नध्याये १०८॥ श्लोकाः]
[ नवमापहारस्समाप्तः ]

---

1. ख-ध-ङ-म—इदमर्धं नास्ति

## ॥ त्र्यधिकशततमोऽध्यायः ॥

सञ्जयः—

ततो युधिष्ठिरो राजा चिन्तयित्वा चिरं नृप ।
वासुदेवं समुद्वीक्ष्य वाक्यमेतदुवाच ह ॥ १

युधिष्ठिरः—

पश्य कृष्ण महात्मानं भीष्मं भीमपराक्रमम् ।
गजं नलवनानीव विमृद्नन्तं बलं मम ॥ २

न चैवैनं महात्मानम् उत्सहामो निरीक्षितुम् ।
[1]मम माधव सैन्येषु वध्यमानेषु तेन वै ॥ ३

[2]कथं योत्स्याम दुर्धर्षं श्रेयो मेऽत्र विधीयताम् ।
त्वमेव गतिरस्माकं नान्यां गतिमुपास्महे ॥ ४

न युद्धं रोचते मह्यं भीष्मेण सह माधव ।
हन्ति भीष्मो महावीरो मम सैन्यं च संयुगे ॥ ५

यथा घोरो महानागस् तक्षको वै विषोल्बणः ।
तथा भीष्मो रणे कृष्ण तीक्ष्णशस्त्रः प्रतापनः ॥ ६

गृहीतचापस्समरे प्रविमुञ्चन् शितान् छरान् ।
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ ७

1. ख-ग-घ-ङ-म—लेलिह्यमानं सैन्येषु विवृद्धमिव पावकम् ।
[पाठान्तरम्]

2. ख-घ-ङ-म—इदमर्धचतुष्टयं नास्ति

वरुणः पाशभृच्चापि सगदो वा धनेश्वरः ।
न तु भीष्मस्सुसङ्क्रुद्धश् शक्यो जेतुं महामृधे ॥ ८
[1]एवं भीष्मं न शक्तास्स्म वयं जेतुं महाहवे ॥ ८॥

सोऽहमेवं गते कृष्ण निमग्नश्शोकसागरे ।
आत्मनो बुद्धिदौर्बल्याद् भीष्ममासाद्य संयुगे ॥ ९॥

वनं यास्यामि दुर्धर्ष श्रेयो वै तत्र मे गतिः ।
न युद्धं रोचते कृष्ण हन्ति भीष्मो हि नस्सदा ॥ १०॥

यथा प्रज्वलितं वह्निं पतङ्गस्समभिद्रवन् ।
एकतो मृत्युमभ्येति तथाऽहं भीष्ममीयिवान् ॥ ११॥

क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातरश्चैव मे शूरास् सायकैर्भृशपीडिताः ॥ १२॥

मत्कृते भ्रातृसौहार्दाद् राज्यभ्रष्टा वनं गताः ।
परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन ॥ १३॥

जीवितं बहु मन्येऽहं जीवितं ह्यद्य दुर्लभम् ।
जीवितस्यावशेषेण चरिष्ये धर्ममुत्तमम् ॥ १४॥

यदि तेऽहमनुग्राह्यो भ्रातृभिस्सह केशव ।
[2]स्वधर्मस्याविरोधेन तदुदाहर केशव ॥ १५॥

1. ख-घ-ङ-म—इदमर्धं नास्ति 2. अ-क—नास्तीदमर्धम्

सञ्जयः—

एतच्छ्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम् ।
प्रत्युवाच ततः कृष्णस् सान्त्वयानो युधिष्ठिरम् ॥ १६॥

श्रीभगवान्—

धर्मपुत्र विषादं त्वं मा कृथास्सत्यसङ्गर ।
यस्य ते भ्रातरश्शूरा दुर्जयाश्शत्रुसूदनाः ॥ १७॥

अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ ।
माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवाश्विनौ ॥ १८॥

मां वा नियुङ्क्ष्व सौहार्दाद् योत्स्ये भीष्मेण पाण्डव ।
त्वत्प्रयुक्तो ह्यहं राजन् किं न कुर्यां महाहवे ॥ १९॥

[1]हनिष्यामि रणे भीष्मम् आहूय पुरुषर्षभ ।
पश्यतां धार्तराष्ट्राणां यदि नेच्छति फल्गुनः ॥ २०॥

यदि भीष्मे हते वीरे जयं पश्यसि पाण्डव ।
हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ॥ २१॥

पश्य मे विक्रमं राजन् महेन्द्रस्येव संयुगे ।
विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ॥ २२॥

यश्शत्रुः पाण्डुपुत्राणां मच्छत्रुस्स न संशयः ।
मदर्था भवदर्थास्ते ये मदीयास्तवैव ते ॥ २३॥

1. अ-क-ख—अर्धचतुष्टयं नास्ति

[1]तव भ्राता मम सखा सम्बन्धी शिष्य एव च ।
मांसान्युत्कृत्य दास्येऽहम् अर्जुनार्थे महीपते ॥ २४॥
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत् ।
एष नस्समयस्तात रमयेम परस्परम् ॥ २५॥
स मां नियुङ्क्ष्व राजेन्द्र यावत् सज्जो भवाम्यहम् ॥ २६
प्रतिज्ञातमुपप्लाव्ये यत् तत् पार्थेन धीमता ।
पातयिष्यामि गाङ्गेयम् इत्युलूकस्य सन्निधौ ॥ २७
परिरक्ष्यं मम कृतं वचः पार्थस्य धीमतः ।
अनुज्ञाते तु पार्थेन मया कार्यं न संशयः ॥ २८
अथवा फल्गुनस्यैष भारः परिमितो रणे ॥ २८॥
निहनिष्यति सङ्ग्रामे भीष्मं परपुरञ्जयम् ।
अशक्यमपि कुर्याद्धि रणे पार्थस्समुद्यतः ॥ २९॥
त्रिदशान् वा समुद्युक्तान् सहितान् दैत्यदानवैः ।
निहन्यादर्जुनस्सङ्ख्ये किमु भीष्मं नराधिप ॥ ३०॥
विपरीतो महावीर्यो गतसत्त्वोऽल्पचेतनः ।
भीष्मश्शान्तनवो नूनं कर्तव्यं नावबुध्यते ॥ ३१॥

युधिष्ठिरः—

एवमेतन्महाबाहो यथा वदसि माधव ।

---

1. ङ—अर्धद्वयं नास्ति

सर्वे ह्येते न पर्याप्तास् तव वेगनिवारणे ॥ ३२॥

नियतं समवाप्स्यामि सर्वमेव यथेप्सितम् ।
यस्य मे पुरुषव्याघ्र भवान् नाथो महाबलः ॥ ३३॥

सेन्द्रानपि रणे देवान् जयेयं जयतां वर ।
त्वया नाथेन गोविन्द किमु भीष्मं महाहवे ॥ ३४॥

न तु त्वामनृतं कर्तुम् उत्सहे स्वार्थगौरवात् ।
अयुध्यमानस्साहाय्यं यथोक्तं कुरु माधव ॥ ३५॥

समयस्तु कृतः कश्चिन्मम भीष्मेण माधव ।
मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कदाचन ॥ ३६॥

दुर्योधनार्थे योत्स्यामि सत्यमेतदिति प्रभो ।
स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव ॥ ३७॥

तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः ।
भवता सहितास्सर्वे पृच्छामो मधुसूदन ॥ ३८॥

तद्वयं सहिता गत्वा भीष्ममाशु नरोत्तमम् ।
रुचिते तव पृच्छामि मन्त्रं वार्ष्णेय मा चिरम् ॥ ३९॥

स वक्ष्यति हितं वाक्यं तथ्यमस्माञ्जनार्दन ।
[1]यथा च वक्ष्यते कृष्ण तथा कर्तास्मि संयुगे ॥ ४०॥

स मे जयस्य दाता च मन्त्रस्य च यतव्रतः ॥ ४१

1. अ-क-ब—नास्तीदमर्धम्

बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ।
तं चेत् पितामहं वृद्धं हन्तुमिच्छामि माधव ॥ ४२
पितुः पितरमिष्टं वै धिगस्तु क्षत्रजीवितम् ॥ ४२॥

सञ्जयः—
ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम् ॥ ४३

श्रीभगवान्—
रोचते मे महाबाहो सततं तव भाषितम् ।
देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्दहेत् ॥ ४४
गम्यतां स्ववधोपायं प्रष्टुं सागरगासुतम् ।
वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः ॥ ४५
ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहम् ॥ ४५॥
प्रणम्य शिरसा चैनं मन्त्रं पृच्छाम भारत ।
स नो दास्यति सन्मन्त्रं तेन योत्स्यामहे परान् ॥ ४६॥

सञ्जयः—
एवं सम्मन्त्र्य ते वीराः पाण्डवाः पाण्डुपूर्वज ।
जग्मुस्ते सहितास्सर्वे वासुदेवश्च वीर्यवान् ॥ ४७॥
विमुक्तकवचास्सर्वे भीष्मस्य सदनं प्रति ॥ ४८
प्रविश्य च ततो भीष्मं शिरोभिः प्रणिपेदिरे ।
पूजयन्तो महाराज पाण्डवा भरतर्षभम् ॥ ४९

प्रणम्य शिरसा चैनं भीष्मं शरणमन्वयुः ।
तानुवाच महाबाहुर् भीष्मः कुरुपितामहः ॥ ५०

भीष्मः—

स्वागतं तव वार्ष्णेय स्वागतं ते धनञ्जय ।
स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ॥ ५१
किं वः कार्यं करोम्यद्य युष्मत्प्रीतिविवर्धनम् ॥ ५१॥
[1]युद्धादन्यत्र हे वत्साः क्रियन्तां मा विशङ्कथ ।
सर्वात्मनाऽपि कर्तास्मि यद्यपि स्यात् सुदुष्करम् ॥ ५२॥

सञ्जयः—

तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः ।
उवाच वाक्यं दीनात्मा धर्मपुत्रो युधिष्ठिरः ॥ ५३॥

युधिष्ठिरः—

कथं जयेम धर्मज्ञ कथं राज्यं लभेमहि ।
प्रजानां च क्षयो न स्यात् कथं तन्मे वद प्रभो ॥ ५४॥
भवान् हि नो वधोपायं ब्रवीतु स्वयमात्मनः ॥ ५५
भवन्तं समरे तात विषहेम कथं वयम् ।
न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह ॥ ५६
मण्डलेनैव धनुषा दृश्यसे संयुगे सदा ॥ ५६॥

1. अ-क-ग-घ-ङ-म—नास्तीदमर्धम्

आददानं सन्दधानं विकर्षन्तं धनुर्न च ।
पश्यामस्त्वां महाबाहो रथे सूर्यमिव स्थितम् ॥ ५७॥

रथाश्वनरनागानां हन्तारं परवीरहन् ।
कथमुत्सहते हन्तुं त्वां पुमान् भरतर्षभ ५८॥

वर्षता शरवर्षाणि महान्ति पुरुषर्षभ ।
क्षयं नीता हि पृतना भवता महती मम ॥ ५९॥

यथा युधि जयेयं त्वां यथा राज्यं भवेन्मम ।
भवेत् सैन्यस्य नो हानिस् तन्मे ब्रूहि पितामह ॥ ६०॥

सञ्जयः—

ततोऽब्रवीच्छान्तनवः पाण्डवान् पाण्डुपूर्वज ॥ ६१

भीष्मः—

न कथञ्चन कौन्तेय मयि जीवति संयुगे ।
युष्मासु दृश्यते वृद्धिस् सत्यमेतद्ब्रवीमि ते ॥ ६२

निर्जिते मयि युद्धे तु ध्रुवं जेष्यसि कौरवान् ।
क्षिप्रं मयि प्रहरत यदीच्छथ रणे जयम् ॥ ६३

अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम् ।
एवं हि सुकृतं मन्ये भवतां विदितोऽस्म्यहम् ॥ ६४

हते मयि हतं सर्वं तस्मादेवं विधीयताम् ॥ ६४॥

युधिष्ठिरः—

ब्रूहि तत् त्वमुपायं नो यथा युद्धे जयेमहि ।
[1]भवन्तं समरे क्रुद्धं दण्डपाणिमिवान्तकम् ॥ ६५॥

शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा ।
न भवान् समरे शक्यस् सेन्द्रैरपि सुरासुरैः ॥ ६६॥

भीष्मः—

[2]सत्यमेतन्महाबाहो यथा वदसि पाण्डव ।
नाहं शक्यो रणे जेतुं सेन्द्रैरपि सुरासुरैः ॥ ६७॥

[3]आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ॥ ६८
न्यस्तशस्त्रं हि मां राजन् हन्युर्युधि महारथाः ॥ ६८॥

निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे ।
द्रवमाणे च भीते च तवास्मीति च वादिनि ॥ ६९॥

[4]स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके ।
अप्रसूते च षण्डे च न युद्धं रोचते मम ॥ ७०॥

इमं च शृणु मे पार्थ सङ्कल्पं पूर्वचिन्तितम् ।
असङ्कल्पध्वजं दृष्ट्वा न युध्येयं कथञ्चन ॥ ७१॥

---

1. अ-क-ग—निहत्य त्वां महीं कृत्स्नां लभेम युधि कौरव ।
कथं जयेम त्वां वीर दण्डहस्तमिवान्तकम् ॥ [अधिकः पाठः]

2. घ—अर्धद्वयं नास्ति　　3. अ-क—नास्तीदमर्धम्

4. ख-घ—स्त्रीजिते स्त्रीप्रधाने च स्त्रीप्रधायिनि धर्मज । [अधिकः पाठः]

य एष द्रौपदो राजंस् तव सैन्ये महारथः ।
शिखण्डी समरामर्षी शूरश्च समितिञ्जयः ॥ ७२॥

यथाऽभवच्च स्त्री पूर्वं पश्चात् पुंस्त्वमुपागतः ।
जानन्ति च भवन्तोऽपि सर्वमेतद्यथातथम् ॥ ७३॥

अर्जुनस्समरे शूरः पुरस्कृत्य शिखिण्डिनम् ।
मामेव विशिखैस्तूर्णम् अभिद्रवतु दंशितः ॥ ७४॥

[1]असङ्कल्पध्वजे तस्मिन् स्त्रीपूर्वे च विशेषतः ।
न प्रहर्तुमभीप्सामि गृहीतेषुः कथञ्चन ॥ ७५॥

तदन्तरं समासाद्य पाण्डवो मां धनञ्जयः ।
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ॥ ७६॥

न तं पश्यामि लोकेषु यो मां हन्यात् समुद्यतम् ।
ऋते कृष्णान्महाभागात् पाण्डवाद्वा धनञ्जयात् ॥ ७७॥

पार्षतं तु पुरोधाय क्लीबमद्य ममाग्रतः ।
मां पातयतु बीभत्सुर् एवं ते विजयो भवेत् ॥ ७८॥

एतत् कुरुष्व कौन्तेय यथोक्तं वचनं मम ।
ततो जेष्यसि सङ्ग्रामे धार्तराष्ट्रान् समागतान् ॥ ७९॥

सञ्जयः—

तेऽनुज्ञातास्ततः पार्था जग्मुस्स्वशिबिरं प्रति ।

1. ब—अर्धचतुष्टयं नास्ति

अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ८०॥

तथोक्तवति गाङ्गेये परलोकाय दीक्षिते ।
अर्जुनो दुःखसन्तप्तस् सव्रीळमिदमब्रवीत् ॥ ८१॥

अर्जुनः—

गुरुणा कुलवृद्धेन कृतप्रज्ञेन धीमता ।
पितामहेन सङ्ग्रामे कथं योत्स्यामि माधव ॥ ८२॥

क्रीडता हि मया बाल्ये वासुदेव महाद्युतिः ।
पांसुरूषितगात्रेण महात्मा परुषीकृतः ॥ ८३॥

तस्याहमधिरुह्याङ्कं बालः किल गदाग्रज ।
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ८४॥

नाहं तातस्तव पितुस् तातोऽस्मि तव भारत ।
इति मामब्रवीद् बाल्ये यस्स वध्यः कथं मया ॥ ८५॥

सैन्यं मे हन्यतां कामं नाहं योत्स्ये महात्मना ।
जयोऽस्तु वा वधो वा मे कथं वा कृष्ण मन्यसे ॥ ८६॥

कथमस्मद्विधः कृष्ण जानन् धर्मं सनातनम् ।
न्यस्तशस्त्रे च वृद्धे च प्रहरेद्धि पितामहे ॥ ८७॥

श्रीभगवान्—

प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे ।
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ॥ ८८॥

पातयैनं रथात् पार्थ वज्रपाणिरिवाचलम् ।
नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ॥ ८९॥

दृष्टमेतत् पुरा देवैर् भविष्यत्यवशस्य ते ।
हन्ता भीष्मस्य पार्थोऽपि इति यन्न तदन्यथा ॥ ९०॥

[1]न हि भीष्मं दुराधर्षं व्यात्ताननमिवान्तकम् ।
त्वदन्यश्शक्नुयाद्धन्तुम् अपि वज्रधरस्स्वयम् ॥ ९१॥

[2]जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम ।
यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ॥ ९२॥

ज्यायांसमपि चेद्वृद्धं गुणैरपि समन्वितम् ।
आततायिनमायान्तं हन्याद्घातकमागतम् ॥ ९३॥

शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनञ्जय ।
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः ॥ ९४॥

अर्जुनः—

शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम् ।
दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्तते ॥ ९५॥

ते वयं प्रमुखे तस्य स्थापयित्वा शिखण्डिनम् ।
गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ॥ ९६॥

---

1. अ-क—नचैनं युयुषव्याघ्रं समरेष्वनिवर्तिनम्। [पाठान्तरम्]
2. ख-घ-ङ-म—भीष्मं प्रति महाबाहो

अहमन्यान् महेष्वासान् वारयिष्यामि सायकैः ।
शिखण्ड्यपि युधां श्रेष्ठो भीष्ममेवाभियास्यति ॥ ९७॥

श्रुतं हि कुरुमुख्यस्य नाहं हन्यां शिखण्डिनम् ।
कन्या ह्येषा पुरा जाता पुरुषस्समपद्यत ॥ ९८॥

सञ्जयः—

अर्जुनस्य वचश्श्रुत्वा भीष्मस्य वधसंयुतम् ।
जहृषुर्हृष्टरोमाणस् सकृष्णाः पाण्डवास्तदा ॥ ९९॥

इत्येवं निश्चयं कृत्वा पाण्डवास्सहमाधवाः ।
अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ॥ १००॥

शयनानि यथाऽर्हाणि भेजिरे पुरुषर्षभाः ॥ १०१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ *
॥ ६४ ॥ भीष्मवधपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[ अस्मिन्नध्याये १०१ श्लोकाः ]

---

* अ-क—नवमापहारः इति वर्तते

## ॥ चतुरधिकशततमोऽध्यायः ॥

भीष्मयुद्धम् ॥ १ ॥ शिखण्डिनो भीष्मेण सह संवादो युद्धसन्नाहश्च ॥

धृतराष्ट्रः—

कथं शिखण्डी गाङ्गेयम् अभ्यवर्तत संयुगे ।
पाण्डवाश्च यथा भीष्मं तन्ममाचक्ष्व सञ्जय ॥ १

सञ्जयः—

ततः प्रभाते विमले सूर्यस्योदयनं प्रति ।
वाद्यमानासु भेरीषु मृदङ्गेष्वाहतेषु च ॥ २

ध्मायमानेषु शङ्खेषु पाण्डरेषु समन्ततः ।
शिखण्डिनं पुरस्कृत्य निर्ययुः पाण्डवा युधि ॥ ३

राजन् कृत्वा महाव्यूहं सर्वशत्रुनिबर्हणम् ।
शिखण्डी सर्वसैन्यानाम् अग्र आसीद्विशां पते ॥ ४

चक्ररक्षौ ततस्तस्य भीमसेनधनञ्जयौ ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्यवान् ॥ ५

सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः ।
धृष्टद्युम्नस्ततः पश्चात् पाञ्चालैरभिरक्षितः ॥ ६

ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभो ।
प्रययौ सिंहनादेन नादयन् भरतर्षभ ॥ ७

विराटस्तु ततः पश्चात् स्वेन सैन्येन संवृतः ।
द्रुपदश्च महाराज ततः पश्चादुपाद्रवत् ॥ ८
केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्यवान् ।
जघनं पालयामासुः पाण्डवेयश्च राक्षसः ॥ ९
एवं व्यूह्य महत् सैन्यं पाण्डवास्तव वाहिनीम् ।
अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा जीवितमात्मनः ॥ १०
तथैव कुरवो राजन् भीष्मं कृत्वा महाबलम् ।
[1]अग्रतस्सर्वसैन्यानां प्रययुः पाण्डवान् प्रति ॥ ११
पुत्रैस्तव दुराधर्षै रक्षितस्सुमहाबलः ।
[2]प्रययौ पाण्डवानीकं भीष्मश्शन्तनुनन्दनः ॥ १२
ततो द्रोणो महेष्वासः पुत्रश्चास्य महाबलः ।
भगदत्तस्ततः पश्चाद् गजानीकेन संवृतः ॥ १३
कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ ॥ १३॥
काम्भोजराजो बलवांस् ततः पश्चात् सुदक्षिणः ।
मागधश्च जयत्सेनस् सौबलश्च बृहद्बलः ॥ १४॥
तथेतरे महेष्वासास् सुशर्मप्रमुखा नृपाः ।
जघनं पालयामासुस् तव सैन्यस्य भारत ॥ १५॥
दिवसे दशमे प्राप्ते भीष्मश्शान्तनवो युधि ।

---

1. ङ-म—अर्धचतुष्टयं नास्ति 2. ख-व—इदमर्धं नास्ति

[1]आसुरानकरोव्द्यूहान् पैशाचानथ राक्षसान् ॥ १६॥
ततः प्रववृते युद्धं तव तेषां च भारत ।
अन्योन्यं निघ्नतां राजन् यमराष्ट्रविवर्धनम् ॥ १७॥
अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
भीष्मं युद्धेऽभ्यवर्तन्त किरन्तो विविधान् शरान् ॥ १८॥
तत्र भारत भीमेन ताडितास्तावकाश्शरैः ।
रुधिरौघपरिक्लिन्नाः परलोकं ययुस्तदा ॥ १९॥
नकुलस्सहदेवश्च सात्यकिश्च महारथः ।
[2]तव सैन्यं समासाद्य पीडयामासुरोजसा ॥ २०॥
ते वध्यमानास्समरे तावका भरतर्षभ ।
नाशक्नुवन् धारयितुं पाण्डवानां महद्बलम् ॥ २१॥
ततस्तु तावकं सैन्यं हन्यमानं समन्ततः ।
सम्प्राद्रवद्दिशो राजन् काल्यमानं महारथैः ॥ २२॥
त्रातारं नाध्यगच्छन्त तावकास्तु विशां पते ।
वध्यमानाश्शितैर्बाणैः पाण्डवैस्सहसृञ्जयैः ॥ २३॥

धृतराष्ट्रः—

पीड्यमानं बलं पार्थैर् दृष्ट्वा भीष्मः पराक्रमी ।

---

1. अ-क-ग—आसुरं च महाव्यूहं चकार सुमहाबलः ।
यमाह नरकादींश्च ह्युशना राक्षसान् प्रति ॥[अधिकः पाठः]

2. ख—इत आरभ्य पञ्चार्धानि न सन्ति

यद्कार्षीद्रणे क्रुद्धस् तन्ममाचक्ष्व सञ्जय ॥ २४॥

तं कथं पाण्डवा युद्धे प्रत्युद्याताः परन्तपाः ।
निघ्नन्तो मामकान् वीरांस् तन्ममाचक्ष्व सञ्जय ॥ २५॥

सञ्जयः—

आचक्षे ते महाराज यद्कार्षीत् पिता तव ।
पीडिते तव पुत्रस्य सैन्ये पाण्डवसृञ्जयैः ॥ २६॥

प्रहृष्टमनसश्शूराः पाण्डवाः पाण्डुपूर्वज ।
अभ्यवर्तन्त युध्यन्तस् तव पुत्रस्य वाहिनीम् ॥ २७॥

तं विनाशं मनुष्येन्द्र नरवारणवाजिनाम् ।
नामृष्यत तदा भीष्मस् सैन्यघातं तदा परैः ॥ २८॥

स पाण्डवान् महेष्वासः पञ्चालान् सहसृञ्जयान् ।
अभ्यद्रवद्दुराधर्षस् त्यक्त्वा जीवितमात्मनः ॥ २९॥

स पाण्डवानां प्रवरान् पञ्च राजन् महारथान् ।
आत्तशस्त्रान् रणे यत्तान् वारयामास सायकैः ॥ ३०॥

नाराचैर्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ।
निजघ्ने समरे क्रुद्धो हस्त्यश्वममितं बहु ॥ ३१॥

रथिनः पातयन् राजन् रथेभ्यः पुरुषर्षभ ।
सादिनश्चाश्वपृष्ठेभ्यः पादातांश्च धरातलात् ॥ ३२॥

गजारोहान् गजेभ्यश्च परेषां विदधद्भयम् ॥ ३३

तमेकं समरे भीष्मं चरमाणं महारथम् ।
पाण्डवास्समवर्तन्त वज्रहस्तमिवासुराः ॥ ३४

शक्राशनिसमस्पर्शान् विमुञ्चन् निशिताञ् छरान् ।
दिक्ष्वदृश्यत सर्वासु घोरं सन्धारयन् वपुः ॥ ३५

मण्डलीकृतमेवास्य नित्यं धनुरदृश्यत ।
सङ्ग्रामे युध्यमानस्य शक्रचापोपमं महत् ॥ ३६

दृष्ट्वा तत् समरे कर्म पुत्रास्तव विशां पते ।
विस्मयं परमं प्राप्ताः पितामहमपूजयन् ॥ ३७

पार्था विमनसो भूत्वा प्रैक्षन्त पितरं तव ।
युध्यमानं रणे शूरं विप्रचित्तिमिवामराः ॥ ३८

न चैनं वारयामासुर् व्यात्ताननमिवान्तकम् ॥ ३८॥

दशमेऽहनि निष्पन्नं रथानीकं शिखण्डिनः ।
अदहन्निशितैर्बाणैः कृष्णवर्त्मेव काननम् ॥ ३९॥

[1]तं शिखण्डी त्रिभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकम् ॥ ४०॥

स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मश्शिखण्डिनम् ।
पुनर्नालोकयत् क्रुद्धः प्रहसन्निदमब्रवीत् ॥ ४१॥

---

1. ङ—अर्धचतुष्टयं नास्ति

भीष्मः—

कामं प्रहर वा मा वा न त्वां योत्स्ये कथञ्चन ।
यैव त्वं विहिता धात्रा सैव त्वं हि शिखण्डिनी ॥ ४२॥

सञ्जयः—

तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्च्छितः ।
उवाच भीष्मं समरे सृक्किणी परिसंलिहन् ॥ ४३॥

शिखण्डी—

जानामि त्वां महाबाहो क्षत्रियाणां भयङ्करम् ।
मया श्रुतं च ते युद्धं जामदग्न्येन वै सह ॥ ४४॥

दिव्यश्च ते प्रभावोऽयं स मया बहुशश्श्रुतः ।
जानन्नपि प्रभावं ते त्वया योत्स्याम्यहं सह ॥ ४५॥

पाण्डवानां प्रियं कुर्वन्नात्मनश्च महाप्रियम् ।
अद्य त्वां योधयिष्यामि रणे भारतसत्तम ॥ ४६॥

कृपां त्यक्त्वा हनिष्यामि शपे सत्येन तेऽग्रतः ।
एतज्ज्ञात्वा वचो मह्यं यत् क्षमं तत् समाचर ॥ ४७॥

कामं युध्यस्व वा मा वा न मे जीवन् विमोक्ष्यसे ।
सुदृष्टः क्रियतामद्य लोकोऽयं कुरुनन्दन ॥ ४८॥

सञ्जयः—

एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्वभिः ।
अविध्यत रणे राजन् प्रतुदन् वाक्छरैर्भृशम् ॥ ४९॥

तस्य तद्वचनं श्रुत्वा सव्यसाची धनञ्जयः ।
कालोऽयमिति निश्चित्य शिखण्डिनमचोदयत् ॥ ५०॥

अर्जुनः—

अहं त्वामनुयास्यामि परान् वित्रासयन् रणे ।
अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमम् ॥ ५१॥

न हि ते संयुगे पीडां कर्तुं शक्तो महाबलः ।
तस्मादद्य महाबाहो वीरं भीष्ममभिद्रव ॥ ५२॥

अहत्वा समरे भीष्मं यदि यास्यसि भारतम् ।
अपहास्योऽस्य लोकस्य भविष्यसि मया सह ॥ ५३॥

नापहास्या यथा वीर भवेम परमाहवे ।
तथा कुरु रणे यत्नं सादयस्व पितामहम् ॥ ५४॥

कुरूंश्च सर्वान् सहितान् यतमानान् महाबलान् ।
अहमावारयिष्यामि सादयस्व पितामहम् ॥ ५५॥

अहं ते रक्षणं युद्धे करिष्यामि परन्तप ।
वारयन् रथिनस्सर्वान् सादयं त्वं पितामहम् ॥ ५६॥

द्रोणं च द्रोणपुत्रं च कृपं च ससुयोधनम् ।
चित्रसेनं विकर्णं च सैन्धवं च जयद्रथम् ॥ ५७॥

विन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ।
भगदत्तं महाशूरं मागधं च बृहद्बलम् ॥ ५८॥

सौमदत्तिं रणे शूरम् आर्श्यश्रृङ्गिं च राक्षसम् ।
त्रिगर्तराजं च रणे सह सर्वैर्महारथैः ॥ ५९॥
अहमावारयिष्यामि सादयस्व पितामहम् ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये ६० श्लोकाः ]

---

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

भीष्मदुर्योधनसंवादः ॥ १ ॥ भीष्मपराक्रमवर्णनम् ॥ २ ॥

---

धृतराष्ट्रः—

कथं शिखण्डी गाङ्गेयम् अभ्यधावत् पितामहम् ।
पाञ्चाल्यस्समरे क्रुद्धो धर्मात्मानं यतव्रतम् ॥ १
केऽरक्षन् पाण्डवा युद्धे शिखण्डिनमुदायुधम् ।
त्वरमाणास्त्वराकाले जिगीषन्तो महारथाः ॥ २
कथं शान्तनवो भीष्मस् स तस्मिन् दशमेऽहनि ।
अयुध्यत महावीर्यैः पाण्डवैस्सह सृञ्जयैः ॥ ३
न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिना ।
कच्चिन्न रथभङ्गोऽस्य धनुर्वाऽस्य व्यशीर्यत ॥ ४

सञ्जयः—

नाशीर्यत धनुस्तस्य रथभङ्गो न चाप्यभूत् ।
युध्यमानस्य सङ्ग्रामे भीष्मस्य भरतर्षभ ॥ ५
निघ्नतस्समरे शत्रून् शरैस्सन्नतपर्वभिः ।
अनेकशतसाहस्रास् तावकानां महारथाः ॥ ६
तथा दन्तिगणा राजन् हयानामयुतानि च ।
अभ्यवर्तन्त युद्धाय पुरस्कृत्य पितामहम् ॥ ७
यथाप्रतिज्ञं कौरव्यस् स चापि समितिञ्जयः ।
पार्थानामकरोद्भीष्मस् सततं समिति क्षयम् ॥ ८
युध्यमानं महेष्वासं विनिघ्नन्तं परान् शरैः ।
पाञ्चालाः पाण्डवैस्सार्धं सर्वतस्समवारयन् ॥ ९
दशमेऽहनि सम्प्राप्ते [1]भीष्मः कालाग्निसन्निभः ।
[2]ददाह समरे वीरान् पाञ्चालान् पाण्डुसैनिकान् ॥ १०
कीर्यमाणं शितैर्बाणैश् शतशोऽथ सहस्रशः ।
न हि भीष्मं महेष्वासं पाण्डवाः पाण्डुपूर्वज ॥ ११
अशक्नुवन् रणे जेतुं पाशहस्तमिवान्तकम् ॥ ११॥
अथोपायान्महाराज सव्यसाची धनञ्जयः ।

---

1. ख-ग—युध्यन्तं परवाहिनीम् घ-ङ-म—ततापं रिपुवाहिनीम्
2. ख-घ-ङ-म—इदमर्धं नास्ति

त्रासयन् रथिनस्सर्वान् बीभत्सुरपराजितः ॥ १२॥

सिंहवद्विनदन्नुच्चैर् धनुर्ज्यां विक्षिपन् मुहुः ।
शरौघान् विसृजन् पार्थो व्यचरत् कालवद्रणे ॥ १३॥

तस्य शब्देन वित्रस्तास् तावका भरतर्षभ ।
सिंहस्येव मृगा राजन् व्यद्रवन्त रणाजिरात् ॥ १४॥

जयन्तं पाण्डवं दृष्ट्वा त्वत्सैन्यं चापि पीडितम् ।
दुर्योधनस्ततो भीष्मम् अब्रवीद्भृशदुःखितः ॥ १५॥

दुर्योधनः—

एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः ।
दहते मामकं सैन्यं कृष्णवर्त्मेव काननम् ॥ १६॥

पश्य सैन्यानि गाङ्गेय द्रवमाणानि सर्वशः ।
पाण्डवेन युधि श्रेष्ठ काल्यमानानि संयुगे ॥ १७॥

यथा पशुगणान् पालस् सङ्कालयति कानने ।
तथेदं मामकं सैन्यं कालयत्येष फल्गुनः ॥ १८॥

धनञ्जयशरैर्भग्नं द्रवमाणमितस्ततः ।
भीमो ह्येष दुराधर्षो विद्रावयति मे बलम् ॥ १९॥

सात्यकिश्चेकितानश्च माद्रीपुत्रौ च पाण्डवौ ।
[1]अभिमन्युश्च विक्रान्तो वाहिनीं दहते मम ॥ २०॥

---

1. घ—अर्धद्वयं नास्ति.

धृष्टद्युम्नस्तथा शूरो राक्षसश्च घटोत्कचः ।
विद्रावयेते सहसा सैन्यं मम महारणे ॥ २१॥

वध्यमानस्य सैन्यस्य सर्वैरेतैर्महाबलैः ।
अन्यां गतिं न पश्यामि स्थिते युद्धे च भारत ॥ २२॥

त्वामृते पुरुषव्याघ्र देवतुल्यपराक्रमम् ॥ २३
पर्याप्तस्तु भवान् क्षिप्रं पीडितानां गतिर्भव ॥ २३॥

सञ्जयः—

एवमुक्तो महाराज पिता देवव्रतस्तव ।
चिन्तयित्वा मुहूर्तं तु कृत्वा निश्चयमात्मनः ॥ २४॥

पुत्रमाश्वासयत् तुभ्यं [1]नृपते शन्तनोस्सुतः ॥ २५

भीष्मः—

दुर्योधन विजानीहि स्थिरो भव विशां पते ।
पातयिष्ये रिपूनन्यान् पाण्डवान् प्रतिपालयन् ॥ २६
प्रतिज्ञातो जयो ह्यद्य पाण्डवानां महात्मनाम् ॥ २६॥

पूर्वकालं तव मया प्रतिज्ञातं महाबल ।
हत्वा दशसहस्राणि क्षत्रियाणां महात्मनाम् ॥ २७॥

सङ्ग्रामादपयास्यामि ह्येतत् कर्म समाहितम् ।
इति तत् कृतवांश्चाहं यथोक्तं भरतर्षभ ॥ २८॥

---

1. घ—क्षत्रियाणां महात्मनाम्—मध्ये पद्याधीनि न सन्ति

अद्य चापि महत् कर्म प्रकरिष्ये यथाबलम् ।
अहं वा निहत[1]स्स्वप्स्ये न हनिष्यामि पाण्डवान् ॥ २९॥

अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः ।
किं पुनर्मर्त्यधर्मेण क्षत्रियेण महाबलाः ॥ ३०॥

अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणं महत् ।
भर्तृपिण्डकृतं राजन् निहतः पृतनामुखे ॥ ३१॥

सञ्जयः—

इत्युक्त्वा भरतश्रेष्ठः क्षत्रियान् प्रहरञ् छरैः ।
आससाद दुराधर्षः पाण्डवानामनीकिनीम् ॥ ३२॥

[2]अकम्पयद्दुराधर्षश् शरैस्सन्नतपर्वभिः ।
अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ ॥ ३३॥

आशीविषमिव क्रुद्धं पाण्डवाः प्रत्यवारयन् ॥ ३४

दशमेऽहनि तस्मिंस्तु दर्शयञ् शक्तिमात्मनः ।
राजञ् शतसहस्राणि सोऽवधीत् कुरुनन्दन ॥ ३५

पाञ्चालानां च ये श्रेष्ठा राजपुत्रा महाबलाः ।
तेषामादत्त तेजांसि जलं सूर्य इवांशुभिः ॥ ३६

हत्वा दशसहस्राणि कुञ्जराणां तरस्विनाम् ।

1. ख-ग-घ-ङ-म—श्रोष्ये हनिष्ये वाऽद्य
2. ख-घ-ङ-म—इदमर्धं नास्ति

सारोहाणां महाराज हयानामयुतं शुभम् ॥ ३७

पूर्णे शतसहस्रे द्वे पत्तीनां च नरोत्तम ॥ ३७॥

प्रजज्वाल रणे भीष्मो द्वितीय इव पावकः ॥ ३८

न चैनं पाण्डवेयानां केचिच्छक्ता निरीक्षितुम् ।
उत्तरां दिशमास्थाय तपन्तमिव भास्करम् ॥ ३९

ते पाण्डवेयास्संरब्धा महेष्वासेन पीडिताः ।
वधायाभ्यद्रवन् भीष्मं सृञ्जयाश्च महारथाः ॥ ४०

स वध्यमानो बहुभिर् भीष्मश्शान्तनवस्तदा ।
अवकीर्णो महेष्वासश् शैलो मेघैरिवावृतः ॥ ४१

पुत्रास्तु तव गाङ्गेयं समन्तात् पर्यवारयन् ।
महत्या सेनया सार्धं ततो युद्धमवर्तत ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

## ॥ षडधिकशततमोऽध्यायः ॥



अर्जुनदुश्शासनयुद्धम् ॥

सञ्जयः—

अर्जुनस्तु रणे राजन् दृष्ट्वा भीष्मस्य विक्रमम् ।
शिखण्डिनमथोवाच समभ्येहि पितामहम् ॥ १

[1]न चापि भीस्त्वया कार्या भीष्मादद्य कथञ्चन ।
अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात् ॥ २

एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ३

[2]धृष्टद्युम्नस्तथा राजन् सौभद्रश्च महारथः ।
अभ्यद्रवेतां गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ४

विराटद्रुपदौ वृद्धौ कुन्तिभोजश्च दंशितः ।
अभ्यद्रवन्त गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ५

नकुलस्सहदेवश्च धर्मराजश्च वीर्यवान् ।
तथेतराणि सैन्यानि समवेतानि भारत ॥ ६

समाद्रवन्त गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ६॥

1. अ-क—हिंसिष्येऽद्य त्वया साकं भीष्ममेव कथञ्चन ।
अहमन्यान् शरैस्तीक्ष्णैर् वारयिष्ये रथोत्तमान् ॥

2. घ—षडर्धानि न सन्ति [पाठान्तरम्]

प्रत्युद्ययुस्तावकाश्च समवेतान् महाबलान् ।
यथाशक्ति यथोत्साहं तन्मे निगदतश्शृणु ॥ ७॥
चित्रसेनो महाराजं चेकितानं समभ्ययात् ।
भीष्मप्रेप्सुं रणे यान्तं [1]वृषं व्याघ्रशिशुर्यथा ॥ ८॥
धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतम् ।
त्वरमाणं रणे यत्तं कृतवर्माऽभ्यवारयत् ॥ ९॥
भीमसेनं रणे यत्तं गाङ्गेयस्य वधैषिणम् ।
त्वरमाणं रणे यत्तस् सौमदत्तिरवारयत् ॥ १०॥
तथैव नकुलं शूरं किरन्तं सायकान् बहून् ।
विकर्णो वारयामास इच्छन् भीष्मस्य जीवितम् ॥ ११॥
सहदेवं तथाऽऽयान्तं राजन् भीष्मरथं प्रति ।
वारयामास सङ्क्रुद्धः कृपश्शारद्वतो युधि ॥ १२॥
राक्षसं घोरकर्माणं भैमसेनिं महाबलम् ।
भीष्मस्य निधनप्रेप्सुं दुर्मुखोऽभ्यद्रवद्बली ॥ १३॥
सात्यकिं समरे क्रुद्धम् आश्यर्श्यृङ्गिर्न्यवारयत् ।
भीष्मस्य वधमिच्छन्तं पाण्डवप्रीतिकाम्यया ॥ १४॥
[2]अभिमन्युं महाराज यान्तं भीष्मरथं प्रति ।

1. अ—इतो द्वादशार्धानि न सन्ति
2. ब—अर्धद्वयं नास्ति

सुदक्षिणो महावीर्यः काम्भोजः प्रत्यवारयत् ॥ १५॥
विराटद्रुपदौ वृद्धौससेनावरिमर्दनौ ।
अश्वत्थामा रणे क्रुद्धो वारयामास भारत ॥ १६॥
तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकाङ्क्षिणम् ।
भारद्वाजो रणे यत्तो धर्मपुत्रमवारयत् ॥ १७॥
अर्जुनं रभसं क्रुद्धं पुरस्कृत्य शिखण्डिनम् ।
भीष्मप्रेप्सुं महाराज तापयन्तं दिशो दश ॥ १८॥
दुश्शासनो महेष्वासो वारयामास संयुगे ॥ १९
अन्ये च तावका योधाः पाण्डवानां महारथान् ।
भीष्मस्याभिमुखान् यातान् वारयामासुराहवे ॥ २०
धृष्टद्युम्नस्तु सैन्यानि [1]प्राक्रोशत पुनः पुनः ॥ २०॥

धृष्टद्युम्नः—

[2]अभिद्रवत संरब्धा भीष्ममेकं महारथम् ।
एषोऽर्जुनो रणे भीष्मं प्रयातः कुरुनन्दनः ॥ २१॥
[3-4]अभिद्रवत माभैष्ट भीष्मो न प्राप्स्यते हि वः ।

---

1. अ-क—तावकानि समन्ततः
2. अ-क-ग-ङ-म—विद्राव्य बहुशस्सङ्ख्ये विश्रान्तश्च पुनः पुनः ।
3. अ-क—नास्तीदमर्धम्   [अधिकः पाठः].
4. अ-क-ग—अभ्यद्रवत सङ्क्रुद्धो वधप्रेप्सुररिन्दमः ।
अभिद्रवन्तं बीभत्सुं दृष्ट्वा भीष्मो महाबलः ॥
नाशक्नोत् प्रतियातुं तं युधि घोरपराक्रमम् ।
कर्तव्यमात्मनः कर्म भीष्मो न प्रत्यपद्यत ॥ [अधिकः पाठः]

अर्जुनं समरे योद्धुं नोत्सहेदपि वासवः ॥ २२॥
किमु भीष्मो रणे वीरा गतसत्त्वोऽल्पजीवितः ॥ २३

सञ्जयः—

इति सेनापतेश्श्रुत्वा पाण्डवानां महारथाः ।
अभ्यद्रवन्त सङ्क्रुद्धा गाङ्गेयस्य रथं प्रति ॥ २४
आगच्छतस्तान् समरे वायोंघानचला इव ।
न्यवारयन्त संहृष्टास्‌ तावकाः पुरुषर्षभाः ॥ २५
दुश्शासनो महाराज भयं त्यक्त्वा महारथः ।
भीष्मस्य जीविताकाङ्क्षी धनञ्जयमुपाद्रवत् ॥ २६
अयोधयच्च समरे तव पुत्रो महारथः ॥ २६॥
तत्राद्भुतमपश्याम चित्ररूपं विशां पते ।
दुश्शासनरथं प्राप्य यत् पार्थो नाभ्यवर्तत ॥ २७॥
यथा वारयते वेला क्षुब्धतोयं महार्णवम् ।
तथैव पाण्डवं क्रुद्धं तव पुत्रो न्यवारयत् ॥ २८॥
उभौ तौ रथिनां श्रेष्ठावुभौ भारत दुर्जयौ ।
उभौ चन्द्रार्कसदृशौ दीप्त्या कान्त्या च भारत ॥ २९॥
तौ तथा जातसंरम्भावन्योन्यवधकाङ्क्षिणौ ।
[1]दुश्शासनार्जुनौ वीरौ वृत्रेन्द्रसमतेजसौ ॥ ३०॥

1. ख-ब-ङ-म—इदमर्धं नास्ति

समीयतुर्महासङ्ख्ये यमशक्रौ यथा पुरा ।
दुश्शासनो महाराज पाण्डवं निशितैस्त्रिभिः ॥ ३१॥
वासुदेवं च विंशत्या ताडयामास सायकैः ॥ ३२
ततोऽर्जुनो जातमन्युर् वार्ष्णेयं वीक्ष्य पीडितम् ।
दुश्शासनं शतेनाजौ नाराचानां समर्पयत् ॥ ३३
ते तस्य कवचं भित्त्वा पपुश्शोणितमाहवे ।
[1]यथैव पन्नगा राजंस् तटाकं तृषितास्तथा ॥ ३४
दुश्शासनस्ततः क्रुद्धः पार्थं विव्याध पञ्चभिः ।
ललाटे भरतश्रेष्ठ शरैस्सन्नतपर्वभिः ॥ ३५
ललाटस्थैस्तु तैर्बाणैश् शुशुभे पाण्डवर्षभः ।
यथा मेरुर्महाराज शृङ्गैरत्यन्तमुच्छ्रितैः ॥ ३६
सोऽतिविद्धो महेष्वासः पुत्रेण तव धन्विना ।
व्यरोचत रणे पार्थः किंशुकः पुष्पवानिव ॥ ३७
दुश्शासनं ततः क्रुद्धः पीडयामास पाण्डवः ।
पर्वणीव सुसङ्क्रुद्धो राहुरुग्रो निशाकरम् ॥ ३८
पीड्यमानो बलवता पुत्रस्तव विशां पते ।
विव्याध समरे पार्थं कङ्कपत्रैश्शिलाशितैः ॥ ३९
तस्य पार्थो धनुश्छित्त्वा त्वरमाणः पराक्रमी ।

1. अ-क—यथैव गङ्गां राजन् वै गोगणास्तृषिता यथा । [पाठान्तरम्]

आजघान ततः पश्चात् पुत्रं ते नवभिश्शरैः ॥ ४०
सोऽन्यत् कार्मुकमादाय भीमस्य प्रमुखे स्थितः ।
अर्जुनं पञ्चविंशत्या बाह्वोरुरसि चार्पयत् ॥ ४१
तस्य क्रुद्धो महाराज पाण्डवश्शत्रुकर्शनः ।
अप्रैषयच्छरान् राजन् यमदण्डोपमान् बहून् ॥ ४२
अप्राप्तानेव तान् बाणांश् चिच्छेद तनयस्तव ।
यतमानस्य पार्थस्य तदद्भुतमिवाभवत् ॥ ४३
पार्थं च निशितैर्बाणैर् अविध्यत् तनयस्तव ॥ ४३॥
ततः क्रुद्धो रणे पार्थश् शरान् सन्धाय कार्मुके ।
प्रेषयामास निशितान् स्वर्णपुङ्खाञ्छिलाशितान् ॥ ४४॥
न्यमज्जंस्ते महाराज तस्य काये महात्मनः ।
यथा हंसा महाराज तटाकं प्राप्य भारत ॥ ४५॥
पीडितश्चापि पुत्रस्ते पाण्डवेन महात्मना ।
हित्वा पार्थरथं तूर्णं भीष्मस्य रथमाश्रयत् ॥ ४६॥
अगाधे मज्जतस्तस्य भीष्मो द्वीपोऽभवत् तदा ॥ ४७
प्रतिलभ्य ततस्सञ्ज्ञां पुत्रस्तव विशां पते ।
अवारयत् ततश्शूरो भूय एव पराक्रमी ॥ ४८
शरैस्सुनिशितैः पार्थं यथा वृत्रः पुरन्दरम् ।
निर्बिभेद महावार्यो विव्यथे च तदाऽर्जुनः ॥ ४९

[1]अर्जुनस्तु सुसङ्क्रुद्धस् तव पुत्रं महाबलम् ।
पुनर्जघान समरे तदद्भुतमिवाऽभवत् ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

---

## ॥ सप्ताधिकशततमोऽध्यायः ॥

---

द्वन्द्वयुद्धम् ॥

---

सञ्जयः—

सात्यकिं रभसं युद्धे भीष्मायाभ्युद्यतं रणे ।
आर्श्यशृङ्गिर्महावीर्यो वारयामास सायकैः ॥ १

माधवस्तु महावीर्यो राक्षसं नवभिश्शरैः ।
आजघान रणे राजन् प्रहसन्निव भारत ॥ २

तथैव राक्षसो राजन् माधवं नवभिश्शरैः ।
अर्दयामास राजेन्द्र सङ्क्रुद्धश्शिनिपुङ्गवम् ॥ ३

शैनेयश्शरसङ्घातान् प्रेषयामास संयुगे ।
राक्षसाय सुसङ्क्रुद्धो माधवः परवीरहा ॥ ४

ततो रक्षो महावीर्यं सात्यकिं सत्यविक्रमम् ।

---

1. ख-ङ-म—इदमर्धद्वयं नास्ति

विव्याध निशितैर्बाणैस् सिंहनादं ननाद च ॥ ५

माधवस्तु भृशं विद्धो राक्षसेन तदा रणे ।
धैर्यमालम्ब्य तेजस्वी जहास च ननाद च ॥ ६

भगदत्तस्ततः क्रुद्धो माधवं निशितैश्शरैः ।
ताडयामास समरे तोत्रैरिव महाद्विपम् ॥ ७

विहाय राक्षसं युद्धे शैनेयो रथिनां वरः ।
प्राग्ज्योतिषाय चिक्षेप शरान् सन्नतपर्वणः ॥ ८

तस्य प्राग्ज्योतिषो राजा माधवस्य महद्धनुः ।
[1]चिच्छेद शितधारेण भल्लेन कृतहस्तवत् ॥ ९

अथान्यद्धनुरादाय वेगवत् परवीरहा ।
भगदत्तं रणे क्रुद्धो विव्याध निशितैश्शरैः ॥ १०

सोऽतिविद्धो महेष्वासस् सृक्किणी परिसंलिहन् ।
शक्तिं कनकवैडूर्यहेमचित्रां तथाऽऽयसीम् ॥ ११

कालदण्डोपमां घोरां प्राहिणोत् सात्यकाय वै ॥ ११॥

तामापतन्तीं सहसा तस्य बाहुबलेरिताम् ।
सात्यकिस्समरे राजन् द्विधा चिच्छेद सायकैः ॥ १२॥

सा हेमविकृता शक्तिर् माधवस्य भुजच्युतैः ।
निपपात शरैश्छिन्ना महोल्केव हतप्रभा ॥ १३॥

1. ख—नाखोदमभेम्

शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशां पते ।
महता रथवंशेन वारयामास माधवम् ॥ १४॥

ततः परिवृतं दृष्ट्वा वार्ष्णेयानां महारथम् ।
दुर्योधनो भृशं क्रुद्धो भ्रातॄन् सर्वानुवाच ह ॥ १५॥

दुर्योधनः—

तथा कुरुत कौरव्या यथा वस्सात्यको युधि ।
न जीवन् प्रतिनिर्याति महतोऽस्माद्रथव्रजात् ॥ १६॥
अस्मिन् हते हतं मन्ये पाण्डवानां महाबलम् ॥ १७

सञ्जयः—

तत् तथेति वचस्तस्य परिगृह्य महारथाः ।
शैनेयं योधयामासुर् भीष्मस्य प्रमुखे तथा ॥ १८

अभिमन्युं तथाऽऽयान्तं भीष्मस्याभ्युद्यतं वधे ।
काम्भोजराजो बलवान् वारयामास भारत ॥ १९

[1]आर्जुनिं नृपतिर्विद्ध्वा शरैस्सन्नतपर्वभिः ।
पुनरेव चतुष्षष्ट्या राजन् विव्याध तं नृप ॥ २०

[2]सुदक्षिणं च समरे पुनर्विव्याध पञ्चभिः ।
सारथिं चास्य नवभिर् इच्छन् भीष्मस्य जीवितम् ॥ २१

तद्युद्धमासीत् सुमहत् तयोः पुरुषसिंहयोः ।

---

1. अ-क—अर्धचतुष्टयं नास्ति　　2. ख—नास्तीदमर्धम्

तथाऽभ्यधावद्गाङ्गेयं शिखण्डी शत्रुतापनः ॥ २२
विराटद्रुपदौ वृद्धौ वारयन्तौ महाचमूम् ।
भीष्मस्य युधि संरब्धौ प्राद्रवेतां महारथौ ॥ २३

अश्वत्थामा रणे क्रुद्धस् समायाद्रथसत्तमः ।
ततः प्रववृते युद्धं [1]तयोस्तस्य च भारत ॥ २४

विराटो दशभिर्भल्लैर् आजघान परन्तपः ।
यतमानं महेष्वासं द्रौणिमाहवशोभिनम् ॥ २५

द्रुपदश्च त्रिभिर्भल्लैर् विव्याध निशितैश्शरैः ।
गुरुपुत्रं समासाद्य भीष्मस्य प्रमुखे स्थितम् ॥ २६

[2]अश्वत्थामा ततस्तौ तु विव्याध निशितैश्शरैः ।
विराटद्रुपदौ वीरौ भीष्मं प्रति समुद्यतौ ॥ २७

तदद्भुतमपश्याम वृद्धयोश्चरितं महत् ।
यद्द्रौणेस्सायकान् घोरान् प्रत्यवारयतां युधि ॥ २८

सहदेवं तथाऽऽयान्तं कृपश्शारद्वतोऽभ्ययात् ।
यथा नागो वने नागं मत्तो मत्तमुपाद्रवत् ॥ २९

1. ख—तुमुलं रोमहर्षणम् ॥ ततो द्रोणसुतं योधान् द्रवमाणं महारणे ।
विसृजन्तं शरान् दृष्ट्वा द्रौणिमाहवशोभिनम् ॥ [इति पाठान्तरम्]
2. घ—विराटद्रुपदौ क्रुद्धौ जघ्नतुस्समरे भृशम् ।
अश्वत्थामा ततस्तौ तु विव्याथ निशितैश्शरैः ।
महात्मनोर्महाराज वृद्धयोश्चरितं महत् । [इति पाठक्रमः]

कृपश्च समरे शूरो माद्रीपुत्रं महारथम् ।
निजघान शरैस्तीक्ष्णैस् सप्तत्या रुक्मभूषितैः ॥ ३०
तस्य माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः ।
अथैनं छिन्नधन्वानं विव्याध निशितैश्शरैः ॥ ३१
सोऽन्यत् कार्मुकमादाय समरे भारसाधनम् ।
माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैश्शरैः ॥ ३२
आजघानोरसि क्रुद्ध इच्छन् भीष्मस्य जीवितम् ।
तथैव पाण्डवो राजन् ब्राह्मणं वेदपारगम् ॥ ३३
आजघान रणे क्रुद्धो भीष्मस्य वधकाङ्क्षया ॥ ३३॥
तयोस्समभवद्युद्धं घोररूपं भयावहम् ॥ ३४
नकुलं तु रणे शूरं विकर्णश्शत्रुतापनः ।
विव्याध सायकैष्षष्ट्या रक्षन् भीष्मं महाबलम् ॥ ३५
नकुलोऽपि भृशं विद्धस् तव पुत्रं नरेश्वर ।
विकर्णं सप्तसप्तत्या निर्बिभेद शिलीमुखैः ॥ ३६
तत्र तौ पुरुषव्याघ्रौ भीष्महेतोः परन्तपौ ।
ततक्षतुस्तदाऽन्योन्यं गोष्ठे गोवृषभाविव ॥ ३७
घटोत्कचं रणे यत्तं निघ्नन्तं तव वाहिनीम् ।
दुर्मुखस्समरे प्रायाद् भीष्महेतोः पराक्रमी ॥ ३८
हैडिम्बं तं रणे राजन् दुर्मुखश्शत्रुतापनः ।

आजघानोरसि क्रुद्धो नवत्या निशितैश्शरैः ॥ ३९

भीमसेनसुतश्चापि दुर्मुखं सुमुखैश्शरैः ।
षष्ट्या वीरो नदन् हृष्टो विव्याध रणमूर्धनि ॥ ४०

धृष्टद्युम्नं ततो यान्तं भीष्मस्य वधकाङ्क्षया ।
हार्दिक्यो वारयामास रक्षन् भीष्मस्य जीवितम् ॥ ४१

हार्दिक्यं पार्षतश्शूरो विद्ध्वा पञ्चभिराशुगैः ।
पुनः पञ्चाशता तूर्णम् आजघान महारथम् ॥ ४२

[1]तथैव पार्षतो राजन् हार्दिक्यं नवभिश्शरैः ।
विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रैरजिह्मगैः ॥ ४३

तयोस्समभवद्युद्धं भीष्महेतोर्महाहवे ।
अन्योन्यं निघ्नतोर्बाणैर् यथा वृत्रमहेन्द्रयोः ॥ ४४

भीमसेनं तथाऽऽयान्तं भीष्मं प्रति महारथम् ।
भूरिश्रवा ययौ तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४५

सौमदत्तिरथो भीमम् आजघान स्तनान्तरे ।
नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे ॥ ४६

उरस्थेन च बाणेन भीमसेनः प्रतापवान् ।
स्कन्दशक्त्या यथा क्रौञ्चो विबभौ नृपते पुरा ॥ ४७

तौ शरान् सूर्यसङ्काशान् कर्मारपरिमार्जितान् ।

1. अ-क—अर्धपञ्चकं नास्ति

अन्योन्यस्य रणे क्रुद्धौ प्रेषयेतां नरोत्तमौ ॥ ४८

कृतप्रतिकृते यत्तौ चेष्टमानौ परस्परम् ॥ ४८॥

[1]भीमो भीष्मवधे यत्तस् सौमदत्तिं महारथम् ।
तदा भीष्मजये गृध्नुस् सौमदत्तिश्च पाण्डवम् ॥ ४९॥

[2]अयोधयेतां समरे तुल्यवेगौ नरोत्तमौ ॥ ५०

युधिष्ठिरं महाराज महत्या सेनया वृतम् ।
भीष्मायाभिमुखं यान्तं भारद्वाजोऽभ्यवारयत् ॥ ५१

तत्र युद्धमभूद्घोरं तयोः पुरुषसिंहयोः ।
द्रोणस्य रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ५२

श्रुत्वा प्रभद्रका राजन् समकम्पन्त भारत ॥ ५२॥

[3]सा सेना महती राजन् पाण्डुपुत्रस्य संयुगे ।
द्रोणेन वारिता यत्ता न चचाल पदात् पदम् ॥ ५३॥

चेकितानं रणे क्रुद्धं भीष्मं प्रति जनेश्वर ।
चित्रसेनस्सुतस्तुभ्यं क्रुद्धश्शूरमुपाद्रवत् ॥ ५४॥

[4]भीष्महेतोः पराक्रान्तं चित्रसेनो महारथः ।
चेकितानं परं शक्त्या योधयामास भारत ॥ ५५॥

---

1. घ—अर्धत्रयं नास्ति
2. अ-क—अन्योन्यं समरे शूरौ जघ्नतुश्च परन्तपौ । [पाठान्तरम्]
3. अ—अर्धषट्कं नास्ति
4. घ-म—अर्धद्वयं नास्ति

[1]तथैव चेकितानोऽपि चित्रसेनमयोधयत् ॥ ५६
तदाऽऽसीत् तुमुलं युद्धं तयोस्तत्र महात्मनोः ॥ ५६॥
अर्जुनो वार्यमाणस्तु बहुशस्तनयेन ते ।
विमुखीकृत्य पुत्रं ते सेनां तव ममर्द ह ॥ ५७॥
दुश्शासनोऽपि परया शक्त्या पार्थमवारयत् ।
[2]कथं भीष्मं न नो हन्याद् इति निश्चित्य भारत ॥ ५८॥
[3]पार्थोऽपि समरे राजन् दुश्शासनमताडयत् ॥ ५९
ताडिते बहुधा पुत्रे पार्थबाणैरजिह्मगैः ।
बभूव व्यथिता सेना दृष्ट्वा पार्थपराक्रमम् ॥ ६०
पुनश्च ताडिता तेन पार्थेनामिततेजसा ।
सा वध्यमाना समरे तव पुत्रस्य वाहिनी ॥ ६१
लोड्यते रथिभिर्वीरैस् तत्र तत्रैव भारत ॥ ६१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[अस्मिन्नध्याये ६१॥ श्लोकाः]

---

1. ख—इदमर्धं नास्ति　2. अ-क-म—नास्तीदमर्धम्
3. घ-ङ-म—चत्वार्यर्धानि न सन्ति

## ॥ अष्टाधिकशततमोऽध्यायः ॥

द्रोणेनाश्वत्थामानं प्रति दुर्निमित्तप्रदर्शनपूर्वकं युद्धानुशासनम् ॥

सञ्जयः—

अथ वीरो महेष्वासो मत्तवारणविक्रमः ।
आददानो महच्चापं मत्तवारणवारणम् ॥ १

विधून्वानो धनुश्श्रेष्ठं द्रावयाणो महारथान् ।
पृतनां पाण्डवेयानां गाहमानो महारथः ॥ २

निमित्तानि निमित्तज्ञस् सर्वतो वीक्ष्य वीर्यवान् ।
प्रतपन्तमनीकाग्रे द्रोणः पुत्रमभाषत ॥ ३

द्रोणः—

अयं स दिवसस्तात यत्र पार्थो महारथः ।
जिघांसुस्समरे भीष्मं परं यत्नं करिष्यति ॥ ४

उत्पतन्तीव मे बाणा धनुः प्रस्फुरतीव मे ।
योगमस्त्राणि नेच्छन्ति क्रूरं मे वर्तते मनः ॥ ५

दिक्ष्वशान्तानि घोराणि व्याहरन्ति मृगद्विजाः ।
नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति ॥ ६

नष्टप्रभ इवादित्यः लोहितास्सर्वतो दिशः ।
रवते चलते भूमिर् अनुष्टनति वाहनम् ॥ ७

गृध्रा वार्ध्रवलाश्चैव व्याहरन्ति मुहुर्मुहुः ॥ ७॥
शिवाश्चाप्यशिवा घोरा वेदयाना महद्भयम् ।
[1]ववाशिरे भयकरा दीप्तास्याभिमुखे रवेः ॥ ८॥
पपात महती चोल्का मध्येनादित्यमण्डलम् ।
सकबन्धस्सपरिघो भानुमानुदतिष्ठत ॥ ९॥
परिवेषस्तथा घोरश् चन्द्रभास्करयोरभूत् ।
वेदयानो भयं घोरं राजमुख्यावकर्तनम् ॥ १०॥
देवतायतनस्थाश्च देवताः कौरवे बले ।
कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च ॥ ११॥
अपसव्यं ग्रहाश्चेरुर् अलक्ष्माणं निशाकरम् ।
अधश्शिराश्च भगवान् उपातिष्ठति चन्द्रमाः ॥ १२॥
वपूंषि च नरेन्द्राणां धार्तराष्ट्रस्य योधिनाम् ।
[2]निष्प्रभाणि च गात्राणि न च भ्राजन्ति दंशिताः ॥ १३॥
सेनयोरुभयोश्चैव समन्ताच्छ्रूयते महान् ।
पाञ्चजन्यस्य निर्घोषो गाण्डीवस्य च निस्स्वनः ॥ १४॥
ध्रुवमभ्येति बीभत्सुर् उत्तमास्त्राणि संयुगे ।
अपास्य च रणे योधान् अभ्येति च पितामहम् ॥ १५॥

1. ख-व-ङ-म—इदमर्धं नास्ति
2. अ-क—स्रवच्छोणितगात्राणि भ्राजन्ते दंशितान्यपि । [पाठान्तरम्]

हृष्यन्ति रोमकूपाणि सीदतीव च मे मनः ।
चिन्तयित्वा महाबाहो भीष्मार्जुनसमागमम् ॥ १६॥
तं चैव निकृतिप्रज्ञं पाञ्चाल्यं पापचेतसम् ।
पुरस्कृत्य रणे पार्थो भीष्मस्यायोधनं गतः ॥ १७॥
अब्रवीच्च पुरा भीष्मो नाहं हन्यां शिखण्डिनम् ।
स्त्री ह्येषा विहिता धात्रा दैवाच्च स पुनः पुमान् ॥ १८॥
असङ्कल्पध्वजश्चैव याज्ञसेनिर्महाबलः ।
न चासङ्कल्पिते तस्मिन् प्रहरेत पितामहः ॥ १९॥
एतद्विचिन्तयानस्य प्रज्ञा सीदति मे भृशम् ।
[1]रिपुं प्रमुखतस्स्थाप्य भीष्मस्य सुमहात्मनः ॥ २०॥
अयं भीष्मं रणे पार्थः पातयेत रथोत्तमात् ॥ २१
युधिष्ठिरस्य च क्रोधो भीष्मार्जुनसमागमः ।
मम चाप्यतिसंरम्भः प्रजानां नाशनं ध्रुवम् ॥ २२
मनस्वी बलवांश्चैव कृतास्त्रो लघुविक्रमः ।
दूरपाती दृढेषुश्च निमित्तज्ञश्च पाण्डवः ॥ २३
[2]अजेयस्समरे चापि देवैरपि सवासवैः ।
बलवान् बुद्धिमांश्चैव तीर्णपारो युधां पतिः ॥ २४
विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः ।

---

1. ख-घ-ङ-म—इदमर्धं नास्ति     2. ख-इदमादि अर्धचतुष्टयं नास्ति

[1]अभ्युद्यतं रणे दृष्ट्वा भैरवास्त्रं च पाण्डवम् ॥ २५
तस्य मार्गं परिहरन् द्रुतं गच्छ पितामहम् ।
पश्य चैतं महाघोरे संयुगे वैशसं महत् ॥ २६
हेमचित्राणि शूराणां महान्ति च शुभानि च ।
कवचानि विशीर्यन्ते शरैस्सन्नतपर्वभिः ॥ २७
छिद्यन्ते च ध्वजाग्राणि तोमराणि धनूंषि च ।
प्रासाश्च विमलास्तीक्ष्णाश् शक्त्यश्च कनकोज्ज्वलाः ॥ २८
वैजयन्त्यश्च नागानां सङ्क्रुद्धेन किरीटिना ॥ २८॥
नायं संरक्षितुं कालः प्राणान् युद्धोपजीविनाम् ।
याहि स्वर्गं पुरस्कृत्य यशसे विजयाय च ॥ २९॥
हयनागरथावर्तां महाघोरां सुदुर्गमाम् ।
रथेन सङ्ग्रामनदीं तरत्येष कपिध्वजः ॥ ३०॥
ब्रह्मण्यता तपो दानं स्वधीतं ज्ञानमेव च ।
यस्मिन् प्रतिष्ठितं पार्थे [2]धर्मपुत्रे युधिष्ठिरे ॥ ३१॥
बलवांस्तादृशगुणो यस्य भ्राता धनञ्जयः ॥ ३२
भीमसेनश्च बलवान् माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवश्च वार्ष्णेयो नाथो यस्य व्यवस्थितः ॥ ३३

1. अ-क—योद्धुमिच्छति धर्मात्मा संयुगेष्वपराजितः । [अधिकः पाठः]
2. ख-घ-ङ-म—इदमादिपादद्वयं नास्ति

तस्यैष मन्युप्रभवो धार्तराष्ट्रस्य दुर्मतेः ।
तपो भावितदेहस्य कोपो दहति वाहिनीम् ॥ ३४
एष संदृश्यते पार्थो वासुदेवव्यपाश्रयः ।
दारयन् सर्वसैन्यानि धार्तराष्ट्राणि सर्वशः ॥ ३५
एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना ।
महोर्मिनद्धं सुमहत् तिमिनेव नदीमुखम् ॥ ३६
हाहाकिलकिलाशब्दश् श्रूयते च चमूमुखे ।
याहि पाण्डवदायादम् अहं योत्स्ये युधिष्ठिरम् ॥ ३७
दुर्गमाभ्यन्तरो राज्ञो व्यूहस्तस्यामितौजसः ।
समुद्रकुक्षिप्रतिमस् सर्वतोऽतिरथैस्स्थितैः ॥ ३८
सात्यकिश्चाभिमन्युश्च धृष्टद्युम्नवृकोदरौ ।
परिरक्षन्ति राजानं यमौ च मनुजेश्वरम् ॥ ३९
उपेन्द्रसदृशश्यामो महासाल इवोच्छ्रितः ।
एष गच्छत्यनीकाग्रे द्वितीय इव फल्गुनः ॥ ४०
उत्तमास्त्राणि चादाय गृहीत्वाऽन्यन्महद्धनुः ।
पार्श्वतो याहि राजानं युध्यस्व च वृकोदरम् ॥ ४१
को हि नेच्छेत् प्रियं पुत्रं जीवन्तं शाश्वतीस्समाः ।
[1]क्षत्रधर्मं समाश्रित्य ततस्त्वां नियुजाम्यहम् ॥ ४२

1. अ-क-ग—इच्छन् न प्रतिशक्नोति प्रतियोद्धुं वृकोदरम् ।
[ अधिकः पाठः ]

एष चापि रणे भीष्मो दहते च महाचमूम् ।
युद्धेऽपि सदृशस्तात यमस्य वरुणस्य च ॥ ४३

सञ्जयः—

[1]पुत्रं समनुशास्यैवं भारद्वाजः प्रतापवान् ।
महारणे महाराज धर्मराजमयोधयत् ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

## ॥ नवाधिकशततमोऽध्यायः ॥

भीमसेनपराक्रमवर्णनम् ॥

सञ्जयः—

भगदत्तः कृपश्शल्यः कृतवर्मा च सात्वतः ।
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः ॥ १

चित्रसेनो विकर्णश्च तथा दुर्मर्षणो युवा ।
दशैते तावका योधा भीमसेनमयोधयन् ॥ २

महत्या सेनया युक्ता नानादेशसमुत्थया ।
भीष्मस्य समरे राजन् प्रार्थयाना महद्यशः ॥ ३

1. अ-क-ख—अर्धद्वयं नास्ति

शल्यस्तु नवभिर्बाणैर् भीमसेनमताडयत् ।
[1]कृतवर्मा त्रिभिर्बाणैः कृपश्च नवभिश्शरैः ॥ ४

[2]चित्रसेनो विकर्णश्च भगदत्तश्च वीर्यवान् ।
दशभिर्दशभिर्बाणैर् भीमसेनमताडयन् ॥ ५
[3]सैन्धवश्च त्रिभिर्बाणैर् भीमसेनमताडयत् ॥ ५॥

[4]विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिश्शरैः ।
[5]दुर्मर्षणश्च विंशत्या बाणैस्सन्नतपर्वभिः ॥ ६॥

[6]स तान् राजन् महाराज भ्राजमानान् पृथक् पृथक् ।
प्रवीरान् सर्वलोकस्य धार्तराष्ट्रान् महारथान् ॥ ७॥
विव्याध निशितैर्बाणैर् भीमसेनो महाबलः ॥ ८

[7]शल्यं च पञ्चविंशत्या विध्वा बाणैस्सुपर्वभिः ।
विव्याध निशितैर्बाणैः कृतवर्माणमष्टभिः ॥ ९

---

1. अ-क-ख—अर्धचतुष्टयं नास्ति 2. ङ-म—अर्धत्रयं नास्ति
3. ग—नास्तीदमर्धम् 4. ङ-म—नास्तीदमर्धम्
5. घ—नास्तीदमर्धम्
6. अ-क-ग—चित्रसेनविकर्णौ च युध्यपीडयतां शरैः ।
निशितैर्बहुभिर्भीमं सैन्धवश्चाप्यपीडयत् ॥
भगदत्तः कृपश्चैव पृथक् पृथगरिन्दमौ ।
समपीडयतां बाणैर् भीमसेनं महाबलम् ॥
भीमोऽपि ताडितः क्रुद्धस् समरे बहुभिर्नृपैः ।
स तैस्सर्वैर्नृपतिभिः पृथक् पृथगयोधयत् ॥ [अधिकः पाठः]
7. ख—इदमर्धं नास्ति

कृपस्य सशरं चापं मध्ये चिच्छेद भारत ।
अथैनं छिन्नधन्वानं पुनर्विव्याध पञ्चभिः ॥ १०
विन्दानुविन्दावावन्त्यौ त्रिभिस्त्रिभिरजिह्मगैः ।
दुर्मर्षणं च विंशत्या चित्रसेनं च पञ्चभिः ॥ ११
विकर्णं दशभिर्बाणैः पञ्चभिश्च जयद्रथम् ।
विद्ध्वा भीमोऽनदद्धृष्टस् सैन्धवं च पुनस्त्रिभिः ॥ १२
अथान्यद्धनुरादाय गौतमो रथिनां वरः ।
भीमं विव्याध संरब्धो दशभिर्निशितैश्शरैः ॥ १३
स विद्धो दशभिर्बाणैस् तोत्रैरिव महाद्विपः ।
[1]व्यनदत् समरे शूरस् सिंहवद्रणमूर्धनि ॥ १४
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
गौतमं ताडयामास शरैर्बहुभिराहवे ॥ १५
सैन्धवस्य तथाऽश्वांश्च सारथिं च त्रिभिश्शरैः ।
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः ॥ १६
हताश्वात् तु रथात् तूर्णम् अवप्लुत्य महारथः ।
शरांश्चिक्षेप निशितान् भीमसेनाय संयुगे ॥ १७
तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद मारिष ।
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः ॥ १८

1. ब-ङ-म—नासीदमर्धम्

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः ॥ १९

अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः ।
महारथान् शरैर्विद्ध्वा वारयित्वा च भारत ॥ २०

विरथं सैन्धवं चक्रे सर्वलोकस्य पश्यतः ।
न तु तं ममृषे शल्यो भीमसेनस्य विक्रमम् ॥ २१

स संधाय शरांस्तीक्ष्णान् कर्मारपरिमार्जितान् ।
भीमं विव्याध समरे तिष्ठ तिष्ठेति चाब्रवीत् ॥ २२

कृपश्च कृतवर्मा च भगदत्तश्च भारत ।
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे ॥ २३

दुर्मर्षणो विकर्णश्च दुष्कर्णश्चापि वीर्यवान् ।
भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिन्दमाः ॥ २४

स तु तान् प्रतिविव्याध पञ्चभिः पञ्चभिश्शरैः ।
शल्यं विव्याध सप्तत्या पुनश्च दशभिश्शरैः ॥ २५

तं शल्यो नवभिर्भित्त्वा पुनर्विव्याध पञ्चभिः ।
[1]सारथिं चास्य भल्लेन पुनर्विव्याध मर्मणि ॥ २६

1. अ–क–ग—स तु तान् प्रतिविव्याध पञ्चभिः पञ्चभिश्शरैः ।
अविध्यत् कृतवर्माणं सप्तभिर्निशितैश्शरैः ॥
भगदत्तं तथा बाणैर् दशभिर्मर्मभेदिभिः ।
निर्बिभेद विशोकं वै तीक्ष्णाग्रैश्च शिलीमुखैः ॥
[ अधिकः पाठः ]

विशोकं वीक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ।
मद्रराजं त्रिभिर्बाणैर् बाह्वोरुरसि चार्पयत् ॥ २७

[1]भगदत्तं तथा वीरः कृतवर्माणमाहवे ।
तथेतरान् महेष्वासांस् त्रिभिस्त्रिभिरजिह्मगैः ॥ २८

ताडयामास समरे सिंहवद्विननाद च ॥ २८॥

तेऽपि यत्ता महेष्वासाः पाण्डवं युद्धदुर्मदाः ।
त्रिभिस्त्रिभिराजिह्माग्रैर् भृशं मर्मस्वताडयन् ॥ २९॥

सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ।
पर्वतो वारिधाराभिर् सिच्यमान इवाम्बुदैः ॥ ३०॥

शल्यं च नवभिर्बाणैर् भृशं विद्ध्वा महायशाः ।
प्राग्ज्योतिषं शतेनाजौ राजन् विव्याध संयुगे ॥ ३१॥

ततस्तु सशरं चापं सात्वतस्य महात्मनः ।
क्षुरप्रेण सुतीक्ष्णेन पातयामास भारत ॥ ३२॥

अथान्यद्धनुरादाय कृतवर्मा वृकोदरम् ।
आजघान भ्रुवोर्मध्ये नाराचेन परन्तपः ॥ ३३॥

विरराज महाबाहुर् ललाटस्थेन पत्रिणा ।
एकशृङ्गो महाराज यथा पर्वतसत्तमः ॥ ३४॥

अथ भीमो महाबाहुः क्रुद्धस्सर्वान् महारथान् ।

---

1. ख-ब-ङ-म—इदमर्धं नास्ति

विमुखीकृत्य बाणौघैस् तस्थौ गिरिरिवाचलः ॥ ३५॥
भीमस्तु समरे विद्ध्वा शल्यं नवभिराशुगैः ।
भगदत्तं त्रिभिश्चैव कृतवर्माणमष्टभिः ॥ ३६॥
द्वाभ्यां द्वाभ्यां तु विव्याध गौतमप्रभृतीन् रथान् ।
ते तु तं समरे राजन् विव्यधुर्निशितैश्शरैः ॥ ३७॥
स तथा भिद्यमानोऽपि सर्वतस्तैर्महारथैः ।
मत्वा तृणेन तांस्तुल्यान् विचचार गतव्यथः ॥ ३८॥
ते चापि रथिनां श्रेष्ठा भीमाय निशिताञ् छरान् ।
प्रेषयामासुरव्यग्राश् शतशोऽथ सहस्रशः ॥ ३९॥
तस्य शक्तिं महावेगां भगदत्तो महारथः ।
चिक्षेप समरे वीरो हेमदण्डां महाधनाम् ॥ ४०॥
तोमरं सैन्धवो राजा पट्टिसं चैव सात्त्वतः ।
शतघ्नीं च कृपो राजञ् छरान् शल्यश्च संयुगे ॥ ४१॥
तथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ।
[1]भीमसेनं समुद्दिश्य प्रेषयामासुरञ्जसा ॥ ४२॥
[2]तोमरं च द्विधा चक्रे क्षुरप्रेणानिलात्मजः ।

1. अ—पञ्चार्धानि न सन्ति
2. अ-क-ग—भगदत्तप्रयुक्तां च शक्तिं छित्त्वा महारथः ।
पातयामास विशिखैस् सा शक्तिरपतद्रणे ॥
[अधिकः पाठः]

पट्टिसं च त्रिभिर्बाणैश् चिच्छेद तिलशस्तथा ॥ ४३॥
स बिभेद शतघ्नीं च नवभिः कङ्कपत्रिभिः ।
[1]शक्तिं चिच्छेद समरे भगदत्तेरितां रणे ॥ ४४॥
तथेतरान् शरान् घोरान् शरैस्सन्नतपर्वभिः ।
[2]भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत् ॥ ४५॥
तांश्च सर्वान् महेष्वासांस् त्रिभिस्त्रिभिरताडयत् ॥ ४६
ततो धनञ्जयस्तत्र वर्तमाने महारणे ।
आजगाम रथेनाजौ भीमं दृष्ट्वा महारथम् ॥ ४७
निघ्नन्तं समरे शत्रून् योधयानं च सायकैः ॥ ४७॥
तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ।
नाशशंसुर्जयं तत्र तावकाः पुरुषर्षभाः ॥ ४८॥
दृष्ट्वाऽर्जुनो रणे भीमं योधयन्तं महारथान् ।
भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनम् ॥ ४९॥
आससाद रणे वीरांस् तावकान् दश भारत ॥ ५०
ये स्म राजन् रणे भीमं योधयन्तो व्यवस्थिताः ।
बीभत्सुस्तानथाविध्यद् भीमस्य हितकाम्यया ॥ ५१
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ॥ ५२

1. अ-क—नास्तीदमर्धम् 2. अ-क—अर्धत्रयं नास्ति

दुर्योधनः—

सुशर्मन् गच्छ शीघ्रं त्वं बलौघैः परिवारितः ।
जहि पाण्डुसुतावेतौ धनञ्जयवृकोदरौ ॥ ५३

सञ्जयः—

तच्छ्रुत्वा शासनं तस्य त्रिगर्तः प्रस्थलाधिपः ।
अभिप्लुत्य रणे भीमम् अर्जुनं चैव धन्विनाम् ॥ ५४
रथैरनेकसाहस्रैः परिवव्रे समन्ततः ॥ ५४॥
ततः प्रववृते युद्धम् अर्जुनस्य परैस्सह ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥॥ ६४ ॥ भीष्मवधपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

## ॥ दशाधिकशततमोऽध्यायः ॥

भीष्मार्जुनपराक्रमवर्णनम् ॥

सञ्जयः—

अर्जुनस्तु रणे शल्यं यतमानं महारथम् ।
छादयामास समरे शरैस्सन्नतपर्वभिः ॥ १
सुशर्माणं कृपं चैव त्रिभिस्त्रिभिरविध्यत ॥ १॥
प्राग्ज्योतिषं च समरे सैन्धवं च जयद्रथम् ।
चित्रसेनं विकर्णं च कृतवर्माणमेव च ॥ २॥

दुर्मर्षणं च राजेन्द्र ह्यावन्त्यौ च महारथौ ।
एकैकं त्रिभिरानच्र्छत् कङ्कबर्हिणवाजितैः ॥ ३॥

शरैरतिरथो युद्धे पीडयन् वाहिनीं तव ॥ ४

जयद्रथो रणे पार्थं विद्ध्वा भारत सायकैः ।
भीमं विव्याध तरसा चित्रसेनरथे स्थितः ॥ ५

शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः ।
विव्याध तं महाबाहुं बहुधा मर्मभेदिभिः ॥ ६

चित्रसेनादयश्चैव पुत्रास्तव विशां पते ।
पञ्चभिः पञ्चभिस्तूर्णं संयुगे निशितैश्शरैः ॥ ७

आजघ्नुरर्जुनं सङ्ख्ये भीमसेनं च मारिष ॥ ७॥

तौ तत्र रथिनां श्रेष्ठौ कौन्तेयौ भरतर्षभौ ।
अपीडयेतां समरे त्रिगर्तानां महाबलम् ॥ ८॥

सुशर्मा च रणे पार्थं विध्वा बहुभिराशुगैः ।
ननाद बलवान् नादं नादयानो नभस्स्थलम् ॥ ९॥

अन्ये च रथिनश्शूरा भीमसेनधनञ्जयौ ।
विव्यधुर्निशितैर्बाणै रुक्मपुङ्खैरजिह्मगैः ॥ १०॥

तेषां तु रथिनां मध्ये कौन्तेयौ रथिनां वरौ ।
क्रीडमानौ रथोदारौ चित्ररूपौ व्यदृश्यताम् ॥ ११॥

[1]गजसङ्घातमध्यस्थौ सिंहाविव मदोद्धतौ ॥ १२
छित्त्वा धनूंषि वीराणां शरांश्च बहुधा रणे ।
पातयामासतुर्वीरौ शिरांसि शतशस्तथा ॥ १३
रथाश्च बहवो भग्ना हयाश्च बहुशो हताः ।
गजाश्च सगजारोहाः पेतुरुर्व्यां महाहवे ॥ १४
रथिनस्सादिनश्चैव तत्र तत्र निषूदिताः ।
दृश्यन्ते बहुधा राजन् वेष्टमानास्समन्ततः ॥ १५
हतैर्गजपदात्योघैर् वाजिभिश्च निषूदितैः ।
रथैश्च बहुधा भग्नैस् समास्तीर्यत मेदिनी ॥ १६
[2]छत्रैश्च बहुधा च्छिन्नैर् ध्वजैश्च विनिपातितैः ।
चामरैर्हेमदण्डैश्च समास्तीर्यत मेदिनी ॥ १७
[3]अङ्कुशैरपविद्धैश्च परिस्तोमैश्च भारत ।
घण्टाभिश्च कशाभिश्च समास्तीर्यत मेदिनी ॥ १८
केयूरैरङ्गदैर्हारै राङ्कवैर्मृदितैस्तथा ।
कुण्डलैर्मणिचित्रैश्च समास्तीर्यत मेदिनी ॥ १९
उष्णीषैरपविद्धैश्च चामरैर्व्यजनैरपि ।

---

1. अ-क—आमिषार्थे गवां मध्ये सिंहाविव बलोत्कटौ । [पाठान्तरम्]
   ब—अर्धचतुष्टयं नास्ति
2. अ-क—नवार्धानि न सन्ति
3. ङ—अर्धचतुष्टयं नास्ति म—अर्धद्वयं नास्ति

तत्र तत्रापविद्धैश्च बाहुभिश्चन्दनोक्षितैः ॥ २०

ऊरुभिश्च नरेन्द्राणां समास्तीर्येत मेदिनी । २०॥

तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमम् ॥

शरैस्संवार्य तान् वीरान् यज्जघान बलं तव ॥ २१॥

पुत्रास्तु तव तं दृष्ट्वा भीमार्जुनसमागमम् ।

गाङ्गेयस्य रथाभ्याशम् उपजग्मुर्महाहवे ॥ २२॥

कृपश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।

विन्दानुविन्दावावन्त्यौ न जहुस्संयुगेऽर्जुनम् ॥ २३॥

ततो भीमो महाबाहुः फल्गुनश्च महाबलः ।

कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे ॥ २४॥

ततो बर्हिणवाजानाम् अयुतान्यर्बुदानि च ।

धनञ्जयरथे तूर्णं पातयन्ति स्म पार्थिवाः ॥ २५॥

ततस्तान् शरजालेन सन्निवार्य महारथान् ।

पार्थस्समन्तात् समरे प्रेषयामास मृत्यवे ॥ २६॥

शल्यश्च समरे जिष्णुं क्रीडन्निव महारथः ।

आजघानोरसि क्रुद्धो भल्लैस्सन्नतपर्वभिः ॥ २७॥

[1]तस्य पार्थो धनुश्छित्त्वा हस्तावापं च पञ्चभिः ।

अथैनं सायकैस्तीक्ष्णैर् भृशं विव्याध मर्मणि ॥ २८॥

---

1. अ-क—अष्टाधीनि न सन्ति

अथान्यद्धनुरादाय समरे भारसाधनम् ।
मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः ॥ २९॥
त्रिभिर्गाण्डीवधन्वानं वासुदेवं च पञ्चभिः ।
[1]भीमसेनं च नवभिर् बाह्वोरुरसि चार्पयत् ॥ ३०॥
ततो द्रोणो महाराज मागधश्च महारथः ।
दुर्योधनसमादिष्टौ तं देशमुपजग्मतुः ॥ ३१॥
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः ।
कौरव्यस्य महासेनं जघ्नतुस्सुमहारथौ ॥ ३२॥
जयत्सेनस्तु समरे भीमं भीमायुधं युधि ।
विव्याध निशितैर्बाणैर् अष्टभिर्भरतर्षभ ॥ ३३॥
तं भीमो दशभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
सारथिं चास्य भल्लेन रथनीडादपाहरत् ॥ ३४॥
उद्भ्रांतैस्तुरगैस्सोऽथ द्रवमाणैस्समन्ततः ।
मागधोऽपसृतो राजा सर्वसैन्यस्य पश्यतः ॥ ३५॥
द्रोणोऽपि विवरं दृष्ट्वा भीमसेनं शिलीमुखैः ।
विव्याध निशितैर्बाणैः पञ्चभिष्षट्भिरायसैः ॥ ३६॥
तं भीमस्समरक्रुद्धो गुरुं पितृसमं रणे ।
विव्याध नवभिर्भल्लैस् तथा षष्ट्या च भारत ॥ ३७॥

1. ब—अर्धद्वयं नास्ति

अर्जुनस्तु सुशर्माणं विद्ध्वा बहुभिरायसैः ।
व्यधमत् तस्य सैन्यानि महाभ्राणि यथाऽनिलः ॥ ३८॥

ततो भीष्मश्च राजा च कौसल्यश्च बृहद्बलः ।
[1]अभ्यवर्तन्त सङ्क्रुद्धा भीमसेनधनञ्जयौ ॥ ३९॥

तथैव पाण्डवाश्शूरा धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन् रणे भीष्मं व्यादितास्यमिवान्तकम् ॥ ४०॥

शिखण्डी तु समासाद्य भारतानां पितामहम् ।
अभ्यद्रवत संहृष्टो भयं त्यक्त्वा यतव्रतम् ॥ ४१॥

युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
अयोधयन् रणे भीष्मं सहितास्सर्वसृञ्जयैः ॥ ४२॥

तथैव तावकास्सर्वे पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान् पार्थान् योधयन्ति स्म संयुगे ॥ ४३॥

ततः प्रववृते युद्धं कौरवाणां भयावहम् ।
तत्र पाण्डुसुतैस्सार्धं भीष्मस्य विजयं प्रति ॥ ४४॥

तावकानां रणे भीष्मः प्लव आसीद्विशां पते ।
तत्र हि द्यूत आसक्तो विजयायेतराय वा ॥ ४५॥

[2]धृष्टद्युम्नो महाराज सर्वसैन्यान्यचोदयत् ॥ ४६

---

1. अ-क-ख-ग—उभौ चातिबलौ वीरौ सङ्क्रुद्धौ चाभ्यवर्तताम् । [अधिकः पाठः]

2. अ-क-ग—परस्परं युयुधिरे त्यक्तदेहाभिमानिनः ॥ [अधिकः पाठः]

धृष्टद्युम्नः—

अभ्यद्रवत गाङ्गेयं मा भैष्ट कुरुसत्तमम् ॥ ४६॥

सञ्जयः—

सेनापतिवचश्श्रुत्वा पाण्डवानां वरूथिनी ।
भीष्ममेवाभ्ययात् तूर्णं प्राणांस्त्यक्त्वा महाहवे ॥ ४७॥

भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम् ।
आपतन्तीं महाराज वेलामिव महोदधिः ॥ ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः ]

---

## ॥ एकादशाधिकशततमोऽध्यायः ॥

युद्धे विरक्तेन भीष्मेण युधिष्ठिरं प्रति स्ववधोद्यमचोदना ॥

---

धृतराष्ट्रः—

कथं शान्तनवो भीष्मो दशमेऽहनि सञ्जय ।
अयुध्यत महावीर्यैः पाण्डवैस्सहसृञ्जयैः ॥ १

कुरवश्च कथं युद्धे पाण्डवान् प्रत्यवारयन् ।
आचक्ष्व मे यथायुद्धं भीष्मस्याहवशोभिनः ॥ २

सञ्जयः—

कुरवः पाण्डवैस्सार्धं यथाऽयुध्यन्त भारत ।
यथा च तद्भूद्युद्धं तत् ते वक्ष्यामि शृण्वतः ॥ ३

प्रेषिताः परलोकाय परमास्त्रैः किरीटिना ।
अहन्यहनि सम्प्राप्ते तावकानां महारथाः ॥ ४

यथाप्रतिज्ञं कौरव्यस् स चापि समितिञ्जयः ।
पार्थानामकरोद्भीष्मस् सततं समिति क्षयम् ॥ ५

[1]कुरुभिस्सहितं भीष्मं युध्यमानं महारथम् ।
अर्जुनं च सपाञ्चाल्यं दृष्ट्वा संशयिता जनाः ॥ ६

दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे ।
अवर्तत महारौद्रस् सततं समिति क्षयः ॥ ७

तस्मिन्नयुतशो राजन् भूयश्चापि परन्तपः ।
भीष्मश्शान्तनवो योधान् जघान परमास्त्रवित् ॥ ८

येषामज्ञातकल्पानि नामगोत्राणि पार्थिव ।
ते हतास्तत्र भीष्मेण सर्वे शूरेण संयुगे ॥ ९

दशाहानि तथा तप्त्वा भीष्मः पाण्डववाहिनीम् ।
निरविद्यत धर्मात्मा जीविते स परन्तपः ॥ १०

स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखं रणे ।

1. क—अर्धचतुष्टयं नास्ति

न हन्यां मानवश्रेष्ठान् सङ्ग्रामेऽभिमुखानिति ॥ ११
चिन्तयित्वा महाबाहुः पिता देवव्रतस्तव ।
अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ॥ १२

भीष्मः—

युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
शृणु मे वचनं तात धर्म्यं स्वर्ग्यं च जल्पतः ॥ १३
निर्विण्णोऽस्मि भृशं तात देहेनानेन भारत ।
घ्नतश्च मे गतः कालस् सुबहून् प्राणिनो रणे ॥ १४
तस्मात् पार्थं पुरोधाय पाञ्चाल्यान् सृञ्जयांस्तथा ।
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ १५

सञ्जयः—

तस्य तन्मतमाज्ञाय पाण्डवस्सत्यदर्शिनः ।
भीष्मं प्रति ययुर्यत्तास् सङ्ग्रामे सह सृञ्जयैः ॥ १६
धृष्टद्युम्नस्ततो राजन् पाण्डवश्च युधिष्ठिरः ।
श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्बलम् ॥ १७

धृष्टद्युम्नयुधिष्ठिरौ—

अभिद्रवत युद्ध्यध्वं भीष्मं जयत संयुगे ।
रक्षितास्सत्यसन्धेन जिष्णुना रिपुजिष्णुना ॥ १८
अयं चापि महेष्वासः पार्षतो वाहिनीपतिः ।

भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ १९
न वो भीष्मभयं किञ्चिद् अस्त्वद्य युधि सृञ्जयाः ।
ध्रुवं भीष्मं वधिष्यामः पुरस्कृत्य शिखण्डिनम् ॥ २०
[1]तथा तु समयं कृत्वा दशमेऽहनि पाण्डवाः ।
ब्रह्मलोकं जेतुकामास् सञ्जग्मुः क्रोधमूर्च्छिताः ॥ २१
[2]शिखण्डिनं पुरस्कृत्य पाण्डवं च धनञ्जयम् ।
भीष्मस्य पातने यत्नं परमं ते समास्थिताः ॥ २२
[3]ततस्तव सुतादिष्टा नानाजनपदेश्वराः ।
द्रोणेन सहपुत्रेण सहसेना महाबलाः ॥ २३
दुश्शासनश्च बलवान् सर्वैस्सह सहोदरैः ।
भीष्मं समरमध्यस्थं पालयाञ्चक्रिरे तदा ॥ २४
ततस्तु तावकाश्शूराः पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान् पार्थान् योधयामासुराहवे ॥ २५
चेदिभिस्सहपाञ्चालैस् सहितो वानरध्वजः ।
ययौ शान्तनवं भीष्मं पुरस्कृत्य शिखण्डिनम् ॥ २६
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम् ।
युधामन्युस्सहामात्यं दुर्योधनमयोधयत् ॥ २७
विराटस्तु सहानीकस् सहानीकं जयद्रथम् ।

---

1. अ-क—नास्तीदमर्धम् 2. अ-क—नास्तीदमर्धम्
3. अ-क—पाञ्चाल्यं च पुरस्कृत्य पाण्डवं च धनञ्जयम् । [अधिकः पाठः]

वृद्धक्षत्रस्य दायादम् आससाद परन्तपः ॥ २८

मद्रराजं महेष्वासं सह सैन्यैर्युधिष्ठिरः ।
भीमसेनाभिगुप्तस्तु गजानीकमुपाद्रवत् ॥ २९

अप्रधृष्यमनावार्यं सर्वशस्त्रभृतां वरम् ।
द्रोणं प्रति ययौ यत्तः पाञ्चाल्यस्सह सोमकैः ॥ ३०

कर्णिकारध्वजं चापि सिंहकेतुररिन्दमः ।
प्रत्युज्जगाम सौभद्रं राजपुत्रो बृहद्बलः ॥ ३१

शिखण्डिनं च पुत्रास्ते पाण्डवं च धनञ्जयम् ।
राजभिस्समरे सार्धम् अभिपेतुर्जिघांसवः ॥ ३२

तस्मिन्नतिभये भीमे सेनयोर्वै पराक्रमे ।
सम्प्रधावत्स्वनीकेषु मेदिनी समकम्पत ॥ ३३

[1]तान्यनीकान्यनीकेषु समयुध्यन्त भारत ।
तावकानां परेषां च दृष्ट्वा शान्तनवं रणे ॥ ३४

ततस्तेषां प्रयतताम् अन्योन्यमभिधावताम् ।
प्रादुरासीन्महाञ् शब्दो दिक्षु सर्वासु भारत ॥ ३५

शङ्खदुन्दुभिनिर्घोषो वारणानां च बृंहितम् ।
सिंहनादश्च सैन्यानां दारुणस्समपद्यत ॥ ३६

[2]या तु सर्वनरेन्द्राणां चन्द्रार्कसदृशप्रभा ।

---

1. अ-क—नास्तीदमर्धम्　　2. अ-क—नास्तीदमर्धद्वयम्

हाराङ्गदकिरीटेषु निष्प्रभा समपद्यत ॥ ३७

रजोमेघाश्च सञ्जज्ञुश् शस्त्रविद्युद्भिरावृताः ।
धनुषां चापि निर्घोषो दारुणस्समपद्यत ॥ ३८

बाणशङ्खप्रणादाश्च भेरीणां च महास्वनाः ।
रथघोषाश्च सञ्जज्ञुस् सेनयोरुभयोरपि ॥ ३९

प्रासशक्त्यष्टिसङ्घैश्च बाणौघैश्च समाकुलम् ।
निष्प्रमाणमिवाकाशं सेनयोस्समपद्यत ॥ ४०

[1-2]अन्योन्यं रथिनः पेतुर् वाजिनश्च महाहवे ।
कुञ्जराः कुञ्जराञ्जघ्नुः पादातांश्च पदातयः ॥ ४१

तदासीत् सुमहद्युद्धं कुरूणां पाण्डवैस्सह ।
भीष्महेतोर्नरव्याघ्र श्येनयोरामिषं यथा ॥ ४२

तयोस्समागमो घोरो बभूव युधि भारत ।
अन्योन्यस्य वधार्थाय जिगीषूणां रणाजिरे ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ६४ ॥ भीष्मवधपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[ अस्मिन्नध्याये ४३ श्लोकाः ]

---

1. अ-क-ग—ये च तव नरेन्द्राश्च ह्यन्योन्यं धीरचेतसः ।
निजघ्नुस्समरे शूरास् तव तेषां महाबलाः ॥
रथिनो रथिनो जघ्नुस् तुरगानश्वसादिनः ॥

2. अ-क—नासीदमर्धम् [अधिकः पाठः]

## ॥ द्वादशोत्तरशततमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

सञ्जयः—

[1]अभिमन्युर्महाराज तव पुत्रमयोधयत् ।
महत्या सेनया युक्तो भीष्महेतोः पराक्रमी ॥ १
दुर्योधनो रणे कार्ष्णिं नवभिर्नतपर्वभिः ।
आजघानोरसि क्रुद्धः पुनश्चैनं त्रिभिश्शरैः ॥ २
तस्य शक्तिं रणे कार्ष्णिर् मृत्योर्जिह्वामिवायसीम् ।
प्रेषयामास सङ्क्रुद्धो दुर्योधनरथं प्रति ॥ ३
तामापतन्तीं सहसा घोररूपां विशां पते ।
द्विधा चिच्छेद पुत्रस्ते क्षुरप्रेण महारथः ॥ ४
तां शक्तिं पतितां दृष्ट्वा कार्ष्णिः परमकोपनः ।
दुर्योधनं त्रिभिर्बाणैर् बाह्वोरुरसि चार्पयत् ॥ ५
पुनश्चैनं शरैर्घोरैर् आजघान स्तनान्तरे ।
दशभिर्भरतश्रेष्ठ दुर्योधनममर्षणम् ॥ ६
तद्युद्धमभवद्घोरं चित्ररूपं च भारत ।
ईक्षितृप्रीतिजननं सर्वपार्थिवपूजितम् ॥ ७

1. ख—तयोस्समागमो घोरो बभूव युधि भारत । [अधिकः पाठः]

भीष्मस्य निधनार्थाय पार्थस्य विजयाय च ।
युयुधाते रणे वीरौ सौभद्रकुरुपुङ्गवौ ॥ ८

[1]सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुङ्गवः ।
आजघानोरसि क्रुद्धो नाराचेन परन्तपः ॥ ९

शैनेयोऽपि गुरोः पुत्रं सर्वमर्मसु भारत ।
अताडयदमेयात्मा नवभिः कङ्कपत्रिभिः ॥ १०

अश्वत्थामा तु समरे सात्यकिं नवभिश्शरैः ।
[2-3]त्रिंशता च पुनस्तूर्णं बाह्वोरुरसि चार्पयत् ॥ ११

सोऽतिविद्धो महेष्वासो द्रोणपुत्रेण सात्यकिः ।
द्रोणपुत्रं त्रिभिर्बाणैर् आजघान महायशाः ॥ १२

पौरवो धृष्टकेतुं तं शरैरासाद्य संयुगे ।
व्यदारयत् तदा राजन् महेष्वासं महारथम् ॥ १३

तथैव पौरवं युद्धे धृष्टकेतुर्महारथः ।
त्रिंशता निशितैर्बाणैर् विव्याध स महाभुजम् ॥ १४

पौरवस्तु धनुश्छित्त्वा धृष्टकेतोर्महारथः ।

---

1. अ-क-ग—दुर्योधनस्य साह्यार्थम् अश्वत्थामाऽऽगमत्तदा ।
[अधिकः पाठः]
2. अ-क-ग—सुपुङ्खैर्निशितैर्बाणैर् विव्याध सुमहौजसम् ।
पौरवस्तु धनुश्छित्त्वा धृष्टकेतोर्महारथः ॥ [अधिकः पाठः]
3. अ-क-द्वतः—सार्धसप्तसप्ततितमश्लोकपर्यन्ताः ग्रन्था न सन्ति

ननाद बलवान्नादं विव्याध निशितैश्शरैः ॥ १५

सोऽन्यत् कार्मुकमादाय पौरवं निशितैश्शरैः ।
आजघान महाराज त्रिसप्तत्या शिलीमुखैः ॥ १६

तौ तु तत्र महेष्वासौ महात्मानौ महारथौ ।
महता शरवर्षेण परस्परमवर्षताम् ॥ १७

अन्योन्यस्य धनुश्छित्त्वा हयान् हत्वा च भारत ।
विरथावसियुद्धाय सङ्गतौ तौ महारथौ ॥ १८

आर्षभे चर्मणी चित्रे शतचन्द्रपरिष्कृते ।
तारकाशतचित्रे च निस्त्रिंशौ च महाप्रभौ ॥ १९

प्रगृह्य विपुलौ राजंस् तावन्योन्यमभिद्रुतौ ।
वाशितासङ्गमे यत्तौ सिंहाविव महावने ॥ २०

मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
चेरतुर्दर्शयन्तौ तौ प्रार्थयानौ परस्परम् ॥ २१

पौरवो धृष्टकेतुं च शङ्खदेशे वरासिना ।
[1]तावन्योन्यं महाराज समासाद्य महारणे ॥ २२

अन्योन्यवेगाभिहतौ निपेततुररिन्दमौ ॥ २३॥

---

1. ख-म—ताडयामास सङ्क्रुद्धस् तिष्ठ तिष्ठेति चाब्रवीत् ।
चेदिराजोऽपि समरे पौरवं पुरुषर्षभ ॥
आजघान शिताग्रेण जत्रुदेशे वरासिना ॥     [अधिकः पाठः]

ततस्त्वरथमारोप्य पौरवं तनयस्तव ।
जयत्सेनो रथेनाजावपोवाह रणाजिरात् ॥ २३॥
धृष्टकेतुं च समरे माद्रीपुत्रः प्रतापवान् ।
अपोवाह रणे राजन् सहदेवः पराक्रमी ॥ २४॥
सहदेवस्सुशर्माणं विद्ध्वा दशभिराशुगैः ।
पुनर्विव्याध तं षष्ट्या पुनश्च नवभिश्शरैः ॥ २५॥
सुशर्मा तु रणे क्रुद्धस् तव पुत्रं विशां पते ।
दशभिर्दशभिश्चैव विव्याध निशितैश्शरैः ॥ २६॥
चित्रसेनश्च तं राजन् विंशत्या नतपर्वभिः ।
आजघान रणे क्रुद्धस् स च तं प्रत्यविध्यत ॥ २७॥
भीमस्य समरे राजन् यशो मानं च वर्धयन् ।
सौभद्रो राजपुत्रं च बृहद्बलमयोधयत् ॥ २८॥
पार्थहेतोः पराक्रान्तो भीष्मस्य निधनं प्रति ।
आर्जुनिं कोसलेन्द्रस्तु विद्ध्वा नवभिरायसैः ॥ २९॥
पुनर्विव्याध सप्तत्या शरैस्सन्नतपर्वभिः ॥ ३०
बृहद्बलं च सौभद्रो विद्ध्वा पञ्चभिरायसैः ।
नाकम्पयत सङ्ग्रामे विद्ध्वा तं निशितैश्शरैः ॥ ३१
कौसल्यश्च पुनश्चापि धनुश्चिच्छेद फाल्गुनेः ।
आजघान शरैश्चापि त्रिंशद्भिः कङ्कपत्रिभिः ॥ ३२

सोऽन्यत् कार्मुकमादाय राजपुत्रं बृहद्बलम् ।
फाल्गुनिस्समरे क्रुद्धो विव्याध निशितैश्शरैः ॥ ३३

[1]युद्धं तयोस्समभवद् भीष्महेतोः परन्तप ।
संरब्धयोर्महाराज समरे चित्रयोधिनोः ॥ ३४

यथा देवासुरे युद्धे बलवासवयोरभूत् ॥ ३४॥

भीमसेनो गजानीकं योधयन् बह्वशोभत ।
यथा शक्रो वज्रपाणिर् दारयन् पर्वतोत्तमान् ॥ ३५॥

ते वध्यमाना भीमेन मातङ्गा गिरिसन्निभाः ।
निपेतुरुर्व्यां सहसा नादयन्तो वसुन्धराम् ॥ ३६॥

गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः ।
विरेजुर्वसुधां प्राप्य विकीर्णा इव पर्वताः ॥ ३७॥

युधिष्ठिरो महाराज मद्रराजं महाहवे ।
महत्या सेनया युक्तं पीडयामास सङ्गतम् ॥ ३८॥

मद्रेश्वरश्च समरे धर्मपुत्रं महारथम् ।
पीडयामास सङ्क्रुद्धो भीष्महेतोः पराक्रमी ॥ ३९॥

विराटं सैन्धवो राजा विद्ध्वा सन्नतपर्वभिः ।
नवभिस्सायकैस्तीक्ष्णैस् त्रिंशता पुनरर्पयत् ॥ ४०॥

विराटश्च महाराज सैन्धवं वाहिनीमुखे ।

---

1. ख—कौसलश्च पुनश्चापि धनुश्चिच्छेद फाल्गुनेः ।  [अधिकः पाठः]

[1]त्रिंशता निशितैर्बाणैर् आजघान स्तनान्तरे ॥ ४१॥

चित्रकार्मुकनिस्त्रिंशौ चित्रवर्मायुधध्वजौ ।
रेजतुश्चित्ररूपौ तौ सङ्ग्रामे मात्स्यसैन्धवौ ॥ ४२॥

[2]द्रोणः पाञ्चालपुत्रेण समागम्य महारणे ।
महासमुदयं चक्रे शरैस्सन्नतपर्वभिः ॥ ४३॥

ततो द्रोणो महाबाहुर् पार्षतस्य महद्धनुः ।
छित्त्वा पञ्चशतेषूंश्च पार्षतं प्रति सृष्टवान् ॥ ४४॥

सोऽन्यत् कार्मुकमादाय पार्षतः परवीरहा ।
द्रोणस्य मिषतो युद्धे प्रेषयामास सायकान् ॥ ४५॥

तान् शरान् शरसङ्घैश्च सन्निवार्य महारथः ।
द्रोणो द्रुपदपुत्राय प्राहिणोत् पञ्च सायकान् ॥ ४६॥

तस्य क्रुद्धो महाराज पार्षतः परवीरहा ।
द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ॥ ४७॥

तामापतन्तीं सहसा हेमपट्टविभूषिताम् ।
शरैः पञ्चाशता द्रोणो वारयामास संयुगे ॥ ४८॥

सा छिन्ना बहुधा राजन् द्रोणचापच्युतैश्शरैः ।
चूर्णीकृता विशीर्यन्ती पपात वसुधातले ॥ ४९॥

गदां विनिहतां दृष्ट्वा पार्षतश्शत्रुसूदनः ।

---

1. ख-ग-घ-ङ—त्रिंशद्भिर् 2. ग—नास्तीदमर्धम्

द्रोणाय शक्तिं चिक्षेप सर्वपारशवीं शुभाम् ॥ ५०॥
तां द्रोणो नवभिर्बाणैश् चिच्छेद युधि भारत ।
पार्षतं च महेष्वासं पीडयामास संयुगे ॥ ५१॥
एवमेतन्महायुद्धं द्रोणपार्षतयोरभूत् ।
भीष्मं प्रति महाराज घोररूपं भयानकम् ॥ ५२॥
अर्जुनः प्राप्य गाङ्गेयं पीडयन् निशितैश्शरैः ।
अभ्यद्रवत संयत्तो वने मत्तमिव द्विपम् ॥ ५३॥
प्रत्युद्ययौ च तं पार्थं भगदत्तः प्रतापवान् ।
त्रिधा भिन्नेन नागेन मदान्धेन महाबलः ॥ ५४॥
तमापतन्तं सहसा महेन्द्रगजसन्निभम् ।
परं यत्नं समास्थाय बीभत्सुः प्रत्यविध्यत ॥ ५५॥
ततो गजगतो राजा भगदत्तः प्रतापवान् ।
अर्जुनं शरवर्षेण पीडयामास संयुगे ॥ ५६॥
अर्जुनस्तु रणे नागम् आयान्तं पर्वतोपमम् ।
विमलैरायसैस्तीक्ष्णैर् अविध्यत महारणे ॥ ५७॥
शिखण्डिनं च कौन्तेयो याहि याहीत्यचोदयत् ।
भीष्मं प्रति महाराज जह्येनमिति चाब्रवीत् ॥ ५८॥
प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्वज ।
प्रययौ त्वरितो राजन् द्रुपदस्य रथं प्रति ॥ ५९॥

ततोऽर्जुनो महाराज भीष्ममभ्यद्रवद्द्रुतम् ।
शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्तत ॥ ६०॥

ततस्ते तावकाश्शूराः पाण्डवं रभसं युधि ।
तमभ्यधावन् क्रोशन्तस् तदद्भुतमिवाभवत् ॥ ६१॥

नानाविधान्यनीकानि पुत्राणां ते नराधिप ।
अर्जुनो व्यधमत् काले दिवीवाभ्राणि मारुतः ॥ ६२॥

शिखण्डी तु समासाद्य भरतानां पितामहम् ।
इषुभिस्तूर्णमव्यग्रो बहुभिस्तं समाचिनोत् ॥ ६३॥

सोमकांश्च रणे भीष्मो जघ्ने पार्थपदानुगान् ॥ ६४

रथाग्न्यङ्गारचापार्चिर् असिशक्तिगदेन्धनः ।
शरसङ्घमहाज्वालः क्षत्रियान् समरेऽदहत् ॥ ६५

यथा हि सुमहानग्निः कक्षे चरति सानिलः ।
तथा जज्वाल भीष्माग्निर् दिव्यान्यस्त्राण्युदीरयन् ॥ ६६

न्यवारयत सैन्यं च पाण्डवानां महारथः ।
सुवर्णपुङ्खैरिषुभिश् शरैस्सन्नतपर्वभिः ॥ ६७

छादयन् स दिशो भीष्मः प्रदिशश्च महायशाः ।
पातयन् रथिनो राजन् गजाश्वान् सहसादिभिः ॥ ६८

मुण्डतालवनानीव स चकार रथव्रजान् ॥ ६८॥

निर्मनुष्यान् रथान् राजन् गजानश्वांश्च संयुगे ।
चकार समरे भीष्मस् सर्वशस्त्रभृतां वरः ॥ ६९॥

तस्य ज्यातलनिर्घोषं विष्फूर्जितमिवाशनेः ।
निशम्य सर्वतो राजन् समकम्पन्त सैनिकाः ॥ ७०॥

[1]अमोघान्यपतन् बाणाः पितुस्ते भरतर्षभ ।
नासज्जन्त शरीरेषु भीष्मचापच्युताश्शराः ॥ ७१॥

निर्मनुष्यान् रथान् राजन् सुयुक्ताञ्जवनैर्हयैः ।
वातायमानान् पश्यामो ह्रियमाणान् विशां पते ॥ ७२॥

चेदिकाशिकरूशानां सहस्राणि चतुर्दश ।
महारथास्समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ७३॥

अपरावर्तिनश्शूरास् सुवर्णविकृतध्वजाः ।
सङ्ग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः ॥ ७४॥
जग्मुस्ते परलोकाय व्यादितास्यमिवान्तकम् ॥ ७५

तत्र नासीन्महाराज सोमकानां महारथः ।
यस्सम्प्राप्य रणे भीष्मं जीविताय मनो दधे ॥ ७६

तांश्च सर्वान् रणे योधान् प्रेतराजपुरं प्रति ।
नीतान् भीष्मेण मन्यन्ते दृष्ट्वा भीष्मस्य विक्रमम् ॥ ७७

न कश्चिदेनं समरे प्रत्युद्याति महारथः ।

1. घ—अर्धद्वयं नास्ति

[1]क्षते पाण्डुसुतं वीरं श्वेताश्वं कृष्णसारथिम् ॥ ७८

शिखण्डिनं च समरे पाञ्चाल्यममितौजसम् ॥ ७८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ ६४ ॥ भीष्मवधपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[अस्मिन्नध्याये ७८॥ श्लोकाः]

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

सङ्कुलयुद्धवर्णनम् ॥

---

सञ्जयः—

शिखण्डी तु ततो भीष्मम् [2]विजिगीषुर्महारथम् ।
[3]जयाय पाण्डुपुत्राणाम् आसाद्य पुरुषर्षभम् ॥ १

तरस्वी बलवान् सङ्ख्ये प्रत्युद्यातो महारथः ॥ १॥

दशभिर्निशितैर्भल्लैर् आजघान स्तनान्तरे ॥ २

शिखण्डिनं तु गाङ्गेयः क्रोधदीप्तेन चक्षुषा ।
अवैक्षत कटाक्षेण निर्दहन्निव भारत ॥ ३

स्त्रीत्वं तत् संस्मरन् राजन् सर्वलोकस्य पश्यतः ।

---

1. अ-क—जगाम पाण्डवं संख्ये
2. ख-ब-ङ-म—आसाद्य भरतर्षभ
3. ख-घ-ङ-म—इदमर्धद्वयं नास्ति

नाजघान रणे भीष्मो बाणगोचरमागतम् ॥ ४
अर्जुनस्तु महाराज शिखण्डिनमभाषत ॥ ४॥

अर्जुनः—

अभित्वरस्वास्य वधे शिखण्डिन् रथसत्तम ।
किं ते विवक्षया वीर जहि भीष्मं महारथम् ॥ ५॥
न ह्यन्यमनुपश्यामि कञ्चिद्यौधिष्ठिरे बले ।
यश्शक्तस्समरे भीष्मं योधयेत पितामहम् ॥ ६॥
ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ॥ ७

सञ्जयः—

एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
शरैर्नानाविधैस्तूर्णं पितामहमुपाद्रवत् ॥ ८
अचिन्तयित्वा तान् बाणान् पिता देवव्रतस्तव ।
अर्जुनं समरे क्रुद्धं वारयामास सायकैः ॥ ९
तथैव च चमूं सर्वां पाण्डवानां महारथः ।
अप्रैषीत् समरे भीष्मः परलोकाय सायकैः ॥ १०
तथैव पाण्डवा राजन् सैन्येन महता वृताः ।
भीष्मं सम्प्रच्छादयामासुर् मेघा इव दिवाकरम् ॥ ११
स समन्तात् परिवृतो भीष्मो हि भरतर्षभ ।
निर्ददाह रणे शूरान् वने वह्निरिव ज्वलन् ॥

तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
अयोधयत यत् पार्थं जुगोप च महाव्रतम् ॥ १३
कर्मणा तेन समरे तव पुत्रस्य धन्विनः ।
दुश्शासनस्य तुतुषुस् सर्वे लोका महात्मनः ॥ १४
यदेकस्समरे पार्थान् सानुगान् समयोधयत् ।
न चैनं पाण्डवा युद्धे वारयामासुरुल्बणम् ॥ १५
दुश्शासनेन समरे रथिनो विरथीकृताः ।
सादिनश्च महाराज दन्तिनश्च महाबलाः ॥ १६
विनिर्भिन्नाश्शरैस्तीक्ष्णैर् निपेतुर्धरणीतले ।
शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ॥ १७
यथाग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्बणम् ।
तथा जज्वाल पुत्रस्ते पाण्डुसेनां विनिर्दहन् ॥ १८
तं भारतमहामात्रं पाण्डवानां महारथः ।
जेतुं नोत्सहते कश्चिन्नाभ्युद्यातुं कथञ्चन ॥ १९
ऋते महेन्द्रतनयं श्वेताश्वं कृष्णसारथिम् ॥ १९॥
स हि तं समरे राजन् विजित्य विजयोऽर्जुनः ।
भीष्ममेवाभिदुद्राव सर्वसैन्यस्य पश्यतः ॥ २०॥
विजितस्तव पुत्रोऽपि भीष्मबाहुव्यपाश्रयः ।
2.
3. ¹ः पुनस्समाश्वास्य प्रायुध्यत रणोत्कटः ॥ २१॥

अर्जुनं च रणे राजन् योधयन् बह्वशोभत ॥ २२

[1]शिखण्डी तु रणे राजन् विव्याध च पितामहम् ।
शरैरशनिसंस्पर्शैस् तथा सर्पविषोपमैः ॥ २३

न च स्म ते रुजं चक्रुः पितुस्तव जनेश्वर ।
स्मयमानस्तु गाङ्गेयस् तान् बाणाञ् जगृहे तदा ॥ २४

उष्णार्तो हि नरो यद्वज् जलधाराः प्रतीच्छति ।
तथा जग्राह गाङ्गेयश् शरधाराश्शिखण्डिनः ॥ २५

तं क्षत्रिया महाराज ददृशुर्घोरामाहवे ।
भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनाम् ॥ २६

ततोऽब्रवीत् तव सुतस् सर्वसैन्यानि मारिष ॥ २६॥

दुर्योधनः—

अभिद्रवत सैन्यानि फल्गुनं सर्वतो रथैः ।
भीष्मो वस्समरे सर्वान् पालयिष्यति धर्मवित् ॥ २७॥

तद्भयं सुमहत् त्यक्त्वा पाण्डवान् प्रति युध्यत ।
एष तालेन दीप्तेन भीष्मस्तिष्ठति पालयन् ॥ २८॥

सर्वेषां धार्तराष्ट्राणां रणे वर्म च शर्म च ।
देवा अपि समुद्युक्ता नालं भीष्मं समासितुम् ॥ २९॥

किमु पार्था महात्मानं मर्त्यभूता वृथाबलाः ॥ ३०

1. ब—नास्तीदमर्धम्

तस्माद्द्रवत हे योधाः फल्गुनं प्राप्य संयुगे ॥ ३०॥

अहमद्य रणे यत्तो योधयिष्यामि फल्गुनम् ।
सहितस्सर्वतो यत्तैर् भवद्भिर्वसुधाधिपैः ॥ ३१॥

सञ्जयः—

तच्छ्रुत्वा तु वचो राजंस् तव पुत्रस्य धन्विनः ।
अर्जुनं प्रति संयत्ता बलवन्तो महारथाः ॥ ३२॥

विदेहास्तं कलिङ्गाश्च दासेरुकगणैस्सह ।
अभिपेतुर् निषादाश्च सौवीराश्च महारणे ॥ ३३॥

बाह्लीका दरदाश्चैव प्रतीच्योदीच्यमालवाः ।
[1]अभीषाहाश्शूरसेनाश्‌ शिबयोऽथ वसातयः ॥ ३४॥

साल्वाश्शूरास्त्रिगर्ताश्च अम्बष्ठाः केकयैस्सह ।
अभिपेतू रणे पार्थं पतङ्गा इव पावकम् ॥ ३५॥

स तान् सर्वान् सहानीकान् महाराज महारथान् ।
दिव्यान्यस्त्राणि सञ्चिन्त्य प्रसन्धाय धनञ्जयः ॥ ३६॥

स तैरस्त्रैर्महावेगैर् ददाहाशु महाबलः ।
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः ॥ ३७॥

तस्य बाणसहस्राणि सृजतो दृढधन्विनः ।
दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत ॥ ३८॥

1. अ-क—नास्तीदमर्धम्

[1]ते शरार्ता महाराज विप्रकीर्णरथध्वजाः ।
नात्यवर्तन्त राजानस् सहिता वानरध्वजम् ॥ ३९॥
[2]सध्वजा रथिनः पेतुर् हयारोहा हयैस्सह ।
गजाश्च सगजारोहाः किरीटिशरपीडिताः ॥ ४०॥
ततोऽर्जुनभुजोत्सृष्टैर् आवृताऽऽसीद्वसुन्धरा ।
विद्रुतं दिक्षु सर्वासु शरैर्बलमदृश्यत ॥ ४१॥
अथ पार्थो महाबाहुर् द्रावयित्वा वरूथिनीम् ।
दुश्शासनाय समरे प्रेषयामास सायकान् ॥ ४२॥
ते तु भित्त्वा तव सुतं दुश्शासनमयोमुखाः ।
धरणीं विविशुस्सर्वे वल्मीकमिव पन्नगाः ॥ ४३॥
हयांश्चास्य ततो जघ्ने सारथिं च न्यपातयत् ॥ ४४
विविंशतिं च विंशत्या विरथीकृतवान् प्रभुः ।
आजघान भृशं चैव नवभिर्नतपर्वभिः ॥ ४५
कृपं शलं च शल्यं च विद्ध्वा बहुभिरायसैः ।
चकार विरथांश्चैव कौन्तेयश्श्वेतवाहनः ॥ ४६
एवं ते विरथास्सर्वे कृपश्शल्यश्च मारिष ।

---

1. अ—नासीदमर्धलयम्
2. क—नाभ्यवर्तन्त राजानस् सहिता वानरध्वजम् ।
रथिनस्स्वरथेभ्यश्च निपेतुर्धरणीतले ॥
निकृत्ताश्चार्जुनेनाजौ विमुक्तकवचध्वजाः ॥ [ अधिकः पाठः ]

[1]दुश्शासनो विकर्णश्च तथैव च विविंशतिः ॥ ४७

सम्प्राद्रवन्त समरे निर्जितास्सव्यसाचिना ॥ ४७॥

पूर्वाह्णे तु महाराज पराजित्य महारथान् ।
प्रजज्वाल रणे पार्थो विधूम इव पावकः ॥ ४८॥

तथैव शरवर्षेण भास्करो रश्मिमानिव ।
अन्यानपि महाराज तापयामास पार्थिवान् ॥ ४९॥

पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् ।
प्रावर्तयत सङ्ग्रामे शोणितोदां महानदीम् ॥ ५०॥

[2]मध्येन कुरुसैन्यानां पाण्डवानां च भारत ॥ ५१

तस्मिन्नतिमहाभीमे राजन् वीरवरक्षये ।
भीष्मं प्रति पराक्रान्ताः पाण्डवास्सह सृञ्जयैः ॥ ५२

तैः पराक्रान्तमालोक्य युधि राजन् पितामहम् ।
न्यवर्तन्त ते पुत्रा ब्रह्मलोकपुरस्कृताः ॥ ५३

इच्छन्तो निधनं युद्धे स्वर्गलोकपरायणाः ।
[3]पाण्डवानभ्यवर्तन्त तावका युद्धदुर्मदाः ॥ ५४

पाण्डवाश्च महाराज स्मरन्तो विविधान् बहून् ।

---

1. अ-क-ग—दुर्योधनो दुष्प्रसहः कृपश्शल्यश्च भारत । [अधिकः पाठः].
2. अ-क—नासीदमर्धम्   3. अ-क—नासीदमर्धम्

[1]क्लेशान् कृतान् सपुत्रेण त्वया पूर्वं नराधिप ॥ ५५

भयं त्यक्त्वा रणे शूरास् स्वर्गलोकपुरस्कृताः ।
तावकांस्तव पुत्रांश्च योधयन्ति स्म हृष्टवत् ॥ ५६

[2]गजाश्वरथसङ्घाश्च बहुधा रथिभिर्हताः ।
रथाश्वा निहता नागैर् नागा हयपदातिभिः ॥ ५७

अन्तरा च्छिद्यमानानि शरीराणि शिरांसि च ।
निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् ॥ ५८

छन्नमायोधनं रेजे कोदण्डाङ्गदधारिभिः ।
पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः ॥ ५९

रथनेमिनिकृत्ताङ्गा रथाश्वैरवपोथितैः ।
पादाताश्च व्यदृश्यन्त साश्वाश्च हयसादिनः ॥ ६०

गजाश्च रथसङ्घाश्च परिपेतुस्समन्ततः ।
विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ॥ ६१

[3]तद्धताश्वरथौघानां रुधिरेण समुक्षितम् ।
छन्नमायोधनं रेजे रक्ताभ्रमिव चाम्बरम् ॥ ६२

श्वानः काकाश्च गृध्राश्च वृका गोमायुभिस्सह ।
प्रणेदुर्भक्ष्यमासाद्य विविधाश्च मृगद्विजाः ॥ ६३

---

1. अ-क—अर्धद्वयं नास्ति 2. व—अर्धाष्टकं नास्ति
3. अ-क—नास्तीदमर्धम्

ववुर्बहुविधाश्चैव दिक्षु सर्वासु मारुताः ।
दृश्यमानेषु रक्षस्सु भूतेषु च नदत्सु च ॥ ६४

काञ्चनानि च दामानि पताकाश्च महाधनाः ।
धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः ॥ ६५

[1]श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः ।
विकीर्णास्समदृश्यन्त शतशोऽथ सहस्रशः ॥ ६६

सपताकाश्च मातङ्गा दिशो जग्मुश्शरातुराः ॥ ६६॥
[2]क्षत्रियाश्च मनुष्येन्द्र गदाशक्तिधनुर्धराः ।
समन्ततश्च दृश्यन्ते पतिता धरणीतले ॥ ६७॥

इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ।
पेतुरार्तस्वरं कृत्वा तत्र तत्र महागजाः ॥ ६८॥

सेनापतिस्तु समरे [3]धृष्टद्युम्नः प्रतापवान् ।
अभिदुद्राव वेगेन तव सेनां महाबलः ॥ ६९॥
सेनापतिः पुनः क्रुद्धस् स्वसेनां प्राह वै तदा ॥ ७०

धृष्टद्युम्नः—
अभिद्रवत गाङ्गेयं सोमकाः किं चिरेण वः ॥ ७०॥

सञ्जयः—
[4]सेनापतिवचश्श्रुत्वा सोमकास्सह सृञ्जयैः ।

---

1. च—पञ्चार्धानि न सन्ति
2. ख-म—इदमर्धं नास्ति
3. ख-घ-ङ-म—इतः पादत्रयं नास्ति
4. ङ—अर्धद्वयं नास्ति

अभ्यद्रवन्त गाङ्गेयं शस्त्रवृष्ट्या समन्ततः ॥ ७१॥
तदा भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ।
अभ्यद्रवत कौन्तेयं मिषतां सर्वधन्विनाम् ॥ ७२॥
तं शिखण्डी रणे क्रुद्धम् अभ्यधावत दंशितः ।
असंहरत् ततो भीष्मस् तदस्त्रं पावकोपमम् ॥ ७३॥
एतस्मिन्नेव काले तु कौन्तेयश्श्वेतवाहनः ।
निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् ॥ ७४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥
॥ ६४ ॥ भीष्मवधपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[ अस्मिन्नध्याये ७४॥ श्लोकाः ]

## ॥ चतुर्दशोत्तरशततमोऽध्यायः ॥

भीष्मपराक्रमवर्णनम् ॥

सञ्जयः—

असंव्यूढेष्वनीकेषु भूयिष्ठमनुवर्तिषु ।
ब्रह्मलोकपरास्सर्वे समयुध्यन्त भारत ॥ १
न ह्यनीकमनीकेषु समसज्जत सङ्कुले ॥ १॥
[1]रथा न रथिभिस्सार्धं पादाता न पदातिभिः ।

1. ख-क-ग—मर्यादामपि तां हित्वा युयुधे न च सङ्कुलम् ।
[अधिकः पाठः]

अश्वा नाश्वैरयुध्यन्त न गजा गजयोधिभिः ॥ २॥
महान् व्यतिकरो रौद्रस् सेनयोस्समपद्यत ॥ ३
नरनागरथाश्वेषु व्यवकीर्णेषु सर्वशः ।
क्षयस्तस्मिन् महारौद्रे निर्विशेषमजायत ॥ ४
ततश्शल्यः कृपश्चैव चित्रसेनश्च भारत ।
दुश्शासनो विकर्णश्च रथानास्थाय दंशिताः ॥ ५
पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ॥ ५॥
सा वध्यमाना समरे पाण्डुसेना महात्मभिः ।
त्रातारं नाध्यगच्छद्वै मज्जमानेव नौर्जले ॥ ६॥
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति ।
तथा पाण्डुसुतानां वै भीष्मो मर्माण्यकृन्तत ॥ ७॥
[1]अतीव तव सैन्यस्य पार्थेन च महात्मना ।
नगमेघप्रतीकाशाः पातिता बहुधा गजाः ॥ ८॥
सोमकास्सृञ्जयैस्सार्धं सर्वे ते युद्धदुर्मदाः ।
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समन्ततः ॥ ९॥
वध्यमानस्ततो राजन् पिता देवव्रतस्तव ।
अमर्षवशमापन्नो योधयामास सृञ्जयान् ॥ १०॥
तस्य कीर्तिमतस्तात पुरा रामेण धीमता ।

1. अ-क-ख-ग—इदमर्धद्वयं नास्ति

सम्यग् दत्ता शस्त्रशिक्षा परानीकविनाशनी ॥ ११॥

स तां विद्यामधिष्ठाय कुर्वन् परबलक्षयम् ।
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ॥ १२॥

भीष्मो दश सहस्राणि जघान परवीरहा ॥ १३

[1]तस्मिंस्तु दशमे प्राप्ते दिवसे भरतर्षभ ।
एको भीष्मो हि मत्स्येषु पाञ्चालेषु च संयुगे ॥ १४

[2]गजाश्वं चामितं हत्वा हत्वा चैव महारथान् ।
हत्वा पञ्च सहस्राणि रथानां पृथिवीपते ॥ १५
नराणां चायुतं युद्धे सहस्राणि चतुर्दश ।
तथा दन्तिसहस्रं च हयानामयुतं पुनः ॥ १६
शिक्षावशेन न्यहनत् पिता तव विशां पते ॥ १६॥

ततस्सर्वान् महीपालान् क्षोभयित्वा विशां पते ॥
विराटस्य प्रियो भ्राता शतानीको निपातितः ॥ १७॥

शतानीकं च समरे हत्वा भीष्मः प्रतापवान् ।
[3]सहस्राणि महाराज राज्ञां भल्लैरपातयत् ॥ १८॥

ये च केचन पाण्डूनाम् अन्वगीयुर्धनञ्जयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम् ॥ १९॥

---

1. घ—अर्धद्वयमिदं नास्ति
2. अ-क-घ—पञ्चार्धानि न सन्ति
3. अ-क-घ-नास्तीदमर्धम्

किरन् दश दिशो भीष्मश् शरजालैस्समन्ततः ।
अतीत्य सेनां पार्थानाम् अवतस्थे चमूमुखे ॥ २०॥

स कृत्वा सुमहत् कर्म तस्मिन् वै दशमेऽहनि ।
[1]सेनयोरन्तरा तिष्ठन् प्रगृहीतशरासनः ॥ २१॥

न चैनं पार्थिवास्तत्र शेकुः केचिन्निरीक्षितुम् ।
मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि ॥ २२॥

यथा दैत्यचमूं स्कन्दस् तापयामास संयुगे ।
तथा भीष्मः पाण्डुसेनां तापयामास भारत ॥ २३॥

तथा च तं पराक्रान्तम् आलोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ॥ २४॥

श्रीभगवान्—

एकश्शान्तनवो भीष्मस् सेनयोरन्तरे स्थितः ।
तं निहत्य बलादेनं विजयस्ते भविष्यति ॥ २५॥

यत्तस्संस्तम्भयस्वैनं यत्रैषोऽभ्येति ते चमूम् ।
न हि भीष्मशरानन्यस् सोढुमुत्सहते पुमान् ॥ २६॥

सञ्जयः—

ततस्तस्मिन् क्षणे राजंश् चोदितो वानरध्वजः ।

---

1. ग-ब-ङ-म—द्यावायवाभ्यां शुचिशुक्रयोगे
आतानतप्ता इव थावसङ्घाः ।
भीष्मस्य चापच्युतबाणवर्षैः
पार्थस्य सेना कृशतामवाप ॥ [अधिकः पाठः]

सरथं सध्वजं साश्वं भीष्ममन्तर्दधे शरैः ॥ २७॥
स चापि कुरुमुख्यानाम् ऋषभः पाण्डवेरितान् ।
शरव्रातैश्शरव्रातान् बहुधा विदुधाव तान् ॥ २८॥
[1]तथा पुनर्जघानाशु पाण्डवानां महारथान् ।
शरैरशनिकल्पैश्च शिताग्रैश्च सुपर्वभिः ॥ २९॥
ततः पाञ्चालराजश्च धृष्टकेतुश्च वीर्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ३०॥
यमौ च चेकितानश्च सात्यकिश्च महारथः ।
सौभद्रो रथिनां श्रेष्ठो राक्षसश्च घटोत्कचः ॥ ३१॥
द्रौपदेयाश्शिखण्डी च कुन्तिभोजश्च वीर्यवान् ।
विराटश्च महाराज पाण्डवेयाश्च सर्वशः ॥ ३२॥
एते चान्ये च बहवो निकृत्ता भीष्मसायकैः ।
समुद्धृता महाराज निमग्नाश्शोकसागरे ॥ ३३॥
[2]अथोद्यता महाराज प्रगृहीत शरासनाः ।
रणोद्यतं महावीरं भीष्ममेवाभिदुद्रुवुः ॥ ३४॥
ततश्शिखण्डी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ॥ ३५॥
ततोऽस्य तुरगान् हत्वा सर्वान्तरविभागवित् ।

1. ख-घ-ङ-म—अर्धद्वयं नास्ति
2. ख-घ-ङ-म—अर्धद्वयं नास्ति

भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः ॥ ३६॥

सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ युधिष्ठिरः ॥ ३७॥

दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्वना ॥ ३८

अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः ।
दुद्रुवुस्समरे भीष्मं समुद्यतदृढायुधम् ॥ ३९

ते सर्वे दृढधन्वानस् संयुगेष्वपलायिनः ।
बहुधा भीष्ममानर्च्छुर् मार्गणैः कृतमार्गणाः ॥ ४०

विधूय तान् बाणगणान् ये मुक्ताः पार्थिवोत्तमैः ।
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम् ॥ ४१

कृत्वा शरविघातं च क्रीडन्निव महारथः ।
नाभिसन्धत्त पाञ्चाल्ये स्मयमानो मुहुर्मुहुः ॥ ४२

स्त्रीत्वं च समनुस्मृत्य भीष्मस्तत्र शिखण्डिनः ।
जघान द्रुपदानीके रथान् सप्त महारथः ॥ ४३

ततः किलकिलाशब्दः क्षणेन समजायत ।
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम् ॥ ४४

ते नराश्वरथव्रातैर् वारणैश्च पदातिभिः ।
तमेकं छादयामासुर् मेघा इव दिवाकरम् ॥ ४५

भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ॥ ४५॥

ततस्तस्य च तेषां च युद्धे देवासुरोपमे ।
[1]किरीटी भीष्ममानच्छॆत् पुरस्कृत्य शिखण्डिनम् ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ६४ ॥ भीष्मवधपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

---

## ॥ पञ्चदशोत्तरशततमोऽध्यायः ॥

भीष्मनिपातः ॥

---

सञ्जयः—

एवं ते पाण्डवास्सर्वे पुरस्कृत्य शिखण्डिनम् ।
विव्यधुस्समरे भीष्मं परिवार्य समन्ततः ॥ १

शतघ्नीभिस्सुघोराभिः पट्टसैश्च परश्वधैः ।
मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्वतः ॥ २

शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः ।
नाराचैर्वत्सदन्तैश्च भुसुण्ठीभिश्च सर्वशः ॥ ३

अताडयन् रणे भीष्मं सहितास्सर्वसृञ्जयैः ॥ ३॥
स विशीर्णतनुत्राणः पीडितो बहुभिश्शरैः ।

---

1. अ-क-ग—अभवद्दारुणं राजन् रोमहर्षणमद्भुतम् । [अधिकः पाठः]

विव्यथे नैव गाङ्गेयो भिद्यमानेषु मर्मसु ॥ ४॥
सुदीप्तशरजालार्चिर् अस्त्रप्रसृतमारुतः ।
नेमिनिर्ह्लादसन्नादो महास्त्रोदयपावकः ॥ ५॥
चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ।
युगान्ताग्निसमो भीष्मः परेषां समपद्यत ॥ ६॥
निवृत्य रथसङ्घानाम् अन्तरेण विनिस्सृतः ।
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन् ॥ ७॥
ततः पाञ्चालराजं च धृष्टकेतुमतीत्य च ।
पाण्डवानीकिनीमध्यम् आससादातिवेगितः ॥ ८॥
ततस्सात्यकिभीमौ च पाण्डवं च धनञ्जयम् ।
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम् ॥ ९॥
[1]भीमघोषैर्महावेगैर् मर्मावरणभेदिभिः ।
षडेतान् षड्भिरानच्छेद् भास्करप्रतिमैश्शरैः ॥ १०॥
तस्य ते निशितान् बाणान् सन्निवार्य महारथाः ।
[2]दशभिर्दशभिर्भीष्मम् अर्दयामासुरोजसा ॥ ११॥
शिखण्डी च महाबाणान् मुमोचान्यान् महाव्रते ।
ते भीष्मं विविशुस्तूर्णं स्वर्णपुङ्खाश्शिलाशिताः ॥ १२॥
ततः किरीटी संरब्धो भीष्ममेवाभ्यवर्तत ।

---

1. अ-क—नास्तीदमर्धम् 2. अ—षडर्धानि न सन्ति

शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ १३॥
भीष्मस्य धनुषश्छेदं नामृष्यन्त महारथाः ॥ १४

द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
भूरिश्रवाश्शलश्शल्यो भगदत्तस्तथैव च ॥ १५

निजघ्नुः परमक्रुद्धाः किरीटिनमभिद्रुताः ।
उत्तमास्त्राणि दिव्यानि दर्शयन्तो महारथाः ॥ १६

अभिपेतुस्स्म संरब्धाश् छादयन्ति स्म पाण्डवम् ॥ १६॥
तेषामापततां शब्दश् शुश्रुवे फल्गुनं प्रति ।
उद्धूतानां यथा शब्दश् समुद्राणां युगक्षये ॥ १७॥
घ्नत त्वरत गृह्णीत युध्यत प्रनिकृन्तत ।
इत्यासीत् तुमुलश्शब्दः फल्गुनस्य रथं प्रति ॥ १८॥
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः ।
[1]अभ्यधावन् परीप्सन्तः फल्गुनस्य रथं प्रति ॥ १९॥
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ॥ २०॥
अभिमन्युश्च सङ्क्रुद्धस् सप्तैते क्रोधमूर्च्छिताः ।
[2]समभ्यधावंस्त्वरिताश् चित्रकार्मुकधारिणः ॥ २१॥

1. घ—इतस्सप्तदशार्धानि न सन्ति
2. अ-क—नास्तीदमर्धम्

तेषां समभवद्युद्धं तुमुलं रोमहर्षणम् ।
पुरा वै भरतश्रेष्ठ देवानां दानवैरिव ॥ २२॥

शिखण्डी तु रथश्रेष्ठो रक्ष्यमाणः किरीटिना ।
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे ॥ २३॥

सारथिं दशभिश्चास्य ध्वजमेकेन चिच्छिदे ॥ २४

सोऽन्यत् कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ।
[1]जघान निशितैर्बाणैर् अर्जुनं परवीरहा ॥ २५

तदप्यस्य शितैर्भल्लैस् त्रिधा चिच्छेद फल्गुनः ॥ २५॥

एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची धनञ्जयः ॥ २६॥

स च्छिन्नधन्वा सङ्क्रुद्धस् सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह वेगेन गिरीणामपि दारणीम् ॥ २७॥

तां च चिक्षेप सङ्क्रुद्धः फल्गुनस्य रथं प्रति ॥ २८

तामापतन्तीं सम्प्रेक्ष्य ज्वलन्तीमशनीमिव ।
समधत्त शितान् भल्लान् पञ्च पाण्डवनन्दनः ॥ २९

ततश्चिच्छेद तां शक्तिं पञ्चधा पञ्चभिश्शरैः ।
सङ्क्रुद्धो भरतश्रेष्ठो भीष्मबाहुबलेरिताम् ॥ ३०

1. ख-क-म—इदमर्धं नास्ति

सा पपात भुवि च्छिन्ना सङ्क्रुद्धेन किरीटिना ।
मेघवृन्दादिव भ्रष्टा विच्छिन्नेव शतह्रदा ॥ ३१

[1]छिन्नां शक्तिमथालोक्य भीष्मः क्रोधसमन्वितः ।
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ॥ ३२

शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान् ।
यद्येषां न भवेद्गोप्ता विष्णुः कारणमानुषः ॥ ३३

अजय्यश्चैव लोकानां सर्वेषामिति मे मतिः ।
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवैः ॥ ३४

अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ।
पित्रा तुष्टेन मे पूर्वं यदाऽम्बां स्वामुदावहत् ॥ ३५

---

1. अ-क—शरान् निपातयामास ह्यर्जुनस्य रथोपरि ।
तीक्ष्णवेगान् महारौद्रान् कालकल्पान् शिलीमुखान् ॥
तानर्जुनो न शक्तोऽमूंश्चिवारयितुमञ्जसा ।
सुवर्णपुङ्खैर्निशितैस् स्वबाहुबलवेगितैः ॥
ततश्शान्तनवो भीष्मः पुनश्चार्जुनमाहवे ।
विव्याध निशितैर्बाणैश् शिताग्रैश्च शिलीमुखैः ॥
तानर्जुनप्रयुक्तांश्च बाणपूगान् सहस्रशः ।
नाशयामास निशितैश् शरव्रातैस्सुपर्वभिः ॥
भीष्मश्शान्तनवो राजन् तदद्भुतमिवाभवत् ॥
भीष्मस्य चापच्युतबाणवर्षैः
पार्थस्य बाणाः क्षयतामवापुः ।
यावायवाभ्यां शुचिशुक्रयोगे
आतानतप्ता इव दावसङ्घाः ॥

तद्बाणवर्षं युधि चार्जुनेन
प्रयुक्तमाशीविषतुल्यरूपः ।
भीष्मोऽप्रमेयो निशितैश्शराग्रैस्
तस्मिन् क्षणे संशमयाञ्चकार ॥

ततोऽर्जुनो गाण्डीववेगमुक्तैश्
शराग्रपुङ्खीकृतशल्यपुङ्खैः ।
ववर्ष भीष्मं युधि बाणवर्षैस्
स्वातीगतश्शुक्र इवातिवृष्टिम् ॥

रणप्रचण्डं सुमहानुभावं
भीष्मं स्थितं चाभिमुखेऽभियोद्धुम् ।
दृष्ट्वाऽर्जुनोऽमुच्यत बाणवर्षैस्
स्वातीगतश्शुक्र इवातिवृष्टिम् ॥

ततोऽर्जुनं भीमबलो महात्मा
पुनर्जघानाशु शरैस्स भीष्मः ।
तानर्जुनश्चापततस्सुतीक्ष्णान्
भल्लैश्शितैरुग्रवेगैः प्रशाम्य ॥

छित्त्वा धनुश्चास्य पुनर्बिभेद
द्विधा दृढं शान्तनवस्य राजन् ॥
स च्छिन्नधन्वा युधि सम्प्रक्रुद्धो
धनुस्समुत्सृज्य महोग्ररूपाम् ।

भीष्मश्शितां काञ्चनहेमदण्डां
चिक्षेप शक्तिं द्रुतमर्जुनाय ॥
तामापतन्तीं भुजगेन्द्रकल्पां
दृष्ट्वाऽर्जुनो रोषपरीतचेताः ॥

चिच्छेद राजन् परवीरहन्ता
सम्पश्यतां सर्वमहीपतीनाम् ॥

[ अधिकः पाठः ]

[1]स्वच्छन्दमरणं दत्तम् अवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः ॥ ३६
एतज्ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो देवताश्चापि वियत्स्था भीष्ममब्रुवन् ॥ ३७

देवाः—
यत् ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत् कुरुष्व महेष्वास युद्धाद्बुद्धिं निवर्तय ॥ ३८

सञ्जयः—
अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमस्सुगन्धी च पृषतैश्च समन्वितः ॥ ३९
देवदुन्दुभयश्चैव सम्प्रणेदुरनेकशः ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि पार्थिव ॥ ४०
न च ताश्शुश्रुवे कश्चित् तेषां संवदतां गिरः ।
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ॥ ४१
सम्भ्रमश्च महानासीत् त्रिदशानां विशां पते ॥ ४१॥
पतिष्यति रणे भीष्मस् सर्वलोकप्रिये रतः ।
इति देवगणानां च श्रुत्वा वाक्यं महात्मनाम् ॥ ४२॥
ततश्शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्तत ।
भिद्यमानश्शितैर्बाणैस् सर्वावरणभेदिभिः ॥ ४३॥

1. अ-क-ग—तदद्य मां वरं चापि यथा चोक्तं तथाऽगमत् ।
[अधिकः पाठः]

शिखण्डी तु महाराज भारतानां पितामहम् ।
आजघानोरसि क्रुद्धो नवभिर्निशितैश्शरैः ॥ ४४॥
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाश्शिलीमुखाः ॥ ४५
स तेनाभिहतस्सङ्ख्ये भीष्मः कुरुपितामहः ।
[1]नाकम्पत महाराज क्षितिकम्पे यथाऽचलः ॥ ४६
[2]शिखण्डिनि रणे बाणं न मुमोच नराधिप ॥ ४६॥
ततः प्रहस्य बीभत्सुर् व्याक्षिपद् गाण्डिवं धनुः ।
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ४७॥
पुनश्शरशतेनाजौ त्वरमाणो धनञ्जयः ।
सर्वगात्रेषु सङ्क्रुद्धस् तदा मर्मस्वताडयत् ॥ ४८॥
एवमन्यैरपि भृशं विद्ध्यमानो महारथः ।
[3]नाकम्पत महाराज क्षितिकम्पे यथाऽचलः ॥ ४९॥
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाश्शिलाशिताः ॥ ५०
ततः किरीटी संरब्धो भीष्ममेवाभ्यवर्तत ।
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ ५१
विध्वा च नवभिर्बाणैर् ध्वजमेकेन चाच्छिनत् ।
सारथिं दशभिश्चास्य विशिखैस्समकम्पयत् ॥ ५२
सोऽन्यत् कार्मुकमादत्त गाङ्गेयो बलवत्तरम् ।

---

1. ख-घ-ङ-म—इदमर्धं नास्ति 2. अ-क—नास्तीदमर्धम्
3. अ-क—न विव्यधे महाराज भीष्मो बुद्धिमतां वरः । [पाठान्तरम्]

तदप्यस्य शितैर्भल्लैस् त्रिधा त्रिभिरथाच्छिनत् ॥ ५३

निमेषार्धेन कौन्तेय आत्तमात्तं महारथः ।
एवमेव धनूंष्याजौ चिच्छेद सुबहून्युत ॥ ५४

ततश्शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्तत ।
बीभत्सुरेनं विंशत्या क्षुद्रकाणां समर्पयत् ॥ ५५

सोऽतिविद्धो महेष्वासो दुश्शासनमभाषत ॥ ५५॥

भीष्मः—

एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः ।
शरैरनेकसाहस्रैर् मामेवाभ्यपतद्रणे ॥ ५६॥

न चैष समरे शक्यो जेतुं वज्रभृता स्वयम् ॥ ५७

न चापि समरे क्रुद्धो देवदानवराक्षसैः ।
एष शक्यो रणे जेतुं किमु मर्त्यैर्महारथैः ॥ ५८

[1]न चाहमपि शक्तस्स्यां सर्वैरपि महारथैः ।
ऋतेऽर्जुनं सुसङ्क्रुद्धैर् एतत् सत्यं ब्रवीमि ते ॥ ५९

सञ्जयः—

[2]तयोरसंवदतोरेव फल्गुनो निशितैश्शरैः ।

---

1. ख-घ—इदमर्धं नास्ति
2. अ-क—एते कृन्तन्ति गात्राणि दृढावरणभेदिनः ।
अर्जुनस्य इमे बाणा नेमे बाणाश्शिखण्डिनः ॥
छिन्दन्ति मम गात्राणि माघमासे गवामिव ।
मुसला इव मे घ्नन्ति मर्माणि सुभृशं शिताः ॥

शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ॥ ६०

ततो दुःशासनं भीष्मस् स्मयमान इवाब्रवीत् ।
अर्दितो निशितैर्बाणैर् भृशं गाण्डीवधन्वना ॥ ६१

भीष्मः—

वज्राशनिसमस्पर्शास् सुपुङ्खास्सुप्रतेजनाः ।
सुमुखा अव्यवच्छिन्ना नेमे बाणाश्शिखण्डिनः ॥ ६२

भुजङ्गा इव सङ्क्रुद्धा लेलिहाना विषोल्बणाः ।
इमे विशन्ति मर्माणि नेमे बाणाश्शिखण्डिनः ॥ ६३

[1]नाशयन्ति मम प्राणान् यमदूता इवागताः ।
गदापरिघसंस्पर्शा नेमे बाणाश्शिखण्डिनः ॥ ६४

[2]इमे कृन्तन्ति गात्राणि माघमासे गवामिव ।
अर्जुनस्य इमे बाणा नेमे बाणाश्शिखण्डिनः ॥ ६५

निकृन्तमाना मर्माणि दृढावरणभेदिनः ।
मुसलानीव निघ्नन्ति नेमे बाणाश्शिखण्डिनः ॥ ६६

[3]ब्रह्मदण्डसमस्पर्शा वज्रवेगा दुरासदाः ।

---

ब्रह्मदण्डसमस्पर्शा वज्रवेगदुरासदाः ॥
मम प्राणान्निकृन्तन्ति नेमे बाणाश्शिखण्डिनः ।
[अधिकः पाठः]

1. ख-ध—इदमर्धद्वयं नास्ति 2. ख—इदमर्धत्रयं नास्ति
3. घ—अर्धद्वयं नास्ति

मम प्राणान्निकृन्तन्ति नेमे बाणाश्शिखण्डिनः ॥ ६७

सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः ।
वीरं गाण्डीवधन्वानम् ऋते जिष्णुं कपिध्वजम् ॥ ६८

सञ्जयः—

इति ब्रुवन् छान्तनवो दिधक्षुरिव पाण्डवम् ।
सविष्फुलिङ्गां दीप्ताग्रां शक्तिं चिक्षेप भारत ॥ ६९

तामस्य विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत् ।
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ॥ ७०

[1]अर्जुनस्समरश्लाघी विननाद महाबलः ॥ ७०॥

चर्म चादत्त गाङ्गेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर् मृत्योरग्रे जयाय वा ॥ ७१॥

तस्य तच्छतधा चर्म व्यधमच्छंसितात्मनः ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ७२॥

स सिंहवद् विनद्योच्चैस् स्वान्यनीकानि हर्षयन् ।
[2]अब्रवीत् परमक्रुद्धो जयेप्सुस्संयुगेऽर्जुनः ॥ ७३॥

अर्जुनः—

अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ॥ ७४

सञ्जयः—

अथ ते तोमरैः प्रासैर् बाणौघैश्च समन्ततः ।

---

1. ख-च-छ-म—इदमर्धं नास्ति
2. ख-ग-च-छ-म—नास्तीदमर्धम्

पट्टसैश्च सनिस्त्रिंशैर् नानाशस्त्रैस्तथा शितैः ॥ ७५
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः ॥ ७५॥
सिंहनादस्ततो घोरः पाण्डवानामजायत ।
तथैव तव पुत्राणां राजन् भीष्मजयैषिणाम् ॥ ७६॥
तमेकमभ्यरक्षन्त कुरवस्सनृपा रणे ॥ ७७
तत्रासीत् तुमुलं युद्धं तावकानां परैस्सह ।
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ॥ ७८
आसीद्घोर इवावर्तो मुहूर्तमुदधेरिव ।
सैन्यानां युध्यमानानां युध्यतामितरेतरम् ॥ ७९
अगम्यरूपा पृथिवी शोणिताक्ता तदाऽभवत् ।
समं च विषमं चैव न प्राज्ञायत किञ्चन ॥ ८०
योधानामयुतं हत्वा स तस्मिन् दशमेऽहनि ।
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ८१
ततस्सेनामुखे तस्मिन् स्थितः पार्थो धनञ्जयः ।
मध्ये तु कुरुसैन्यानां द्रावयामास वाहिनीम् ॥ ८२
[1]तथा च तव सैन्यानि तापयामासुरोजसा ।
शरैरशनिसङ्काशैः पाण्डवाश्चेतरे नृपाः ॥ ८३
तत्राद्भुतमपश्याम पाण्डवानां पराक्रमम् ।
द्रावयामासुरिषुभिस् सर्वान् भीष्मपदानुगान् ॥ ८४

1. ख-ब-ङ-म—अर्धद्वयं नास्ति

वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् ।
भिद्यमानाश्शितैर्बाणैः प्राद्रवाम रणे तदा ॥ ८५

[1-2]पाण्डवैः पञ्चभिस्सार्धं सात्यकेन च धन्विना ।
धृष्टद्युम्नमुखैस्सर्वैः पाञ्चाल्यैश्च समन्ततः ॥ ८६

भिद्यमानाश्शरैस्तीक्ष्णैस् सर्वे कार्ष्णिपुरोगमाः ।
द्रोणद्रौणित्रिगर्तैश्च सर्वे शल्यकृपादयः ॥ ८७

तावकास्समरे राजन् जहुर्भीष्मं महाहवे ॥ ८७॥

सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषहाश्शूरसेनाश्च शिबयोऽथ वसातयः ॥ ८८॥

साल्वाश्शूरास्त्रिगर्ताश्च अम्बष्ठाः केकयैस्सह ।
चतुर्दशैते शूराश्च राजानः क्षत्रियर्षभाः ॥ ८९॥

[3]सङ्ग्रामे विजहुर्भीष्मं युध्यमानाः किरीटिना ॥ ९०

ततस्तमेकं बहवः परिवार्य समन्ततः ।
परिताप्य कुरून् सर्वाञ् शरवर्षैरवाकिरन् ॥ ९१

निपातयत गृह्णीत युध्यतावचकर्तत ।

---

1. अ-क—षडर्धानि न सन्ति
2. ख-ब—सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
[अधिकः पाठः]
3. ख-घ-ङ-म—द्वादशैते जनपदाश्च शरार्ता व्रणपीडिताः ।
[पाठान्तरम्]

इत्यासीत् तुमुलश्शब्दो राजन् भीष्मरथं प्रति ॥ ९२
शरौघैरभिवृष्टस्य शतशोऽथ सहस्रशः ।
न तस्यासीदनिर्भिन्नं गात्रे व्यङ्गुलमन्तरम् ॥ ९३
[1]सह भीष्मेण सर्वेषाम् एवं युद्धमभूत् किल ।
नृपाणां पाण्डवेयानां पुनर्भीष्ममुपेयुषाम् ॥ ९४
एवं विभो तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् ॥ ९५
किञ्चिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ॥ ९५॥
हाहेति दिवि देवानां पार्थिवानां च सर्वशः ।
पतमाने रथाद्भीष्मे बभूव सुमहान् स्वनः ॥ ९६॥
तं पतन्तमभिप्रेक्ष्य भारतानां पितामहम् ।
सह भीष्मेण सर्वेषां प्रापतन् हृदयानि नः ॥ ९७॥
स पपात महाबाहुर् वसुधामनुनादयन् ।
इन्द्रध्वज इवोत्सृष्टः केतुस्सर्वधनुष्मताम् ॥ ९८॥
धरणीं नास्पृशच्चापि शरसङ्घैस्समाचितः ।
शरतल्पे महेष्वासश् शयानः पुरुषर्षभः ॥ ९९॥
रथात् प्रपतितं भीष्मं दिव्यो भावस्समाविशत् ॥
अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी ॥ १००॥

1. ख-घ—इदमर्धद्वयं नास्ति

पतन् स ददृशे चापि दक्षिणेन दिवाकरम् ॥ १०१

संज्ञां चैवालभद्वीरः कालं सञ्चिन्त्य भारत ।

अन्तरिक्षे च शुश्राव दिव्यानां च शुभा गिरः ॥ १०२

दैवी वाक्—

कथं महात्मा गाङ्गेयस् सर्वशस्त्रभृतां वरः ।

[1]कथं ह्यकाले पतितः सर्वधर्मभृतां वरः ॥ १०३

कालकर्ता नरव्याघ्रस् सम्प्राप्ते दक्षिणायने ॥ १०३॥

सञ्जयः—

स्थितोऽस्मीति च गाङ्गेयस् तच्छ्रुत्वा वाक्यमब्रवीत् ॥ १०४

भीष्मः—

धारयिष्याम्यहं प्राणान् पतितोऽपि महीतले ।

उत्तरायणमन्विच्छन् सुगतिप्राप्तिकाङ्क्षया ॥ १०५

सञ्जयः—

[2]एवं वदन् महाप्राज्ञः शरतल्पगतश्चिरम् ।

उत्तरायणमन्विच्छद् भीष्मः कुरुपितामहः ॥ १०६

तस्य तं मतमाज्ञाय गङ्गा हिमवतस्सुता ।

महर्षीन् हंसरूपेण प्रेषयामास तत्र वै ॥ १०७

ततस्सम्पतिता हंसास् त्वरमाणा महौजसः ।

आजग्मुस्सहिता द्रष्टुं भीष्मं कुरुपितामहम् ॥ १०८

यत्र शेते नरश्रेष्ठस् शरतल्पे पितामहः ॥ १०८॥

1. ख-घ-ङ-म—इदमर्धं नास्ति

2. ख-घ-ङ-म—अर्धद्वयं नास्ति

ते तु भीष्मं समासाद्य मुनयो हंसरूपिणः ।
अपश्यञ्छरतल्पस्थं भीष्मं कुरुकुलोद्वहम् ॥ १०९॥
ते तं दृष्ट्वा महात्मानं परिवृत्य प्रदक्षिणम् ।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥ ११०॥
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ॥ १११

हंसाः—

अयं भीष्मो महाबुद्धिः संस्थितो दक्षिणायने ॥ १११॥

सञ्जयः—

इत्युक्त्वा प्राद्रवन् हंसा दक्षिणामभितो दिशम् ॥ ११२
सम्प्रेक्ष्य वै महाबुद्धिश् चिन्तयित्वा च भारत ।
ततोऽब्रवीच्छान्तनवो नाहं गन्ता कथञ्चन ॥ ११३
दक्षिणावृत्त आदित्ये एतन्मे मनसि स्थितम् ॥ ११३॥
गमिष्यामि स्वकं स्थानम् आसीद्यन्मे पुरातनम् ।
उदगावृत्त आदित्ये हंसा[1]स्सत्यं ब्रवीमि वः ॥ ११४॥
धारयिष्याम्यहं प्राणान् उत्तरायणकाङ्क्षया ।
प्राणानां च समुत्सर्गे ऐश्वर्यं नियतं मम ॥ ११५॥
[2]तस्मात् प्राणान् धारयिष्ये मुमूर्षुरुदगायने ॥ ११६
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना ।

1. स-ब-ङ-म—इति वचोऽब्रवीत्
2. अ-क—नास्तीदमर्धम्

छन्दतस्ते भवेन्मृत्युर् इति तत् सत्यमस्तु मे ॥ ११७

[1]धारयिष्ये ततः प्राणान् उत्सर्गे नियते सति ।
इत्युक्तास्ते गता हंसास् स शेते शरतल्पगः ॥ ११८

एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि ।
पाण्डवास्सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ॥ ११९

तस्मिन् हते महासत्त्वे भारतानां पितामहे ।
न किञ्चित् प्रत्यपद्यन्त पुत्रास्तव विशां पते ॥ १२०

सम्मोहश्चैव तुमुलः कुरूणामभवत् तदा ॥ १२०॥

[2]नृपा दुर्योधनमुखा निश्श्वस्य रुरुदुस्ततः ।
विषादाच्च चिरं कालम् अतिष्ठन् विगतेन्द्रियाः ॥ १२१॥

ते दीर्घकालं ध्यायन्तो न युद्धे दधिरे मनः ।
ऊरुस्तम्भगृहीताश्च नाभ्यधावन्त पाण्डवान् ॥ १२२॥

अवध्ये शन्तनोः पुत्रे हते भीष्मे महौजसि ।
[3]दुःखार्तास्ते तदा राजन् कुरूणां पतयोऽभवन् ॥ १२३॥

विमोहस्सहसा राजन् कुरूणामभवत् तदा ॥ १२४

हतप्रवीरा वित्रस्ता निकृत्ता निशितैश्शरैः ।
कर्तव्यं नाभिजानीमो निर्जितास्सव्यसाचिना ॥ १२५

---

1. अ-क—नास्तीदमर्धम्   2. अ—सश्लाकानि न सन्ति
3. क-ङ-म—नास्तीदमर्धम्

पाण्डवास्तु जयं लब्ध्वा प्रहृष्टमनसोऽभवन् ।
सर्वे दध्मुर्मुदा शङ्खान् शूराः परिघबाहवः ॥ १२६

सोमकाश्च सपाञ्चालाः प्रहृष्यन्त जनेश्वर ॥ १२६॥

ततस्तूर्यसहस्रेषु प्रणदत्सु महाबलाः ।
[1]सिंहनादं प्रचक्रुश्च पाञ्चालास्सह सोमकैः ॥ १२७॥

आस्फोटयामास भृशं भीमसेनो ननाद च ।
सेनयोरुभयोर्मध्ये गाङ्गेये विनिपातिते ॥ १२८॥

सन्त्यज्य वीराश्शस्त्राणि प्रध्यायन्तस्समन्ततः ।
प्राक्रोशन् विप्रमूढाश्च जग्मुर्मोहं तथाऽपरे ॥ १२९॥

क्षुद्राश्चैके विनिन्दन्ति भीष्मं चैकेऽभ्यपूजयन् ।
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम् ॥ १३०॥

भारतानां च ये पूर्वे ते चैव प्रशशंसिरे ॥ १३१

महोपनिषदं चैव योगमास्थाय वीर्यवान् ।
जपञ् शान्तनवो धीमान् कालकाङ्क्षी स्थितोऽभवत् ॥ १३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥
॥ ६४ ॥ भीष्मवधपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[ अस्मिन्नध्याये १३२ श्लोकाः ]

---

1. ख-ध-ङ-म—इदमर्धं नास्ति

## ॥ षोडशोत्तरशततमोऽध्यायः ॥



कुरुपाण्डवैरन्यै राजभिश्च भीष्माभिवादनम् ॥ १ ॥ अर्जुनेन भीष्माय बाणमयोपधानसमर्पणम् ॥ २ ॥

---

धृतराष्ट्रः—

कथमासंस्तदा योधा हीना भीष्मेण सञ्जय ।
बलिना देवकल्पेन कौमारब्रह्मचारिणा ॥ १

तदैव निहतान् मन्ये कुरूनन्यांश्च पार्थिवान् ।
न प्राहरद्यदा भीष्मो घृणी च द्रुपदात्मजे ॥ २

इतो दुःखतरं मन्ये किमन्यत् प्रभविष्यति ।
अद्येह निहतं श्रुत्वा पितरं मम दुर्मतेः ॥ ३

अश्मसारमयं नूनं हृदयं मम सञ्जय ।
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ॥ ४
[1]किं कृतं कुरुवृद्धेन तन्मे कथय सञ्जय ॥ ४॥

पुनःपुनर्न मृष्यामि हतं देवव्रतं रणे ।
न हतो जामदग्न्येन दिव्यैरस्त्रैश्च यः पुरा ॥ ५॥

[2]यदद्य निहतेनाजौ भीष्मेण जयमिच्छता ।
चेष्टितं नरसिंहेन तन्मे कथय सञ्जय ॥ ६॥

---

1. ख-घ—नास्तीदमर्धम्　　2. अ-क—अर्धद्वयमिदं नास्ति

सञ्जयः—

सायाह्ने न्यपतद्भूमौ धार्तराष्ट्रान् विषादयन् ।
पाञ्चालान् हर्षयंश्चैव कुरुवृद्धः पितामहः ॥ ७॥

स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा ।
भीष्मो रथात् प्रपतितस् सञ्छन्नो बहुभिश्शरैः ॥ ८॥

हाहेति तुमुलश्शब्दो भूतानां समपद्यत ॥ ९

सीमावृक्षे निपतिते कुरूणां समितिञ्जये ।
उभयोस्सेनयो राजन् क्षत्रियान् भयमाविशत् ॥ १०

भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम् ।
कुरवः पर्यतप्यन्त पाण्डवाश्च विशां पते ॥ ११

खं तमोवृतमासीच्च नासीद्भानुमतः प्रभा ।
ररास पृथिवी चैव भीष्मे शान्तनवे हते ॥ १२

अयं ब्रह्मविदां श्रेष्ठस् सदा ब्रह्मविदां गतिः ।
इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ॥ १३

ऋषयः—

अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार भरतर्षभः ॥ १४

सञ्जयः—

[1]इति स्म शरतल्पस्थं भरतानां पितामहम् ।

1. अ-क—नासीदमर्षम्

ऋषयः प्रत्यभाषन्त सहितास्सिद्धचारणैः ॥ १५
हते शान्तनवे भीष्मे भरतानां पितामहे ।
न किञ्चित् प्रत्यपद्यन्त पुत्रास्तव विशां पते ॥ १६
विवर्णवदनाश्चासन् गतश्रीकाश्च भारत ।
अतिष्ठन् मिलिताश्चैव ह्रिया युक्ता ह्यधोमुखाः ॥ १७
पाण्डवाश्च जयं लब्ध्वा सङ्ग्रामशिरसि स्थिताः ।
सर्वे दध्मुर्महाशङ्खांस् तप्तहेमपरिष्कृतान् ॥ १८
भृशं तूर्यनिनादेषु वर्तमानेषु चासकृत् ।
अपश्याम रणे राजन् भीमसेनं महाबलम् ॥ १९
आक्रीडमानं कौन्तेयं हर्षेण महता वृतम् ।
निहत्य तरसा शत्रून् महाबलसमन्वितम् ॥ २०
सम्मोहश्चापि तुमुलः कुरूणामभवत् तदा ।
कर्णदुर्योधनौ चापि निश्श्वसेतां मुहुर्मुहुः ॥ २१
तथा निपतिते भीष्मे कौरवाणां धुरन्धरे ।
हाहाकृतमभूत् सर्वं निर्मर्यादमवर्तत ॥ २२
दृष्ट्वा च पतितं भीष्मं पुत्रो दुश्शासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ २३
भ्रात्रा प्रस्थापितो वीरस् स्वेनानीकेन दंशितः ।
प्रययौ पुरुषव्याघ्रस् स्वसैन्यमभिहर्षयन् ॥ २४

तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन् ।
दुश्शासनं महाराज किमयं वक्ष्यतीति वै ॥ २५

ततो द्रोणाय निहतं भीष्ममाचष्ट भारत ।
द्रोणस्तदप्रियं श्रुत्वा सहसा मोहमागतः ॥ २६

स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि भारत ॥ २७

विनिवृत्तान् कुरून् दृष्ट्वा पाण्डवाश्च स्वसैनिकान् ।
रथैश्शीघ्राश्वसंयुक्तैस् समन्तात् पर्यवारयन् ॥ २८

विनिवृत्तेषु सैन्येषु पारम्पर्येण सर्वशः ।
विमुक्तकवचास्सर्वे भीष्ममीयुर्नराधिपाः ॥ २९

उपरम्य ततो युद्धाद् योधाश्शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ ३०

ततो भीष्मं समासाद्य शयानं पुरुषर्षभम् ।
अभिवाद्य व्यतिष्ठन्त पाण्डवाः कुरुभिस्सह ॥ ३१

अथ पाण्डून् कुरूंश्चैव प्रणिपत्याग्रतस्स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मश्शान्तनवस्तदा ॥ ३२

भीष्मः—

स्वागतं वो महाभागास् स्वागतं वो महारथाः ।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ३३

सञ्जयः—

अभिनन्द्य स तानेवं शिरसा लम्बताऽब्रवीत् ।
परिपार्श्वे तव सुतान् स्थितानुद्वीक्ष्य भारत ॥ ३४

भीष्मः—

शिरो मे लम्बतेऽत्यर्थम् उपधानं प्रदीयताम् ॥ ३४॥

सञ्जयः—

ततो नृपास्समाजह्रुस् तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत् तानि पितामहः ॥ ३५॥

अब्रवीच्च नरव्याघ्रः प्रहसन्निव तान् नृपान् ॥ ३६

भीष्मः—

नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ३६॥

सञ्जयः—

ततस्तु भरतश्रेष्ठम् अभ्यभाषत पाण्डवम् ।
धनञ्जयं महाबाहुं सर्वलोकमहारथम् ॥ ३७॥

भीष्मः—

धनञ्जय महाबाहो शिरो मे प्रतिलम्बते ।
दीयतामुपधानं मे यद् युक्तमिह मन्यसे ॥ ३८॥

सञ्जयः—

स सन्न्यस्य महच्चापम् अभिवाद्य पितामहम् ।
नेत्राभ्यामश्रुपूर्णाभ्याम् इदं वचनमब्रवीत् ॥ ३९॥

अर्जुनः—

आज्ञापय कुरुश्रेष्ठ सर्वधर्मविदां वर ।
प्रेष्योऽहं तव दुर्धर्षे क्रियतां किं पितामह ॥ ४०॥

सञ्जयः—

तमब्रवीच्छान्तनवश् शिरो मे तात लम्बते ।
[1]दीयतामुपधानं मे यद् युक्तमिह मन्यसे ॥ ४१॥

उपधानं कुरुश्रेष्ठ उपधेहि ममार्जुन ।
वीरशय्यानुरूपं वै शीघ्रं वीर प्रयच्छ मे ॥ ४२॥

त्वं हि तात समर्थो वै श्रेष्ठस्सर्वधनुष्मताम् ।
क्षत्रधर्मस्य वेत्ता च बुद्धिसत्त्वगुणान्वितः ॥ ४३॥

फल्गुनोऽथ तथेत्युक्त्वा व्यवसायपुरोगमः ।
गृह्यानुमन्त्र्य गाण्डीवं शरांश्च नतपर्वणः ॥ ४४॥

अनुमान्य महात्मानं भरतानां पितामहम् ।
त्रिभिस्तीक्ष्णैर्महावेगैर् उदगृह्णाच्छिरश्शरैः ॥ ४५॥

अभिप्राये तु विदिते धर्मात्मा सव्यसाचिना ।
आश्वस्य भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ॥ ४६॥

उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम् ।
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम् ॥ ४७॥

---

1. अ-क—नास्तीदमर्धम्

भीष्मः—

शयनस्यानुरूपं मे उपधानं त्वया कृतम् ।
यद्यन्यथा प्रपद्येथाश् शपेयं त्वामहं पुरा ॥ ४८॥

एवमेतन्महाबाहो धर्मेषु परिनिश्चितम् ।
स्वप्तव्यं क्षत्रियेणाजौ शरतल्पगतेन वै ॥ ४९॥

सञ्जयः—

एवमुक्त्वा तु बीभत्सुं सर्वांस्तानब्रवीद्वचः ।
राज्ञश्च राजपुत्रांश्च पाण्डवैरभिसंवृतान् ॥ ५०॥

भीष्मः—

शयेऽहमस्यां शय्यायां यावदावर्तनाद्रवेः ।
ये तदा धारयिष्यन्ति ते मां द्रक्ष्यन्ति वै नृपाः ॥ ५१॥

दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः ।
अर्चिष्मान् प्रतपँल्लोकान् रथेनोत्तमतेजसा ॥ ५२॥
रक्षेऽहं वै मम प्राणान् सुहृदस्सुप्रियानिव ॥ ५३
परिखा खन्यतामत्र ममावसथतो नृपाः ।
उपासिष्ये विवस्वन्तम् एवं शरशताचितः ॥ ५४
उपारमध्वं सङ्ग्रामाद् वैरमुत्सृज्य पार्थिवाः ॥ ५४॥

सञ्जयः—

उपातिष्ठंस्तदा वैद्याश् शल्योद्धरणकोविदाः ।
सर्वोपकरणैर्युक्ताः कुशलास्साधुशिक्षिताः ॥ ५५॥
तान् दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव ॥ ५६

भीष्मः—

दत्तदेया विसृज्यन्तां पूजयित्वा चिकित्सकाः ।

एवं गतस्य नेदानीं वैद्यकार्यमिहास्ति मे ॥ ५७

क्षत्रधर्मप्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ।

एष धर्मो महीपालाश् शरतल्पगतस्य मे ॥ ५८

एभिरेव शरैश्चाहं दग्धव्योऽग्नौ नराधिपाः ॥ ५८॥

सञ्जयः—

तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव ।

वैद्यान् विसर्जयामास पूजयित्वा यथार्हतः ॥ ५९॥

ततस्ते विस्मयं जग्मुर् नानाजनपदेश्वराः ।

स्थितं धर्मे परे दृष्ट्वा भीष्मं त्वमिततेजसम् ॥ ६०॥

उपधानं ततो दत्त्वा पितुस्तव जनेश्वर ।

सहिताः पाण्डवास्सर्वे कुरवश्च महारथाः ॥ ६१॥

उपगम्य महात्मानं शयानं शयने शुभे ।

तेऽभिवाद्य ततो भीष्मं कृत्वा चापि प्रदक्षिणम् ॥ ६२॥

विधाय रक्षां भीष्मस्य सर्व एव समन्ततः ।

वीरास्स्वशिबिराण्येव ध्यायन्तः परमातुराः ॥ ६३॥

निवेशायाभ्युपागच्छन् सायाह्ने रुधिरोक्षिताः ॥ ६४

निविष्टान् पाण्डवांश्चापि प्रीयमाणान् महारथान् ।

भीष्मस्य पतनं दृष्ट्वा चोपगम्य महारथम् ॥ ६५

उवाच देवकीपुत्रो धर्मपुत्रं युधिष्ठिरम् ॥ ६५॥

श्रीभगवान्—

दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः ।
अवध्यो मानुषैरेव सत्यसन्धो महारथः ॥ ६६॥

अथवा दैवतैः पार्थ सर्वशस्त्रास्त्रपारगः ।
त्वां तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुषा ॥ ६७॥

सञ्जयः—

एवमुक्तो धर्मराजः प्रत्युवाच जनार्दनम् ॥ ६८

युधिष्ठिरः—

तव प्रसादाद्विजयः क्रोधात् तव पराजयः ।
त्वं हि नश्शरणं कृष्ण भक्तानामभयङ्करः ॥ ६९

अनाश्चर्यो जयस्तेषां येषां त्वमसि केशव ।
रक्षिता समरे नित्यं नित्यं चापि हिते रतः ॥ ७०
सर्वथा त्वां समासाद्य रक्षितास्तव तेजसा ॥ ७०॥

सञ्जयः—

एवमुक्तः प्रत्युवाच स्मयमानो जनार्दनः ॥ ७१

श्रीभगवान्—

त्वय्येवैतद्युक्तरूपं वचनं पार्थिवोत्तम ॥ ७१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ ६४ ॥ भीष्मवधपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
[ अस्मिन्नध्याये ७१॥ श्लोकाः ]

## ॥ सप्तदशोत्तरशततमोऽध्यायः ॥

तृषार्तेन भीष्मेन पानीययाचनम् ॥ १ ॥ राजभिः कलशेनानीते जले भीष्मेण तन्निन्दनपूर्वकमर्जुनं प्रति याचनम् ॥ २ ॥ अर्जुनेन पर्जन्यास्त्रेण भूमिं भित्त्वोत्थापितसलिलधारया भीष्मस्य तृष्णाशमनम् ॥ ३ ॥ भीष्मेण दुर्योधनं प्रति अर्जुनप्रशंसनपूर्वकं पाण्डवैः सह शमोपदेशः ॥ ४ ॥

सञ्जयः—

व्युष्टायां तु तथा राजन् रजन्यां सर्वपार्थिवाः ।
पाण्डवा धार्तराष्ट्राश्च ह्यभिजग्मुः पितामहम् ॥ १
तं वीरशयने वीरं शयानं कुरुसत्तमम् ।
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् ॥ २
कन्याश्चन्दनचूर्णैश्च लाजैर्माल्यैश्च सर्वशः ।
[1]अवाकिरन् छान्तनवं तत्र गत्वा पितामहम् ॥ ३
स्त्रियो बालाश्च वृद्धाश्च प्रेक्षकाश्च पृथग्जनाः ।
तमभ्ययुश्शान्तनवं भूतानीव तमोनुदम् ॥ ४
तूर्याणि गणिका वीरास् तथैव नटनर्तकाः ।
उपानृत्यन् जगुश्चैव वृद्धं कुरुपितामहम् ॥ ५
उपागम्य च राजेन्द्र सन्नाहान् प्रतिमुच्य च ।
आयुधानि च निक्षिप्य सहिताः कुरुपाण्डवाः ॥ ६

1. ख—इदमर्धं नास्ति

अन्वासन्त सुदुर्धर्षं देवव्रतमरिन्दमम् ।
अन्योन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः ॥ ७

सा पार्थिवसमाकीर्णा समितिर्भीष्मसंयुता ।
शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम् ॥ ८

विबभौ च नृपाणां सा पितामहमुपासताम् ।
देवानामिव देवेशं पितामहमुपासताम् ॥ ९

भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ ।
अभितप्तश्शरैश्चैव नातिहृष्टमनाऽब्रवीत् ॥ १०

भीष्मः—

शराभितप्तकायोऽस्मि शस्त्रसन्तापमूर्च्छितः ।
पानीयमिति सम्प्रेक्ष्य राज्ञस्तान् प्रत्यभाषत ॥ ११

सञ्जयः—

ततस्ते क्षत्रिया राजन् समाजह्रुस्समन्ततः ।
भक्ष्यांश्चोच्चावचांस्तत्र वारिकुम्भांश्च शीतलान् ॥ १२

उपनीतं तु तद्दृष्ट्वा भीष्मश्शान्तनवोऽब्रवीत् ॥ १२॥

भीष्मः—

नाद्य शक्या मया भोक्तुं भोगाः केवलमानुषाः ।
अपक्रान्तो मनुष्येभ्यश्शरशय्यां गतो ह्यहम् ॥ १३॥
प्रतीक्षमाणास्तिष्ठामि निवृत्तिं शशिसूर्ययोः ॥ १४

सञ्जयः—

एवमुक्त्वा तदोवाच भीष्मश्शरशतैश्चितः ॥ १४॥

भीष्मः—

पयः पास्यामि गोपाला गोमयं न तु गोमयम् ।
गोमयेनाग्निवर्णेन गोमयं न तु गोमयम् ॥ १५॥

सञ्जयः—

एवमुक्त्वा शान्तनवो दीनवाक् सर्वपार्थिवान् ।
अर्जुनं द्रष्टुमिच्छामि इत्यभाषत पाण्डवान् ॥ १६॥

[1]अथोपेत्य महाबाहुर् [2]अर्जुनस्सर्वधर्मवित् ।
प्रदक्षिणीकृत्य तदा अभिवाद्य पितामहम् ॥ १७॥

अतिष्ठत् प्राञ्जलिर्भूत्वा किं ते कुर्मीति चाब्रवीत् ॥ १८

तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतस्स्थितम् ।
अब्रवीत् सर्वधर्मज्ञो भीष्मः प्रीतो धनञ्जयम् ॥ १९

भीष्मः—

दह्यते च शरीरं मे तापितोऽस्मि तवेषुभिः ।
मर्माणि परिदूयन्ते वदनं परिशुष्यति ॥ २०

छादनार्थं शरीरस्य प्रयच्छापो ममार्जुन ।
त्वं हि शक्तो महेष्वास दातुमापो यथाविधि ॥ २१

सञ्जयः—

अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान् ।

---

1. ब—स गत्वा त्वरितं दूतो कौन्तेयाय न्यवेदयत् । [अधिकः पाठः]
2. ख-ग-ब-ड-म—अयं पादोऽनन्तरश्च न स्तः

अधिज्यं गाण्डिवं कृत्वा व्याक्षिपत् तद्धनुर्महत् ॥ २२

[1]तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
वित्रेसुस्सर्वभूतानि श्रुत्वा सर्वे च पार्थिवाः ॥ २३

ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः ।
शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ २४

प्रदक्षिणीकृत्य तदा स सम्मन्त्र्य महारथः ।
पर्जन्यास्त्रेण बीभत्सुस् सर्वलोकस्य पश्यतः ॥ २५
अभिन्दत् पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे ॥ २५॥

उत्पपात ततो धारा विमला वारिणश्शुभा ।
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ॥ २६॥

अतर्पयत् ततः पार्थस् स तया जलधारया ।
भीष्मं कुरूणामृषभं दिव्यं दिव्यपराक्रमम् ॥ २७॥

कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ।
विस्मयं परमं जग्मुस् सुतास्तव नराधिप ॥ २८॥

तत् कर्म प्रेक्ष्य बीभत्सोर् अतिमानुषमद्भुतम् ।
सम्प्रावेपन्त कुरवो गावश्शीतार्दिता इव ॥ २९॥

विस्मयाच्चोत्तरीयाणि व्याविध्यन् सर्वतो नृपाः ।
शङ्खदुन्दुभिनिर्घोषस् तुमुलस्सर्वतोऽभवत् ॥ ३०॥

---

1. अ-क-ख—अर्धद्वयं नास्ति

तृप्तश्शान्तनवश्चापि राजन् बीभत्सुमब्रवीत् ।
सर्वपार्थिववीराणां सन्निधौ पूजयन्निव ॥ ३१॥

भीष्मः—

नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन ।
कथितो नारदेनासि पूर्वर्षिरमितद्युते ॥ ३२॥
वासुदेवसहायस्त्वं महत् कर्म करिष्यसि ।
[1]यन्नोत्सहेत देवेन्द्रस् सह देवैरपि ध्रुवम् ॥ ३३॥
विदुस्त्वां निधनं पार्थ सर्वक्षत्रस्य धन्विनः ।
धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु ॥ ३४॥
मनुष्यो जगति श्रेष्ठो गरुडः पक्षिणां वरः ।
सरसां सागरश्श्रेष्ठश् श्रेष्ठस्त्वमसि धन्विनाम् ॥ ३५॥
आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान् वरः ।
जातीनां ब्राह्मणश्श्रेष्ठश् श्रेष्ठस्त्वमसि धन्विनाम् ॥ ३६॥

न वै श्रुतं धार्तराष्ट्रेण वाक्यं
मयोच्यमानं विदुरेणासकृच्च ।
द्रोणेन रामेण जनार्दनेन
मुहुर्मुहुस्सञ्जयेनैव चोक्तम् ॥ ३७॥
परीतबुद्धिर्हि विसंज्ञकल्पो
दुर्योधनो नाभ्यनन्दद्वचो मे ।

1. अ-क—नास्तीदमर्धम्

स शेष्यते निहतोऽथाचिरेण
शास्त्रातिगो भीमबलाभिभूतः ॥　　३८॥

सञ्जयः—
ततश्श्रुत्वा तद्वचः कौरवेन्द्रो
दुर्योधनो दीनमना बभूव ।
तमब्रवीच्छान्तनवोऽभिवीक्ष्य
पुत्रं च राजंस्तव वीतमन्युः ॥　　३९॥

भीष्मः—
दृष्टं दुर्योधनैतत्ते तथा पार्थेन धीमता ।
जलस्य धारा जनिता शीतस्यामृतगन्धिनः ॥　　४०॥
एतस्य कर्ता लोकेऽस्मिन् नान्यः कश्चन विद्यते ॥　　४१
आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ।
ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः ॥　　४२
धातुस्त्वष्टुश्च सवितुस् सर्वाण्यस्त्राणि सर्वशः ।
सर्वस्मिन् मानुषे लोके ह्येको वेत्ति धनञ्जयः ॥　　४३
कृष्णो वा देवकीपुत्रो नान्यो वै वेद कश्चन ॥　　४३॥
अशक्याः पाण्डवास्तात युद्धे जेतुं कथञ्चन ।
अमानुषाणि कर्माणि यान्येतानि महात्मनि ॥　　४४॥
तेन सत्त्ववता सङ्ख्ये शूरेणाहवशोभिना ।
जिष्णुना समरे राजन् सन्धिस्ते तात युज्यताम् ॥　　४५॥

यावत् कृष्णो महाबाहुस् स्वाधीनः कुरुसंसदि ।
तावत् पार्थेन शूरेण सन्धिस्ते तात युज्यताम् ॥ ४६॥

यावत् तिष्ठन्ति समरे हतशेषास्सहोदराः ।
नृपाश्च बहवो राजन् तावत् सन्धिः प्रयुज्यताम् ॥ ४७॥

यावच्चमूं न ते शेषां शरैस्सन्नतपर्वभिः ।
नाशयत्यर्जुनस्तावत् सन्धिस्ते तेन युज्यताम् ॥ ४८॥

निर्दहन्निव हि क्षत्रं क्रोधात् संरक्तलोचनः ।
युधिष्ठिरो रणे तावत् सन्धिस्ते तात युज्यताम् ॥ ४९॥

नकुलस्सहदेवश्च भीमसेनश्च पाण्डवः ।
यावत् क्षत्रं न निघ्नन्ति तावत् सन्धिः प्रयुज्यताम् ॥ ५०॥

[1]यावच्चमूं महाराज नाशयन्ति न पाण्डवाः ।
तावत् ते पाण्डवैस्सार्धं सौभ्रात्रमभिरोचताम् ॥ ५१॥

युद्धं मदन्तमेवास्तु तावत् संशाम्य पाण्डवैः ॥ ५२

एतत् ते रोचतां वाक्यं यदुक्तोऽसि मयाऽनघ ।
एतत् क्षममहं मन्ये तव चैव कुलस्य च ॥ ५३

त्यक्त्वा मन्युं त्वमुपशाम्यस्व पार्थैः
पर्याप्तमेतद्यत् कृतं फल्गुनेन ।

1. अ-क—अर्धद्वयं नास्ति

[1]भीष्मस्यान्ते सुभृशं सौहृदोऽस्तु
न ते प्रलोभस्साधु राजन् प्रसीद ॥ ५४

राज्यस्यार्धं दीयतां पाण्डवानाम्
इन्द्रप्रस्थे धर्मराज्ञो निवासः ।
मा मित्रध्रुक् पार्थिवानां जघन्यः
पापां कीर्तिं प्राप्स्यसे कौरवेन्द्र ॥ ५५

ममावसाने शान्तिरस्तु प्रजानां
सङ्गच्छन्तां पाण्डवाः प्रीतिमन्तः ।
पिता पुत्रं मातुलं भागिनेयो
भ्राता चैव भ्रातरं प्रैतु राजन् ॥ ५६

न चेदेतत् प्राप्तकालं वचो मे
मोहाविष्टः प्रतिपद्यस्व बुद्ध्या ।
दिष्टं गन्ता त्यक्तधर्मार्थकामः
पुत्रज्ञातिभ्रातृसंबन्धिहीनः ॥ ५७

एवं वोऽस्तु विदितं कौरवेयास्
सत्यामेतां भारतीमीरयामि ॥ ५७॥

---

1. अ-क—ममावसाने शान्तिरस्तु प्रजानाम्
अद्यालभन्तां पाण्डवाः प्रीतिमच्याम् ।
पिता पुत्रं मा वधीद्भागिनेयो
नावध्येतां मातुलस्तौ समेतौ ॥
भ्राता योद्धुं युधि बुद्धिं न कुर्याद्
भ्राता त्वन्ये स्नेहयुक्ता भवेयुः । [पाठान्तरम्]

सञ्जयः—

एतद्वाक्यं सौहृदादापगेयो
मध्ये राज्ञां भारतीं श्राहयित्वा ।
तूष्णीमासीच्छल्यसन्तप्तमर्मा
स्मृत्वाऽऽत्मानं वेदनां सन्निगृह्य[1] ॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां भीष्मपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ६४ ॥ भीष्मवधपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[ अस्मिन्नध्याये ५८॥ श्लोकाः ]

---

## ॥ अष्टादशोत्तरशततमोऽध्यायः ॥

अपगतेषु राजसु कर्णेन रहसि भीष्ममेत्य तदभिवादनम् ॥ १ ॥ भीष्मेण कर्णं प्रति तस्य कुन्तीसुतत्वोक्त्या पाण्डवैः सह संगमचोदना ॥ २ ॥ कर्णेन सयुक्तिकं पाण्डवैः सङ्गमस्य दुष्करत्वमभिधाय भीष्मक्षमापनपूर्वकं स्वावासगमनम् ॥ ३ ॥

---

सञ्जयः—

ततस्ते पार्थिवास्सर्वे जग्मुस्स्वानालयान् प्रति ।
तूष्णीं भूते महाराज भीष्मे शन्तनुनन्दने ॥ १

श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः ।
ईषदागतसन्त्रासस् त्वरयोपजगाम ह ॥ २

---

1. अ-क—निमील्य नेत्रे मनसा संनिगृह्य
स्थितस्तूष्णीमिन्द्रियाण्यद्य राजन् ॥ [अधिकः पाठः]

स ददर्श महात्मानं शरतल्पगतं तदा ।
वीरशय्यागतं वीरं गाङ्गेयं पुरुषर्षभम् ॥ ३

निमीलिताक्षं तं वीरं साश्रुकण्ठस्तदा वृषा ।
अभ्येत्य पादयोस्तस्य निपपात महाद्युतिः ॥ ४

राधेयोऽहं कुरुश्रेष्ठ नित्यमक्षिगतस्तव ।
द्वेष्योऽत्यन्तमनागास्सन्निति भीष्ममुवाच ह ॥ ५

तच्छ्रुत्वा कुरुवृद्धस्तु बली संवृतलोचनः ।
शनैरुद्वीक्ष्य सस्नेहम् इदं वचनमब्रवीत् ॥ ६

राधेयं मन्युरहितस् समुत्सार्य च रक्षिणः ।
पितेव पुत्रं गाङ्गेयः परिरभ्यैकबाहुना ॥ ७

भीष्मः—

न विप्रियं ममैवेह यत् स्पर्धेथा मया सह ।
यदि मां नाभिगच्छेथा न ते श्रेयो भवेद्ध्रुवम् ॥ ८

कौन्तेयस्त्वं न राधेयो [1]न तवाधिरथः पिता ।
सूर्यजस्त्वं महाबाहो विदितोऽसि सदा मम ॥ ९

कृष्णद्वैपायनाच्चैव तेजसा च न संशयः ।
न च द्वेषोऽस्ति मे तात त्वयि सत्यं ब्रवीमि ते ॥ १०

तेजोवधनिमित्तं तु परुषं त्वाऽहमब्रुवम् ।

1. अ-क—अयं पादोऽनन्तरश्च न स्तः

अकस्मात् पाण्डवान् हि त्वं द्विषसीति मतिर्मम ॥ ११
तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि ।
जानामि समरे वीर्यं शत्रुभिर्दुस्सहं तव ॥ १२
ब्रह्मण्यतां च शौर्यं च दाने च परमां मतिम् ॥ १२॥
न त्वया सदृशः कश्चित् पुरुषेष्वमरोपम ।
कुलभेदभयाच्चाहं सदा परुषमुक्तवान् ॥ १३॥
इष्वस्त्रे भारसन्धाने लाघवेऽस्त्रबले तथा ।
सदृशः फल्गुनेनासि कृष्णेन च महात्मना ॥ १४॥
कर्ण भूमेः परं गत्वा त्वयैकेन धनुष्मता ।
कन्यार्थे कुरुराजस्य राजानो मृदिता युधि ॥ १५॥
तथाऽतिबलवान् राजा जरासन्धो महाबलः ।
तेजसा यशसा धैर्याच्च त्वया सदृशो भवेत् ॥ १६॥
ब्रह्मण्यस्सत्यवादी त्वं तेजसाऽर्कसमो ह्यसि ।
देवगर्भो भवान् सङ्ख्ये मनुष्येष्वधिको भवान् ॥ १७॥
व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुरा कृतः ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ १८॥
सोदराः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन ।
सङ्गच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम् ॥ १९॥
मया भवतु निर्वृत्तं वैरमादित्यनन्दन ।

[1]पृथिव्यां सर्वराजानो भवन्त्वद्य निरामयाः ॥ २०॥

कर्णः—

जानाम्येव महाप्राज्ञ सर्वमेतन्न संशयः ।
यथा वदसि दुर्धर्ष कौन्तेयोऽहं न सूतजः ॥ २१॥

अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः ।
[2]पुरा दुर्योधनेनाहं स्नेहं वै कृतवान् मुदा ॥ २२॥

तव कार्यं करिष्यामि यद्यत् सर्वं दुरासदम् ।
इत्येवं वै प्रतिज्ञातं वचनं वै सुयोधने ॥ २३॥

तत् सत्यवचनं चाद्य न मिथ्या कर्तुमुत्सहे ॥ २४

वसु चैव शरीरं च पुत्रदारास्तथा यशः ।
सर्वं दुर्योधनस्यार्थे त्यजेयं भूरिदक्षिण ॥ २५

कोपिताः पाण्डवा नित्यं मयाऽऽश्रित्य सुयोधनम् ।
[3]अवश्यभावी यश्चार्थस् स न शक्यो निवर्तितुम् ॥ २६

दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ २६॥

पृथिवीक्षयशंसीनि निमित्तानि पितामह ।
भवद्भिरुपलब्धानि कथितानि च संसदि ॥ २७॥

---

1. अ-क—यत् पुरा विकृतं चाद्य निवृत्तं वैरमात्मनः । [अधिकः पाठः]
2. ख-घ-ङ-म—इदमर्धचतुष्टयं नास्ति
3. अ-क—अर्धपञ्चकं नास्ति

पाण्डवा वासुदेवश्च विदिता मम सर्वशः ॥ २८
अजेयाः पुरुषैः पार्था इति पश्चात् सहामहे ।
[1]अधर्म्यं व्याधिमरणं क्षत्रियस्य पितामह ॥ २९
अनुजानीहि मां तात युद्धाय धृतनिश्चयम् ।
अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः ॥ ३०
दुरुक्तस्त्वं प्रतीपं मे संरम्भाच्चापलात् तथा ।
यन्मयाऽपकृतं वीर तत् तत् क्षन्तुं त्वमर्हसि ॥ ३१

भीष्मः—

अपमार्ष्टुं न चेच्छक्यं वैरमेतत् सुदारुणम् ।
अनुजानामि कर्ण त्वां युध्यस्व स्वर्गमाप्नुहि ॥ ३२
निर्मन्युर्गतसंरम्भः कृतकर्मा रणे भव ।
यथाशक्ति यथोत्साहं सर्वपौत्रेषु वृत्तवान् ॥ ३३
अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि ।
क्षत्रधर्मजिताँल्लोकान् अवाप्स्यसि न संशयः ॥ ३४
युध्यस्व निरहङ्कारो बलवीर्यव्यपाश्रयः ।
धर्म्याद्धि युद्धादधिकं क्षत्रियस्य न विद्यते ॥ ३५
प्रशमे हि कृतो यत्नस् सुमहान् सुचिरं मया ।
न चैव शक्तस्तं कर्तुं यतो धर्मस्ततो जयः ॥ ३६

1. अ-क—नासीदमधर्म्

सञ्जयः—

इत्युक्तवन्तं गाङ्गेयम् अभिवाद्य प्रसाद्य च ।
राधेयो रथमारुह्य प्रायात् तव सुतं प्रति ॥ ३७

वैशम्पायनः—

[1]इत्येतद्बहुवृत्तान्तं भीष्मपर्वाखिलं मया ।
शृण्वते ते महाराज प्रोक्तं पापहरं शुभम् ॥ ३८

यश्श्रावयेत् सदा राजन् ब्राह्मणान् वेदपारगान् ।
श्रद्धावन्तश्च ये चापि श्रोष्यन्ति मनुजा भुवि ॥ ३९

विधूय सर्वपापानि विहायान्ते कलेबरम् ।
प्रयान्ति तत् पदं विष्णोर् यत् प्राप्य न निवर्तते ॥ ४०

[2]तस्मात् सर्वप्रयत्नेन भारतं भरतर्षभ ।
शृणुयात् सिद्धिमन्विच्छन्निह चामुत्र मानवः[3] ॥ ४१

---

1. अ-क—अर्धाष्टकं नास्ति
2. घ—अर्धद्वयं नास्ति
3. अ-क—भीष्मपर्वणि राजेन्द्र कथान्ते कुरुनन्दन ।
ब्राह्मणान् भोजयेद्भक्त्या वस्त्रालङ्कारभोजनैः ॥
वक्तारं पूजयेद्भक्त्या वस्त्रालङ्करणादिभिः ।
सफलं स्यात् तच्छ्रवणं भगवान् मोदते भृशम् ॥
[ अधिकः पाठः ]

[1]भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् ।
भीष्मपर्वणि राजेन्द्र दद्यात् पानीयमुत्तमम् ॥[2]　　४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
भीष्मपर्वणि अष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥
॥ ६४ ॥ भीष्मवधपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

भीष्मवधपर्व समाप्तम् ॥　　समाप्तमिदं भीष्मपर्व ॥

1. ख—कोश एकस्मिन्नेव इदमर्धद्वयं वर्तते
2. घ—वैशम्पायनः—
सञ्जयोऽपि महाराज द्रष्टुं द्रोणस्य वैशसम् ।　　[अधिकः पाठः]

---

॥ अस्मिन् भीष्मपर्वणि ५८८४ श्लोकाः ॥

---

अतःपरं द्रोणपर्व भविष्यति । तस्यायमाद्यश्श्लोकः ॥

---

जनमेजयः—

तमप्रतिमसत्त्वौजोबलवीर्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥　　१

---

Printed by V. Venkateswara Sastrulu of
V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.

॥ श्रीरस्तु ॥

महाभारतस्य भीष्मपर्वस्थानां विषयाणाम्

# अक्षरमातृकाक्रमेण सूचनम्



॥ श्रीः ॥

# महाभारतभीष्मपर्वस्थानामशुद्धानां शोधनम्

अस्मिन् पर्वणि आदितः अष्टानामध्यायानां समाप्तिवाक्ये 'वैयासिक्याम्' इत्यत्र अनुस्वारस्थाने मकारपातः स्खलित इति ज्ञेयम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३ | ६ | हृष्टास् | हृष्टास् |
| ५ | २२ | ११३ | २१३ |
| ,, | २३ | ११३ | २१३ |
| १३ | ४ | सम्पन्नः | सम्पन्नाः |
| २४ | १६ | स्मृता | स्स्मृता |
| २५ | ९ | लोकानश्नुते | स लोकानश्नुते |
| ,, | ६ | परिणाये | परिणाहो |
| ३८ | १० | प्रियशर्नाः | प्रियदर्शनाः |
| ४३ | १२ | शिबिरौ | शिबेरौ |
| ४७ | १६ | गोपरोष्ट्रा | गोपराष्ट्रा |
| ४९ | १२ | दारुणा | दारुणास् |
| ५० | ७ | तस्या | तस्यां |
| ५१ | १३ | ततस्पुष्यं | ततःपुष्यं |
| ५५ | ११ | वर्षकाले | वर्षाकाले |
| ५८ | २ | युक्तास् | युक्ताश् |
| ६८ | १४ | वर्षन् | वर्षञ् |

| पुटम् | पंक्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ७८ | ३ | कुशलाश् ते | कुशलास् ते |
| ८२ | १८ | महीपाला | महीपालान् |
| ८९ | ४ | साहस्राः | साहस्रा |
| ९४ | ६ | बर्हिणः | वर्हिणः |
| ११७ | १० | महाराजन् | महाराज |
| १९९ | १५ | यक्षश्च | यक्षश्च |
| २१३ | १८ | प्रणष्ट | प्रनष्ट |
| २१६ | १२ | सैन्यानां आवृणोत् | सैन्यानाम् आवृणोत |
| २३४ | ७ | मृगुयां चक्रिरे | मृगयांचक्रिरे |
| २३५ | १२ | तालेण | तालेन |
| २४२ | ५ | बिभ्रत् शङ्खं | बिभ्रच् छङ्खं |
| २५२ | ५ | यूह्य | व्यूह्य |
| २५३ | ६ | प्रहरणस् | प्रहरणास् |
| २६० | २० | कृन्तन् शस्त्रैः | कृन्तञ् शस्त्रैः |
| २६७ | १७ | लाघवाद्ध्वंसयामास | लाघवाद् ध्वंसयामास |
| २९० | ९ | काले | काले। |
| ३१५ | ११ | समुदीयमार्णम् | समुदीर्यमाणम् |
| ३१९ | १६ | वाह्लोर् | बाह्लोर् |
| ३२३ | १८ | व्यथया चकार | व्यथयांचकार |
| ३२५ | १५ | मज्जास्थितक | मज्जास्थिक |
| ३३५ | ३ | मुखाभिसञ्जुः | मुखाऽभितस्थुः |

| पृष्टम् | पंक्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३३५ | ११ | रथानाम् स | रथानां स |
| ३४७ | ३ | शिपा इव | शिखा इव |
| ३५९ | १५ | प्राग्जोतिष | प्राग्ज्योतिष |
| ३६० | १३ | भव | भय |
| ३६१ | ३ | सततस्तदा | सततं तदा [याः |
| ३८७ | १७ | अक्षौहिण्या समग्रायाः | अक्षौहिण्यास् समग्रा- |
| ३८९ | १० | न्नाभ्यपद्यत | न्नभ्यपद्यत |
| ४१५ | ३१ | स्रवद्रक्तो | स्रवद्रक्तौ |
| ४२५ | १३ | राजन् तत् | राजंस् तत् |
| ४३१ | १३ | घाषैः | घोषैः |
| ४४२ | १८ | दाशर्ह | दाशार्ह |
| ४४८ | ८ | बाणान् शतानीकः | बाणाञ् शतानीकः |
| ४५५ | १८ | त्रिगर्तराजा | त्रिगर्तराजो |
| ४५८ | १० | प्रत्यङ्मुखे | प्रत्यङ्मुखो |
| ४६४ | १० | राजन् शङ्खं | राजञ् शङ्खं |
| ४६५ | १९ | राजन् तदा | राजंस् तदा |
| ४७० | १४ | स्वार्जितान् लोकान् | स्वार्जिताँल्लोकान् |
| ४७६ | ३ | क्रुद्धस् शरं | क्रुद्धश् शरं |
| ४८० | १७ | करवर्षः | करकर्षः |
| ५०१ | १३ | वीदित्र | वादित्र |
| ५०४ | ४ | युधिष्टिरो | युधिष्ठिरो |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ५२१ | ३ | हर्यैघाश्च | हर्योघाश्च |
| ५२६ | १० | वीरच् छाद्यमानः | वीरश् छाद्यमानः |
| ५४३ | १० | सार्थं | सार्धं |
| ५४९ | १६ | निजघान+परवारितः | निजघान+परिवारितः |
| ५५९ | १६ | सृकणी | सृक्किणी |
| ५६८ | १४ | पुङ्खैः राजतैश्च | पुङ्खै राजतैश्च |
| ५७३ | ५ | न्यविशन्ति | न्यविशन्त |
| ५७६ | ८ | सार्थं | सार्धं |
| ५७७ | १८ | सर्वान् जनान् | सर्वाञ् जनान् |
| ६१५ | १८ | गृह्णिषे | गृह्णीषे |
| ६२७ | १७ | दणरिव | दण्डैरिव |
| ६३९ | ७ | बध्यमानं | वध्यमानं |
| ६५३ | ९ | पाण्डवास्मह | पाण्डवास्सह |
| ६६० | १६ | सादयंत्वं | सादयस्व |
| ६६८ | १४ | प्रेत्सुं | प्रेप्सुं |
| ६७२ | १७ | सञ्ज्ञां | संज्ञां |
| ७२४ | १० | नाध्यगाच्छद्वै | नाध्यगच्छद्वै |
| ७३२ | १३ | दारणीम् | दारिणीम् |